॥ श्रीः ॥

महाकवि श्रीहर्षदेवविरचितम्

# नागानन्दम्

## नाटकम्



'पीयूषवर्षिणी' व्याख्यया समलङ्कृतम्

---

काशीस्थ

शारदाभवनात् समुल्लसितम्

---

१९३१

॥ श्रीः ॥

# नागानन्दम् ।

## प्रथमोऽङ्कः ।

श्रीदुर्गा-माधव-गणेशाः पान्तु ।

टीकाकृन्मङ्गलाचरणम् ।

श्रीमत् पदाब्जयुगलं जगदम्बिकाया
भक्त्या प्रणम्य परया शुभनाटकेऽस्मिन् ।
श्रीहर्षदेवकविवर्य्यकृतेऽस्मि नागा—
नन्दे मनोहरतरां विनतोमि टीकाम् ॥ १ ॥

टीकाऽस्य नाटकवरस्य चकास्ति बह्वी
यद्यप्यथाऽपि सफलोऽस्तु मम प्रयासः ।
मातुर्दयालववशाज्जगदम्बिकायाः
संप्रार्थयाम इति केवलमेतदेव ॥ २ ॥

नागानन्दमिति । नागानामहीनां ( पूर्वंमृतानामिति शेषः ) आनन्दः (पुनर्जीवनलाभात्मको) वर्णितो यत्रेति व्युत्पत्त्या ग्रन्थस्येदमन्वर्थं नाम, श्लिष्टञ्च—नागानां नागवंशीयानां (काश्मीरक्ष्मापतीनाम्) आनन्दो वर्णितो यत्रेति व्युत्पत्तेः । एवञ्च ग्रन्थस्यैतन्नाम्ना गर्भितार्थप्रकाशनात्

नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम् ।

इति दर्पणोक्तिरप्यनुकूलतामुपगच्छतीत्यवसेयम् ।

अङ्क इति । अङ्कयति लक्षयति रसभावप्रभृतीन् व्यञ्जयतीत्यङ्कः । ( अकि लक्षणेऽस्माद्धातोः पचाद्यच् ) । एतल्लक्षणं दर्पणोक्तं यथा—

प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ।
भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ॥
विच्छिन्नाऽवान्तरैकार्थः किञ्चित्संलग्नविन्दुकः ।
युक्तो न बहुभिः कार्यैर्वीजसंहृतिमान् नच ॥
नानाविधानसंयुक्तो नाऽतिप्रचुरपद्यवान् ।
आवश्यकानां कार्याणामविरोधाद्विनिर्मितः ॥

## नान्दी ।

नाऽनेकदिननिर्वर्त्यकथया सम्प्रयोजितः ।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥
दूराऽऽह्वानं वधो युद्धं राज्यदेशादिविप्लवः ।
विवाहो भोजनं शापोत्सर्गौं मृत्यूरतं तथा ॥
दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीडाकरञ्च यत् ।
शयनाधरपानादि नगराद्यवरोधनम् ॥
स्नानाऽनुलेपनं चैभिर्वर्जितो नाऽतिविस्तरः ।
देवीपरिजनादीनाममात्यवणिजामपि ॥
प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः ।
अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः ॥

नान्दीति । नन्दयति आनन्दयति प्रसादयतीति यावत् स्तुत्या देवतादीन् आशिषा च सामाजिकान् या सा नान्दी । नन्द्यन्ते प्रसाद्यन्ते ययेति विग्रहो वा । ( नन्दयतेर्णिजन्तात्कर्तरि अच् ततोऽण् स्वार्थिको—ङीप् च ) । सा च विघ्ननिवारणहेतोर्नटैर्विधीयमाना मंगलस्तुतिरूपा बोध्या । तदुक्तमेतल्लक्षणं दर्पणे—

आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥

इति । नाट्यप्रदीपोक्तलक्षणं यथा—

नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः ।
यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेह नान्दी ॥

इति । अपि च

देवद्विजनृपादीनामाशीर्वादपरायणा ।
नन्दन्ति देवता यस्मात्तस्मान्नान्दीति कीर्त्तिता ॥

इति । प्रकृतेऽष्टपदात्मिका नान्दी । अष्टभिर्वापदैसतेत्युक्तेः । कश्चित्तु—

नान्दीं पदैर्द्वादशभिरष्टभिर्वाऽप्यलंकृताम् ।
सूत्रधारः पठेत्तत्र मध्यमं स्वरमास्थितः ॥
तत्संख्यातैर्भवेन्नान्दी वाक्यैः क्वापि विवक्षया ।
समपादतया नान्दी भवेदिति च केचन ॥

इत्युक्तदिशा द्वादशपदात्मिकाया ( वाक्यात्मिकायाश्च ) अष्टपदात्मिकाया ( वाक्यात्मिकायाश्चैव ) तस्याः प्रामाण्यमवधार्यते तथाऽपि षड्वाक्यात्मिकाया अपि नान्द्या वक्ष्यमाणप्रमाणवचनानुरोधेन प्रामाण्ये बाधकाभावात् । तथा हि—

❀ ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षण
पश्यानङ्गशरातुरं जनमिमं त्राताऽपि नो रक्षसि ।

पदैर्द्वादशभिः षड्भिरष्टभिर्वाऽप्यलंकृताम् ।
मध्यमस्वरसंयुक्तां ततो नान्दीमुदीरयेत् ॥

इति । अत्र पदशब्देन वाक्यैकस्वरूपमप्युच्यते । तदुक्तम्—

श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे ।
परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे ॥

इति । तथा च नाटकेऽस्मिन् श्लोकद्वये प्रत्येकं वाक्यषट्केन निबद्धत्वान्नान्दीलक्षणयोग उपपन्न इत्याह, तन्न, प्रत्येकं षड्भिर्वाक्यैरनिबद्धत्वात् । दशरूपकादिग्रन्थोक्त-देवताप्रीतिहेतुभूत-द्वाविंशतिसंख्यकप्रत्याहारादीनामङ्गान्तराणां सद्भावेऽपि—

प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि ।
तथाऽप्यवश्यकर्त्तव्या नान्दी विघ्नोपशान्तये ॥

इति दर्पणोक्तवचनानुरोधात् नान्द्या एव समादर इत्यवसेयम् ।

अथ ( समाप्तिकामो मङ्गलमाचरेदि ) ति श्रुतिवाक्याऽनुरोधात् मङ्गलस्याऽवश्यकर्त्तव्यतामवधार्य प्रारिप्सितपरिसमाप्तिकामः कविकुलकमलदिवाकरः श्रीहर्षदेवो विविधविघ्ननिरासार्थमाशीर्वादान्वितस्तुतिरूपमङ्गलमादौ ग्रन्थस्याऽऽचरति—ध्यानव्याजमिति, कामेनेति च श्लोकद्वयेन । ध्यानं समाधिरेव व्याजश्छलं तम् उपेत्य प्राप्य आश्रित्येति यावत् ( उपपूर्वकात् इण् गतावित्यस्माल्ल्यप् । योगमार्गप्रदर्शितां पद्मासनबन्ध-नेत्रनिमीलनादिद्वारा छद्मना समाधिरूपां सप्तमीमवस्थां विधाये (बहिः प्रदर्श्ये) त्यर्थः । काम् अलौकिकसौभाग्यवतीं ( नायिकामिति शेषः ) चिन्तयसि स्मरसि । नाऽतिरसविदो भवतो योगमार्गाश्रयणं युक्त-

❀ संक्षिप्तव्याख्या—

( त्वमिति कर्तृपदमध्याहार्यम् ) त्वं ध्यानं समाधिरूपं व्याजं छलम् उपेत्य आश्रित्य कां ( नायिकां ) चिन्तयसि स्मरसि चक्षु र्नेत्रम् उन्मील्य विकाश्य क्षणम् एकवारं ( माम् ) पश्य अवलोकय, अनङ्गशरातुरं कामाशुगविह्वलम् इमम् त्वदन्तिके स्थितं जनम् ( माम् ) त्राता रक्षकोऽपि नो रक्षसि नैवाऽस्मत्पीडामपहरसीत्यर्थः । त्वं मिथ्या कारुणिकः अतथ्यकारुण्यवान् असि, त्वत्तः त्वदपेक्षया अन्यो भिन्नः स कः पुमान् पुरुषो निर्घृणतरो निर्दयः अस्ति न कोऽपीत्यर्थः । इति इत्थं मारवधूभिः सुरयुवतिभिः सेर्ष्यं सक्रोधं यथा तथा अभिहित उक्तो बुद्धो ज्ञानी जिनो बुद्धमतावलम्बी मुनिः वो युष्मान् पातु रक्षतु ॥१॥

मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः स कोऽन्यः पुमान्
सेर्ष्यं मारवधूभिरित्यभिहितो बुद्धो जिनः पातु वः ॥ १ ॥

मिति भावः। परवञ्चनार्थं रहसि छद्माश्रयणं तु युक्तमेवेत्यभिप्रेत्य पूर्वप्रश्नस्योत्तरमलभमाना (मारवध्वः) पुनरभ्यर्थयन्ति—उन्मील्येति। चक्षुर्नेत्रं (लोचन नयनं नेत्रमीक्षणं चक्षुरक्षिणीत्यमरः) एकस्याऽपि चक्षुषः समुन्मीलनान्मनोरथलाभे किं पुनश्चक्षुर्द्वयसमुन्मीलनेनेत्यभिप्रायेण चक्षुरित्येकवचनान्तप्रयोगः। उन्मील्य विकास्य (उत्पूर्वकात् मील निमीलने इत्यस्मात् ल्यप्) क्षणं सकृत् किञ्चित्कालं वा पश्य अवलोकय रसभावदृष्ट्या मां सम्भावय न तु ज्ञानदृष्ट्या। (अभ्यर्थ्यमानाऽपि नातिविट्टता स्यादि) ति कामसूत्रमपि प्रतिकूल्य निर्व्रीडमभ्यर्थ्यंना ममेयमिति भावः। अविद्यमानमङ्गं यस्याऽसावनङ्गः कामः (कन्दर्पो दर्पकोऽनङ्ग इत्यमरः) तस्य शरा बाणाः ❀सम्मोहनादयस्तैः आतुरं विद्धं पीडितमिति यावत्। त्वयि प्रेमातिशयेन कामबाणपीडितं त्वदलाभे सर्तुमुद्यतं न केवलं सस्पृहमेवेति भावः। इमम् त्वदन्तिके स्थितं जनं (मामिति शेषः) जनशब्दस्याऽत्र बहुत्वार्थकत्वात् इमान् जनान् (अस्मान्) इत्यर्थो बोध्यः। न हि चक्षुरुन्मीलनात्ते काऽपि हानिरस्मत्प्राणरक्षा चेति त्वाम्प्रत्यभ्यर्थनेति भावः। सत्यप्येवमुत्तरमलभमानाः पुनः साऽधिक्षेपं प्रार्थयन्ति—त्राताऽपि नो रक्षसि। त्राता (त्रायतेस्तृच्) रक्षकोऽपि, मदनशरातुरनायिकारक्षणे कामुकपुरुषस्यैवाधिकारस्तथाविधस्त्वमिति भावः। नो रक्षसि नाऽऽलिङ्गनादिनाऽस्मत्काममन्यथामपहरसीत्यर्थः। पुनरप्युत्तरमददतस्प्रत्यधिक्षेपगर्भसुक्तिः—मिथ्या कारुणिकोऽसि। त्वं कारुणिको दयाशीलोऽसि इति यत् तत् मिथ्या तव कारुणिकत्वमलीकमित्यर्थः। (करुणा सञ्जाताऽस्येति विग्रहे जातार्थे ठक्)। (कारुण्यं करुणा घृणेत्यमरः) कारुणिकस्य दीनरक्षकत्वेन जगति प्रसिद्ध्या तदभावात् कारुणिकत्वं तव खपुष्पप्रायमेवेति भावः। अथाऽप्युक्तहेतोर्भूयो दोषमुद्घोषयन्ति—निर्घृणतरः। त्वत्तः अन्योऽपरः कः पुमान् निर्गता घृणा यस्याऽसौ निर्घृणः अतिशयेन निर्घृणो निर्घृणतरो दयाशून्य इत्यर्थः (अस्तीति शेषः) न कोऽपीत्यर्थः। इति इत्थं मारपीडिता वध्वो मारवध्वः (शाकपार्थिवादित्वान्मध्यमपदलोपी समासः) ताभिर्मारवधूभिः मदनशराऽऽकुलसुराङ्गनाभिरित्यर्थः। ईर्ष्यया सहितं सेर्ष्यं यथा तथा अभिहित उक्तः तिरस्कृत इत्यर्थः, बुद्धो ज्ञानी (भावक्तान्ताद्बोधार्थकाद्बुद्धशब्दात् बुद्धमस्याऽस्तीति विग्रहे अर्शादित्वादच्)। यद्वा बुद्धो बुद्धमताऽवलम्बी (सर्वज्ञः सुगतो बुद्ध इत्यमरः)

❀ सम्मोहनोन्मादनौ च स्तम्भनः शोषणस्तथा।
तापनश्चेति कामस्य पञ्च बाणाः प्रकीर्तिताः॥

अपिच—

ॐ कामेनाकृष्य चापं हतपटुपटहावल्गिभिर्मारवीरै-
र्भ्रूभङ्गोत्कम्पजृम्भास्मितचलितदृशा दिव्यनारीजनेन ।

जिनो बुद्धः (जिनोऽर्हति च बुद्धे च पुंसि स्याज्जित्वरे त्रिषु इति मेदिनी)। (मारजिल्लोकजिज्जिनः, इत्यमरः)। (एष भगवतो नामान्तरम्— तथा चैतन्नाम्ना प्रसिद्धो भगवान् शिव इति भावः) वो युष्मान् सामाजिकान् रङ्गस्थसभ्यान् वा पातु रक्षतु । कदाचित् विश्वविध्वंसनप्रवृत्तस्य स्वसेवकस्य त्रिपुरस्योपायान्तरमन्तरा पराजयमतिदुष्करं मन्यमानो हरः परमेश्वरमताऽनुसारेण बुद्धसिद्धान्तमुद्भाव्य (उत्पाद्य) बुद्धमुनिरूपधारी भूत्वा तपश्चरन् तन्मतिवैपरीत्योत्पादनद्वारा तद्विनाशकार्यं साधयिष्यन् असहनशीलेन वासवेन सुराङ्गनाभिः (करणैः) प्रतिकूलितोऽपि यथावस्थ एवाऽतिष्ठदिति भावः । ध्यानव्याजमित्यत्र ध्याने व्याजत्वारोपाद्रूपकालङ्कारः ।

रूपकं रूपितारोपो विषये निरपह्नवे ।

इति लक्षणात् । एकस्यैव स्वमिति कर्तृकारकस्योपेत्येत्याद्यसीत्यन्तक्रियापट्केऽन्वयाद्दीपकालङ्कारः पूर्वपादत्रये ।

अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ।

इति दर्पणोक्तलक्षणात् । बुद्ध-जिनशब्दयोरेकार्थकत्वेऽपि बुद्धो (ज्ञानी) जिनो बुद्धधर्मावलम्बी मुनिरिति रीत्या भिन्नार्थकत्वात् पुनरुक्तवदाभासोऽलङ्कारस्तुर्यपादे । लक्षणं चास्य दर्पणोक्तं यथा—

आपाततो यदर्थस्य पौनरुक्त्याऽवभासनम् ।
पुनरुक्तवदाभासः स भिन्नाऽऽकारशब्दगः ॥

इति । यत्तु त्राताऽपि नो रक्षसि, मिथ्याकारुणिको, निर्घृणतर इत्येषामेकार्थकत्वेन प्रायशो भानात्पुनरात्तपदतादोषमाह कश्चित्तन्न, एकार्थक-समानानुपूर्वीकपदान्तरवद्वाक्यस्यैवोक्तदोषलक्षणत्वेनाऽभ्युपगमात् । वृत्तञ्चाऽत्र शार्दूलविक्रीडितं नाम । सूर्याश्वैर्मस् जस्तताः सगुरवः शार्दूलविक्रीडितम् ॥१॥

पूर्वनान्दीतो जिनसमाधिभङ्गप्रयाससाफल्यमप्राप्य भूयस्तत्साफल्याय द्वितीयनान्दीपद्यमवतारयति—कामेनेति । चापं कार्मुकम् आकृष्य आकर्षणेन कर्णा-

ॐ संक्षिप्तव्याख्या—चापम् धनुः आकृष्य आकर्षणेन कर्णान्तिकमानीय (स्थितेन) कामेन कुसुमसायकेन तथा हतपटुपटहावल्गिभिः प्रचण्डवादितढक्काख्यवाद्यविशेषैः स्वामिजयोद्घोषणशीलैश्चेत्यर्थः तथा मारवीरैः कामसैन्यैश्चन्द्र-चन्दन-रोलम्बादिभिः भ्रूभङ्गोत्कम्पजृम्भास्मितचलितदृशा

सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयाद् वासवेन
ध्यायन् बोधैरवाप्तो न चलित इति वः पातु दृष्टो मुनीन्द्रः ॥२॥

न्तिकमार्नाय ( आङ्पूर्वकात् कृष विलेखने इत्यस्मात् ल्यप् )। (स्थितेनेति शेषः) कामेन कन्दर्पेण ( कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मर इत्यमरः )। तथा हतास्ताडिताः प्रचण्डं वादिता इति यावत् पटवः पटुध्वनयः पटहा ढक्काख्यवाद्यविशेषा यैस्ते हतपटुपटहाः (स्याद्यशः पटहो ढक्का भेरी स्त्री दुन्दुभिः पुमानित्यमरः) आवल्गितुं शीलमेषाम् आवल्गिनः स्वामिजयोद्घोषिणः ( वल्गु पूजामाधुर्ययोरित्यस्मादाङ्पूर्वकात्ताच्छील्ये णिनिः ) हतपटुपटहाश्च ते आवल्गिनो हतपटुपटहावल्गिनस्तैः; हतपटुपटहैः तथा सम्यगालक्ष्य स्वामिनाऽवश्यं जेष्यते इति पुनः पुनरावल्गिभिर्वदद्भिश्चेत्यर्थः। मारस्य कामस्य ( मदनो मन्मथो मार इत्यमरः )। वीरा अनुचराः कामिनां प्रहाराय समुत्सुकाश्चन्द्रचन्दन-रोलम्बादयो योधा इत्यर्थः तैः। तथा भ्रुवोर्भङ्गो भ्रूभङ्गो भ्रूविलास इत्यर्थः, उत्कम्पो वेपथुः; जृम्भा गात्रविनामः, स्मितम् ईषद्धास्यम् भ्रूभङ्गश्च उत्कम्पश्च जृम्भा च स्मितं च भ्रूभङ्गोत्कम्पजृम्भास्मितानि तैः चलिते चाञ्चल्यमुपगते दृशौ नेत्रे यस्य स भ्रूभङ्गोत्कम्पजृम्भास्मितचलितदृक् तेन, दिव्यनारीजनेन सुराङ्गनावर्गेण, पूर्वं पश्यानङ्गशरातुरमित्यादिमधुरोक्तेरिदानीं स्वामिना सह प्रवृत्तेश्चापि वैफल्यादासामपि विस्मयेन दर्शनम्। इत्थं प्रतिकूल ( विपक्ष ) प्रवृत्तिमभिधाय सेवकप्रवृत्तिमभिदधाति—सिद्धैः प्रह्वोत्तमाङ्गैः। प्रह्वाणि निरन्तरभक्तिपारवश्येन प्रणतान्युत्तमाङ्गानि शिरांसि येषां ते प्रह्वोत्तमाङ्गास्तैः सिद्धैर्देवयोनिविशेषैः ( पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः, इत्यमरः ) तपस्विभिर्वा, तथा पुलकितं रोमाञ्चितं वपुः शरीरं यस्य स पुलकितवपुस्तेन वासवेन इन्द्रेण न चलितो ध्यानात् न पृथग्भूतः इदानीमपि ध्यानभङ्गो नास्य जात इति भावः। इति इत्थं विस्मयादाश्चर्यात् चमत्कृतिबुद्ध्या वा दृष्टो निरीक्षितः ध्यानभङ्गप्रवृत्तिवैफल्यजातविस्मयवशाद्विकसिताक्षिसहस्रेण सम्यग्विलोकित इत्यर्थः, ध्यायन् समाधौ तिष्ठन् बोधैर्ज्ञानैरवाप्तो युक्तः ज्ञानासक्तहृदय इत्यर्थः मुनीन्द्रो बुद्धधर्मावलम्बी मुनिः ( मुनीन्द्रः श्रीघनः शास्ता मुनिः इत्यमरः ) वो युष्मान् पातु रक्षतु। निजसमाधिभङ्गप्रवृत्तकामादीनां तपः प्रभावेण वैफल्यविधायको मुनिः पात्वित्यर्थः। ईदृशमुन्युपासनां विहाय देवतान्तरोपासनाऽ-

भ्रुकुटिविलास-वेपथु-गात्रविनामादिभिः चपलनेत्रेण दिव्यनारीजनेन सुराङ्गनावर्गेण तथा प्रह्वोत्तमाङ्गैः भक्त्या प्रणतशिरोभिः सिद्धैस्तपस्विभिः ( देवयोनिविशेषैर्वा ) तथा पुलकितवपुषा रोमाञ्चितशरीरेण वासवेन न चलितः ध्यानाच्च्युतो न इत्येवं विस्मयात् आश्चर्यात् दृष्टः बोधैर्ज्ञानैरवाप्तो युक्तो ध्यायन् समाधौ तिष्ठन् मुनीन्द्रो वो युष्मान् पातु।

नान्द्यन्ते—

सूत्रधारः—अलमतिविस्तरेण। अद्याहमिन्द्रोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तः यत् तदस्मत्स्वामिना श्रीहर्षदेवेनापूर्ववस्तुरचनाऽलंकृतं विद्याधरचक्रवर्त्ति-

---

युक्तेति भावः। समाधिभङ्गहेतुभूतकामचापाकर्षणादीनां सद्भावेऽपि समाधिभङ्गरूप-कार्याऽनुत्पत्त्या विशेषोक्तिरत्रालङ्कारः।

सति हेतौ फलाभावे विशेषोक्तिर्निगद्यते।

इति दर्पणोक्तलक्षणात्। समाधिभङ्गाऽभावे हेतोरसत्त्वेऽपि तस्य जातत्वाद्वि-भावनालङ्कारोऽपि—तदुक्तं दर्पणे—

विभावना बिना हेतुं कार्योत्पत्तिर्यदुच्यते।

इति। एवञ्चात्रालङ्कारद्वयस्य स्थित्या सन्देहसङ्करालङ्कारः। स्रग्धरावृत्तम्। भ्रम्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा सा प्रसिद्धेति लक्षणात्॥ २॥

एवं स्वाभिलषितदेवतास्तुतिरूपात्मकनान्दीविधानोत्तरं कथासूचकपात्र-(सूत्रधार) प्रवेश आवश्यक इत्याह—नान्द्यन्त इति। नान्द्याः प्रागुक्तलक्षण-लक्षितायाः श्लोकद्वयेन विहिताया मङ्गलस्तुतिरूपाया अन्तेऽवसाने समाप्ताविति यावत्। सूत्रधारः सूत्रं नाटकीयकथाप्रक्रमं धारयति सूचयति यः स तथोक्तः नाटकीयकथासूचको नटप्रधान इत्यर्थः (रङ्गस्थानं प्रविश्येदं प्रयोजितवानित्याशयः) तदुक्तं सूत्रधारलक्षणम्—

नाट्योपकरणादीनि सूत्रमित्यभिधीयते।
सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते॥

इति। किञ्च—

वर्णनीयतया सूत्रं प्रथमं येन सूच्यते।
रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते॥

इति। यत्र नान्द्यन्ते—सूत्रधार इति पाठस्तत्र सूत्रधारकृतैव नान्दीति बोध्यम्। यत्र च नान्द्यन्ते—(ततः प्रविशति सूत्रधारः) इति पाठस्तत्र सूत्रधारादन्यो नान्दीपाठक इत्यवधेयम्। प्रकृते च सूत्रधारकृत एव नान्दीपाठो बोध्यः। अथ—

या वाक्प्रधाना नृवरप्रयोज्या स्त्रीवर्जिता संस्कृतपाठ्ययुक्ता।
स्वनामधेयैर्भरतैः प्रयोज्या सा भारती नाम भवेत्तु वृत्तिः॥

भेदास्तस्यास्तु विज्ञेयाश्चत्वारोऽङ्गत्वमागताः।
प्ररोचनाऽऽमुखं चैव वीथी-प्रहसनं तथा॥

प्रतिबद्धं नागानन्दं नाम नाटकं कृतमस्माभिः श्रोत्रपरम्परया श्रुतं, न च प्रयोगतो दृष्टम्। तत्तस्यैव राज्ञः सकलजनहृदयाह्लादिनो बहुमानादस्मासु चानुग्रहबुद्ध्या यथावत्प्रयोगेणाद्य त्वया नाटयितव्यमिति। तद् याव-

---

इति भरतोक्तरीत्या प्ररोचनाऽऽमुखद्वारा भारतीं वृत्तिमाश्रित्य प्रस्तावनां कर्तुमुद्यतः सूत्रधारो निजाशयं प्रकाशयति—अलमित्यादिना। अतिविस्तरेण अप्रस्तुतकथानामतिबाहुल्येन अलं निष्प्रयोजनम् बाहुल्येन नांदीपाठो व्यर्थं इत्यर्थः। अतिविस्तरेणेत्यत्र निषेधार्थकाऽलंशब्दयोगे तृतीया करणे तृतीया वा ( अलं भूषणपर्य्याप्ति-शक्ति-वारण वाचक इत्यमरः )। अहम् अद्य अस्मिन् दिने अभिनयप्रदर्शनदिन इत्यर्थः, इन्द्रोत्सवे इन्द्रस्य पुरुहूतस्य उत्सवे पूर्णवृष्टिलाभाय प्रत्यब्दं वंशध्वजोत्पादनद्वारा विधीयमाने महोत्सव इत्यर्थः। उत्सवेत्यनेन तच्छेषत्वमभिनयस्य द्योत्यते। बहुमानेन बह्वादरेण सहितं सबहुमानं सबहुसत्कारमित्यर्थः यथा तथा आहूय आकर्ण्य नानादिग्देशागतेन नानादिग्भ्यो देशेभ्यश्च आगत उपस्थितस्तेन, एतेनाऽऽदरणीयो नियोग इति सूच्यते। "श्रीहर्षदेवस्य" राज्ञो नृपतेः पादपद्मोपजीविना चरणकमलसेविना, एतेन राज्ञश्चक्रवर्तित्वं व्यज्यते। राजसमूहेन नृपवृन्देन, एतेन विशिष्टफलकोऽनतिक्रमणीयश्चाऽस्य नियोग इति कथ्यते। उक्तः कथितः ( ब्रुवेः कर्मणि क्तो ब्रुवो वचादेशश्च )। तदस्मत्स्वामिना अस्माकं स्वामी अस्मत्स्वामी स चाऽसावस्मत्स्वामी तदस्मत्स्वामी तेन, अस्माकमधीश्वरेणेत्यर्थः। श्रीहर्षदेवेन ( एतेन कवेर्नामाऽभिधानम् ) एतन्नामकविनेत्यर्थः, अपूर्ववस्तुरचनाऽलंकृतम् अपूर्वं नूतनं यत् वस्तु इतिवृत्तं तस्य रचना वर्णनं तयाऽलंकृतं भूषितम् इत्यर्थः, अपूर्ववस्तुरचनेत्यनेन कवेरधिकप्रतिभाशालित्वसूचनम्। अलंकृतमित्यनेनाऽभिनये वैशिष्ट्यमुद्बोध्यते। विद्याधरचक्रवर्त्तिप्रतिबद्धं विद्याधरा देवयोनिविशेषाः ( विद्याधरोऽप्सरो यक्षरक्षोगन्धर्वकिन्नराः। पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनय इत्यमरः ) तेषाञ्चक्रवर्त्ती सार्वभौमः ( चक्रवर्त्ती सार्वभौम इत्यमरः ) तेन प्रतिबद्धं सम्बद्धं तत्कथासङ्गतमित्यर्थः। नागानन्दम् इति ग्रन्थनामानुकीर्त्तनम्। श्रोत्रपरम्परया श्रोत्राणां कर्णानां परम्परा धारा तया, केनचित् कस्मादप्याप्तजनाच्छ्रुतम् ततोऽप्यन्येन तस्मादप्यन्येन श्रुतमित्येवंरीत्येत्यर्थः। एतेन वस्तुरनिर्णयो द्योत्यते। न च प्रयोगतो दृष्टम् प्रयोगतोऽभिनयेनेत्यर्थः। ( तृतीयान्तात्प्रयोगशब्दात्तसिल् ) दृष्टम् ( दृशेः कर्मणि क्तः ) एतेनाऽभिनयावलोकनस्य मुख्यप्रयोजनत्वाच्छ्रवणौत्सुक्यमिति ध्वन्यते। सकलजनहृदयाह्लादिनः सकलाश्च ते जनास्तेषां हृदयानि आह्लादयितुं शीलमस्येति सकलजनहृदयाह्लादी तस्य सकलजनमनोरञ्जकस्येत्यर्थः। बहुमानादतिगौरवात् अथवा विशेषणमिदं

दिदानीं नेपथ्यरचनां कृत्वा यथाऽभिलषितं सम्पादयामि। (परिक्रम्यावलोक्य च। ) आवर्जितानि च सकलसामाजिकमनांसीति मे निश्चयः । यतः—

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च सिद्धराजचरितं नाट्ये च दक्षा वयम् ।

---

बहुमानादित्यस्य बोध्यम् तथा च सकलजनमनोरञ्जकादिति तदर्थो बोध्यः । एतत्पक्षे बहुमानादित्यस्य बहुसत्कारादित्यर्थः । राज्ञो बहुमानेन सकलजनमनोरञ्जनं सम्भवतीति युक्तं विशेषणम् । राज्ञो बहुमानादेवाभिनयप्रदर्शकस्य ख्यातिपूजादिलाभात्तस्यैवाऽभिनयप्रदर्शने मुख्यहेतुत्वम् अनुग्रहबुद्ध्येत्यस्य तु सत्यां बहुजनप्रसन्नतायामदृष्टं किमपि फलमिति गौणहेतुत्वम् । नेपथ्यरचनां कृत्वा अभिनयप्रदर्शकपात्रोचितवेषधारणं विधायेत्यर्थः । नाटयितव्यम् अभिनेतव्यम् स्वाभिलषितं स्वाभीष्टम् । परिक्रम्य इतस्ततः परिभ्राम्य ।

अथ—

परोऽभ्युदयिनी तत्र मङ्गल्या विजयावहा ।
सर्वपापप्रशमनी पूर्वरंगे प्ररोचना ॥
सिद्धामन्त्रणतो भाविदर्शिका स्यात् प्ररोचना ।

इति मुन्युक्तदिशा स्वाशयप्रतिपादनोत्तरं प्ररोचनां प्रस्तौति—कविकाव्यादीनां गुणाभिधानात्सिद्धवत् साध्यं प्रतिपादयति—आवर्जितानीति । सकलजनमनांसि सकलानां जनानां सामाजिकानां मनांसि चित्तानि आवर्जितानि अभिनयकौशलेन वशीकृतानि अभिमुखीकृतानीति यावत् । ( प्रागेवेति शेषः ) इति इत्थं मे निश्चयो निस्सन्देह इत्यर्थः ।

सामाजिकचित्ताभिमुखीकरणे हेतुमाह—श्रीहर्ष इति । श्रीहर्षः श्रीहर्षदेवो नृपतिः निपुणः कुशलः कविः काव्यसम्पादकः । एषा विद्यमाना परिषद् समितिः सामाजिकमण्डलीति यावत् गुणग्राहिणी गुणग्रहणशीला गुणैकपक्षपातिनीति यावत् (गुणशब्दोपपदाद् ग्रहेस्ताच्छील्ये णिनिः) । परिषदो गुणदोषोभयविचारशीलत्वे दोषानादरपूर्वकगुणमात्राभिधायिनीति परमार्थः । लोके जगति सिद्धराजचरितं सिद्धानां देवयोनिविशेषाणां राजा सिद्धराजः ( राजाहः सखिभ्यष्टच् इति समासान्तष्टच प्रत्ययः ) तस्य चरितं वर्णनं हारि मनोज्ञमित्यर्थः । वयञ्च नाट्ये नाट्यशास्त्रे नटोचिताऽभिनयव्यापारे वा दक्षा निष्णाताः सहायाऽनपेक्षयैवाऽभिनयसम्पादनसमर्था इत्यर्थः । स्वस्मिन् दक्षत्वोक्तया नात्मप्रशंसात्मको दोष उद्घोषणीयस्तस्य वस्तुकथनत्वेन तदनवसरात् । एकैकमपि सहायान्तरानपेक्षमपि वस्तु पूर्वप्रतिपादितं श्रीहर्षादिकमित्यर्थः इहाऽस्मिन्नभिनयव्यापारे वाञ्छितफलप्राप्तेः सामाजिकहृदया-

वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥ ३ ॥

तद् यावदहं गृहं गत्वा गृहिणीमाहूय सङ्गीतकमनुतिष्ठामि । ( परिक्रम्य नेपथ्याभिमुखमवलोक्य ) इदमस्मद्गृहं यावत् प्रविशामि । ( प्रविश्य ) ।

---

वर्जनात्मकफललाभस्येत्यर्थः पदं स्थानम् उत्कृष्टकारणमिति यावत् । ( पदं शब्दे च वाक्ये च व्यवसाय-प्रदेशयोः । पाद-तच्चिन्हयोः स्थान-त्राणयोरङ्क-वस्तुनोः, इति मेदिनी ) । एतेनोक्तगुणविशिष्टेऽस्मिन्प्रयोगे समुचिता प्रवृत्तिरिति सामाजिकोद्देशेन प्रोत्साहनाऽभिव्यक्तिः । मद्भाग्योपचयात् मद्भाग्यस्य उपचयादाधिक्यात् अयं सर्वः सकलो गुणानां गणः समूहः समुदित उपस्थित इत्यर्थः । किं पुनः अतः परं किं वक्तव्यमित्यर्थः । एतत्सकलोत्कृष्टसामग्रीसद्भावादवश्यं सामाजिकजनमनोवशीभूतमनुमिनोमीति भावः । सुप्तिङन्तचयो वाक्यमिति कोशोक्त्या सुबन्तचयस्यापि वाक्यत्वेनाङ्गीकारात् स्वाभीष्टफलप्राप्तौ हेतुभूतश्रीहर्षादीनां वाक्यगतत्वेन वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । तदुक्तं दर्पणे—

हेतोर्वाक्य-पदार्थत्वे काव्यलिङ्गमुदाहृतम् ।

इति । छन्दश्चात्र शार्दूलविक्रीडितं नाम । सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितमिति लक्षणात् ॥ ३ ॥

इत्थं प्रागुक्तलक्षणां भारतीवृत्तेरङ्गभूतां प्ररोचनामभिधाय वक्ष्यमाणलक्षितां प्रस्तावनां प्रस्तौति—तद्यावदिति ।

तल्लक्षणं यथा—

नटी विदूषको वाऽपि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः सँल्लापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा ॥

इति । तत् तस्मात्कारणात् परिषदाराधनसकलसामग्रीसत्त्वात् प्रयोगविधानस्य परमावश्यकत्वाद्धेत्यर्थः । यद्वाऽध्यवसाया ( विचारा ) र्थकोऽत्र तच्छब्दस्तथा च यत उक्तरूपा सामाजिकजनाराधनसामग्री तत् तत इत्यर्थः । एतेन त्वरासूचनम् । गृहिणीमाहूयेति । तस्याः प्रयोगसहकारिणां मुख्यत्वात्तदाह्वानद्वारेवाऽन्यसहकार्युपस्थितिसिद्धेश्च तदुक्तिः । अत एव सङ्गीतकमनुतिष्ठामीति सन्दर्भसङ्गतिः । सङ्गीतकलक्षणं यथा—

नृत्तवादित्रगीतानि सङ्गीतकमिहोच्यते । इति ।

द्विज-परिजन-बन्धु हिते ! मद्भवनतटाकहंसि ! मृदुशीले !
परपुरुषचन्द्रकमलिन्यार्ये ! कार्यादितस्तावत् ॥ ४ ॥

नटी—( प्रविश्य सास्रम् ) ( क ) अज्ज ! इअम्हि मन्दभग्गा । आणवेदु अज्जउत्तो को णिओओ अणुचिट्ठीअदु त्ति ।

---

( क ) आर्य्य ! इयमस्मि मन्दभाग्या । आज्ञापयत्वार्य्यपुत्रः को नियोगोऽनुष्ठीयतामिति ।

---

गृहिणीगुणातितुष्टः सूत्रधारस्तद्गुणाभिधानपूर्वकं तामाह्वयति—द्विजेति । द्विज-परिजन-बन्धुहिते ! द्विजाश्च परिजनाश्च बन्धवश्च तेषां हिते हितकारिणि । सत्कारादिना द्विजानां, भृति ( वेतन ) दानादिना परिजनानामनुचराणां, दानसम्मानादिना बन्धूनां सुखसम्पादिनीत्यर्थः । मद्भवनतटाकहंसि ! मद्भवनमेव तटाकस्तडाग इत्यर्थः । तडागस्यैव नामान्तरं तटाक इति, अमर-मेदिन्यादावनुपलम्भेऽपि त्रिकाण्डशेषकोशस्य लिङ्गादिसंग्रहवर्गे द्वादशश्लोकटीकायां पाठान्तरत्वेन तदुपलम्भादिति ज्ञेयम् । तस्य तत्र वा हंसि हंसीस्वरूपे शोभाधायकत्वादिति भावः । मृदुशीले सरलस्वभावे ! परपुरुषचन्द्रकमलिनि ! सर्वदा पुरुषान्तरानपेक्षिणीत्यर्थः । स्वभावसिद्धमेव पुरुषान्तरेषु वैमुख्यमस्या इति भावः । कार्यात् कर्त्तव्यस्यावश्यकत्वादित्यर्थः । न साम्प्रतम्मे पूर्ववद्गृहप्रवेशो निजागमनसूचनाय त्वदाह्वानञ्च अपितु प्रयोजनान्तरवशादेवेति त्वर्य्यतामिति भावः । द्वितीयपादे भवने तटाकत्वस्य गृहिण्यां हंसीत्वस्य चारोपाद्रूपकद्वयम्, परपुरुषे चन्द्रत्वस्य गृहिण्यां कमलिनीत्वस्य चारोपात्तृतीयेऽपि रूपकद्वयम् । आर्ये सकलगुणास्पदत्वेन श्रेष्ठत्वसूचकमिदं सम्बोधनम् । इत्येव मुख्यमन्यत्सर्वमस्यैव विशेषणम् । पत्नीम्प्रत्यार्यत्वेन पत्युरुक्तिर्नाटकादौ प्रसिद्धैव ( वाच्यौ नटीसूत्रधारावार्यनाम्ना परस्परमिति दर्पणोक्तेः ) एकस्या एव गृहिण्या द्विजादिहितकारित्वेन भवनतटाकहंसीत्वेन मृदुशीलत्वेन परपुरुषचन्द्रकमलिनीत्वेन चोल्लेखादुल्लेखालङ्कारः । तदुक्तं दर्पणे—

एकस्याऽनेकधोल्लेखादुल्लेख इति कथ्यते ।

इति । अत्र विषय ( व्यावर्तकधर्म—ज्ञातव्यपदार्थ ) भेदात्समन्वयः । तथा च द्वयोरङ्गाङ्गिभावेन साङ्कर्यम् । छन्दश्चेदमार्या नाम तदुक्तं पिङ्गलाचार्येण—

आदितृतीये द्वादश दशाष्टमात्रा द्वितीयचरणे च ।
तुर्ये पञ्चादश स्युर्गाथेयं ( आर्येयं ) पिङ्गलेनोक्ता ॥ इति ॥ ४ ॥

( क ) आर्य इति । वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परम् । इत्युक्त्या पतिम्प्रत्यार्य्यशब्दप्रयोगो नाटकादौ स्वीकृतः प्रसिद्ध एवेति भावः ।

सूत्रधारः—(नटीम्विलोक्य) आर्य्ये ! नागानन्दे नाटयितव्ये किमिदमकारणमेव रुद्यते ?

नटी—(क) अज्ज ! कधं ण रोइस्सं ? यदो दाव तादो अज्जाए सह स्थविरभावं जाणिअ अदूरजादणिव्वेदो कुडुम्बभारुव्वहणजोग्गो दाणीं तुमं त्ति हिअए वितक्किअ तवोवणं गदो ।

सूत्रधारः—( सनिर्वेदम् ) अये ! कथं मां परित्यज्य तपोवनं यातौ पितरौ ( विचिन्त्य ) तन्न किमिदानीं युज्यते । अथवा कथमहं गुरुचरणपरिचर्य्या-सुखं परित्यज्य गृहे तिष्ठामि । कुतः—

पित्रोर्विधातुं शुश्रूषां त्यक्त्वैश्वर्य्यं क्रमागतम् ।
वनं याम्यहमद्यैव यथा जीमूतवाहनः ॥ ५ ॥

( इति निष्क्रान्तौ । )

---

( क ) आर्य्य ! कथं न रोदिष्यामि यतस्तावत् तात आर्य्यया सह स्थविरभावं ज्ञात्वा अदूरजातनिर्वेदः कुटुम्बभारोद्वहनयोग्य इदानीं त्वमिति हृदये वितर्क्य तपोवनं गतः ।

---

अकारणमेवेति । समुपस्थिते हि नागानन्दस्याऽभिनयप्रदर्शनकाले हेतुमन्तरैवाश्रुमोचनं तवाऽयुक्तं प्रतिभातीति भावः ।

( क ) यत इति । यतो यस्माद्धेतोः तातः श्वसुरः । आर्य्या सह श्वश्वा साकम् । स्थविरभावं वृद्धत्वम् । अदूरं सन्निहितं यथा तथा जातो निर्वेदः संसारस्प्रत्यौदासीन्यं यस्य तथाभूतः । कुटुम्बभारोद्वहनयोग्यः कुटुम्बानां पोष्यवर्गाणां भारोद्वहने रक्षणे योग्यः क्षम इत्यर्थः ।

सनिर्वेदमिति । निर्वेदेन स्वावमाननेन ( वैराग्येण ) सहितं यथा तथेत्यर्थः । ( निर्वेदः स्वावमाननमित्यमरः ) । माम् अनन्यशरणम् असह्यवियोगश्चेत्यर्थः । परित्यज्य एतेन खेदः प्रकाश्यते । पितराविति माता पिता चेत्यर्थः ( पिता मात्रे ) तिसूत्रेणैकशेषः । तदर्थमेवाऽस्माकमखिलप्रयास इत्यादरातिबाहुल्यमभिव्यज्यते ।

विचिन्तनोत्तरमुचितं कर्त्तव्यमवधार्य स्थिरमतिः सन् प्राह—कथमहमिति । न कोऽपि तादृशः प्रकारो ( उपायो ) दृश्यते येन त्यक्ततातपदशुश्रूषस्य मे गृहे स्थितिः स्यादिति भावः ।

सूचयेद्वस्तुबीजं वाऽऽमुखं पात्रमथाऽपि वा ।

इति दर्पणोक्त्यनुसारात्पात्रमेवोद्दिश्य सूत्रधार आह—पित्रोरिति । अहम्

प्रस्तावना ।

( ततः प्रविशति नायको विदूषकश्च । )

नायकः—( सनिर्वेदम् ) वयस्य आत्रेय !

---

आत्मानमुद्दिश्योक्तिः, क्रमागतं क्रमेण कुलपरम्परयाऽऽगतं प्राप्तमित्यर्थः, ऐश्वर्यं सम्पत्तिं पक्षान्तरे—( नटवर्गसम्बन्धि स्वामित्वम् ) त्यक्त्वा विहाय, पित्रोः मातुः पितुश्चेत्यर्थः, शुश्रूषां परिचर्य्याम् ( वरिवस्या तु शुश्रूषा परिचर्य्याऽप्युपासनेत्यमरः )। विधातुं सम्पादयितुं ( विपूर्वकाद् दधातेस्तुमुन् ) जीमूतवाहनो यथा जीमूतवाहन इवेत्यर्थः ( इवार्थोऽत्र यथाशब्दः ) वनं काननं ( गहनं काननं वनमित्यमरः )। अद्यैव इदानीं काल एव यामि गच्छामि । राज्यसुखाऽपेक्षया पितृसेवाजातसुखमेव सर्वथोभयलोकसाधकमिति भावः । चतुर्थपादे यथाशब्दस्येवार्थकस्य सद्भावेन श्रौतीपूर्णोपमाऽलङ्कारः । यथोपमेति प्राञ्चः । त्यक्तकुलपरम्परागतैश्वर्य्योऽभिलषितपितृशुश्रूषो जीमूतवाहन इवाहमपीत्यर्थस्य चतुर्थपादेन दृष्टान्तरूपेण सूचनाद्दृष्टान्तालङ्कारो वा । तदुक्तं दर्पणकृता—

दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ।

इति । पथ्यावक्त्रं वृत्तम् । युजोश्चतुर्थतो येन पथ्यावक्त्रं प्रकीर्त्तितम् । इति लक्षणात् ॥ ५ ॥

प्रस्तावनेति । प्रस्ताव्यते सूच्यते भाविकथोपक्रमो यया यस्यां वा तथोक्ता । ( समाप्तेति शेषः ) । दर्पणोक्तमेतल्लक्षणं ( नटी विदूषको वाऽपीत्यादिरूपम् ) प्राक् प्रस्तावनाप्रक्रमेऽभिहितमेवेति तत् तत एवावगन्तव्यम् । सा चाऽत्र यामीत्युक्त्या स्वगमनसमानकालत्वेन नायकप्रवेशाऽऽक्षेपात्प्रवर्तकरूपा; एकत्रीभूय नायकवनगमनरूपकार्यान्तरप्रसाधनादवलगितरूपा च बोध्या । दर्पणोक्तं प्रवर्तकाख्य-प्रस्तावनालक्षणं यथा—

कालं प्रवृत्तमाश्रित्य सूत्रधृग् यत्र वर्णयेत् ।
तदाश्रयश्च पात्रस्य प्रवेशस्तत्प्रवर्तकम् ॥ इति ।

अवलगिताख्य-प्रस्तावनालक्षणं च यथा—

यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते ।
प्रयोगे खलु तज्ज्ञेयं नाम्नाऽवलगितं बुधैः ॥ इति ।

अथ प्रस्तावनाक्षिप्तमङ्कमारभते—तत इति । भाविनीं नाटकीयकथामुद्भाव्य सूत्रधारनिष्क्रमणानन्तरमित्यर्थः । नायकः प्राधान्येन नाटकीयकथाऽवलम्बनभूतः पात्रविशेषः; विदूषकः नायकस्य शृङ्गाररसे सहायभूतो नाटकीयः पात्रविशेषः । उक्तं च नायकलक्षणं दर्पणे—

रागस्यास्पदमित्यवैमि न हि मे ध्वंसीति न प्रत्ययः
कृत्याकृत्यविचारणासु विमुखं को वा न वेत्ति क्षितौ ।

---

त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।
दक्षोऽनुरक्तलोकस्तेजो वैदग्ध्यशीलवान् नेता ॥

इति । विदूषकलक्षणं यथा—

कुसुमवसन्ताद्यभिधः कर्मवपुर्वेशभाषाद्यैः ।
हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः ॥

इति । काव्ये वस्तु-नायक-रसानां स्वरूपवर्णनमावश्यकमिति क्रमेण तत्तत्स्वरूपं निरूप्यते—लोके हारि च सिद्धराजचरितमित्युक्त्या सिद्धराजचरितमिति वस्तुस्वरूपम् । जीमूतवाहन इत्युक्त्या जीमूतवाहन इति नायकः स चात्रोदात्तसंज्ञः । दानवीर-धर्मवीर-युद्धवीर-दयावीरभेदैश्चतुर्धा विभक्तेषु वीररसेष्वन्तिमो दयावीर एवाऽत्र प्राधान्यात् रसोऽवलम्बितो रसान्तरश्चात्राङ्गतया स्थित इति ध्येयम् । अत्र हि दयावीरे उत्साहः स्थायिभावो दुर्गतादिरालम्बनविभावो रिपुकृतापकारक्रियादिरुद्दीपनविभावः, आश्वासनवाक्यादिरनुभावो धृत्यादिर्व्यभिचारिभावः । प्रकृते च जीमूतवाहनस्य ( नायकस्य ) दयायामुत्साहः स्थायिभावः । नाग आलम्बनविभावः । नागस्य कातरोक्तिरुद्दीपनविभावः । जीमूतवाहनकृताऽऽश्वासनवाक्यादिरनुभावः । धृत्यादिर्व्यभिचारिभावो बोध्यः ।

उदात्तनायकलक्षणं दर्पणे यथा—

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान् निगूढभावो धीरोदात्तो दृढव्रतः कथितः ॥ इति ।

अथ धीरोदात्तो विद्याधरकुलपद्मभास्करो जीमूतवाहनो नाम नायकः क्रमाप्तमप्यतिदुःखदं राज्याधिपत्यमवगत्य वनस्थपितृसेवनस्यैवौचित्यम्मन्यमानस्तदन्तिक एव तिष्ठन् कदाचिद्वासोचितभूमिमन्वेष्टुं पित्राज्ञप्तो नर्मसचिवसहायो मलयाद्रिमुद्दिश्य प्रतिष्ठमानोऽतिशयानर्थसाधकत्वेन यौवनं निन्दति—रागस्येति । यूनो भावो यौवनं युवत्वं ( भावार्थेऽण् ) कालकृतशरीरावस्थात्मके वयसि मध्यमाऽवस्थारूपमित्यर्थः । रागस्य वासना ( इच्छा) रूपस्य क्रोधादेरप्युपलक्षणमिदम् आस्पदं स्थानम् ( आपद्यतेऽस्मिन्निति विग्रहे—आस्पदं प्रतिष्ठायामिति सूत्रेण सुण्निपातनात्साधुः )—( प्रतिष्ठाकृत्यमास्पदमित्यमरः ) अस्तीति, शेषः । इति अवैमि जानामि ( अवपूर्वकात् इण् गतावित्यस्य लट उत्तमपुरुषैकवचनम् ) । यौवनस्य शरीरावस्थात्मकत्वाद्रागस्य च चेतोधर्मरूपत्वाद्भेदेऽपि यौवने चित्तस्य रागानुबन्धनैयत्यद्योतनाय तत्र रागास्पदत्वस्यारोपात्तथोक्तमिति बोध्यम् ।

एवं निन्द्यमपीदमीप्सितफलप्राप्त्यै भवेद् यौवनं
भक्त्या याति यदीत्थमेव पितरौ शुश्रूषमाणस्य मे ॥ ६ ॥

विदूषकः—(सरोषम्) (क) भो वअस्स ! णं णिव्विण्णो एव्व तुमं एत्तिअं कालं एदाणं जीवन्तमुआणं वुड्ढाणं किदे इमं ईदिसं वण-

(क) भो वयस्य ! ननु निर्विण्ण एव त्वमेतावन्तं कालम् एतयोर्जीवन्मृतयोः वृद्धयोः कृते इदमीदृशं वनवासदुःखमनुभवन्, तत् प्रसीद इदानीमपि तावत्, गुरुचरणशुश्रूषानिर्बन्धात् निवृत्य इच्छापरिभोगरमणीयं राज्यसुखम् अनुभूयताम्।

(तद्यौवनम्) ध्वंसि विनश्वरं नहि इति मे मम न प्रत्ययः प्रतीतिरपि तु विनश्वरमेवेत्येव प्रत्ययः। प्रकृतार्थे दार्ढ्यबोधनाय नञ्द्वयोपादानम्। वाऽथवा पक्षान्तरेऽत्र वाशब्दः। क्षितौ पृथिव्यां को (जनः) कृत्यञ्चाकृत्यञ्च तयोर्विचारणास्तासु कर्तव्याऽकर्त्तव्यविवेकेष्वित्यर्थः विमुखं प्रतिकूलं न वेत्ति न जानाति अपि तु सर्वोऽपीत्यर्थः। एवमुक्तप्रकारेण निन्द्यमनेकदोषास्पदमपि इदं यौवनं यदि इत्थमुक्तरीत्या भक्त्याऽनुरागेण पितरौ मातरं पितरञ्चेत्यर्थः शुश्रूषमाणस्य सेवमानस्य (शृणोतेस्सन्नन्ताच्छानच्) मे मम (समय इति शेषः) याति अतिक्रामयति (तदा) ईप्सितानामभीष्टानां फलानां प्राप्त्यै स्वाभीष्टलाभार्थं भवेत् (सन्नन्तादापधातोः क्तः)। दूषितस्य क्षणभङ्गुरस्य यौवनस्य गुरुजनशुश्रूषयैव साफल्यमिति भावः। पूर्वार्द्धे एकस्यैव यौवनस्य रागास्पदत्वाद्यनेकरूपेणोल्लेखादुल्लेखालङ्कारः। उत्तरार्द्धे च पितृशुश्रूषासाधकत्वेनैव यौवनस्य साफल्यमित्युक्त्या नाऽन्यथेत्यर्थस्याऽऽपाततः प्रतीत्याऽर्थापत्तिरलङ्कारः इति द्वयोरत्र संसृष्टिः। शार्दूलविक्रीडितं वृत्तम् ॥६॥

(क) एवं पितृसेवासक्तचेतसो नायकस्य तन्महत्त्वसूचकवचो निशम्य तदसहनशीलस्य सुखार्थिनस्ततो नायकं निवर्त्य शृङ्गारवीथ्यां प्रवर्त्तयितुमुद्यतस्य तदानुकूल्येन विदूषकस्य सान्तराशयमुक्तिः—भो वयस्येति। भो शब्दोक्त्या मदुक्तिप्रत्यभिमुखो भवेति भावोऽव्यज्यते। वयस्येत्युक्त्याऽपृष्टस्यापि मेऽनुकम्पया हितोक्तिरिति सूच्यते। निर्विण्णो वैराग्यवान् (निर् × विद् × क्तः)। त्वम् स्वयमेव कृत्याकृत्यविचारकुशल इत्यर्थः। एतावन्तं कालमित्युक्त्या कालस्याऽतिबाहुल्येनाऽपरिगण्यत्वं ध्वन्यते। एतयोरिति, सर्वदा तदन्तिकस्थत्वादुद्वेगः। जीवन्मृतयोः जीवतोरेव मृतयोर्निश्चेष्टयोः राज्यसुखपरित्यागादित्यर्थः। जीवनमप्यनयोरस्माकं क्लेशोत्पादनायैवेति भावः। वृद्धयोः प्रत्युपकाराद्यसक्तयोः। कृते शुश्रूषादिरूपकार्यमेवोद्दिश्येत्यर्थः। ईदृशम् अकथनीयम् अनुभवमात्रवेद्यमिति भावः। वनवास-

बासदुक्खं अणुहवन्तो, ता पसीद दाणिं पि दाव, गुरुचरणसुस्सूसाणिव्वंधादो णिअत्तिअ इच्छापरिभोगरमणिज्जं रज्जसुहं अणुहवीअदु ।

नायकः । वयस्य ! न सम्यगभिहितं त्वया । कुतः—

तिष्ठन् भाति पितुः पुरो भुवि यथा सिंहासने किं तथा ?
यत् संवाहयतः सुखं तु चरणौ तातस्य किं राजकम् ।

---

दुःखम् अरण्यस्थितिजन्यक्लेशमित्यर्थः । वासशब्दो नैरन्तर्यं दुःखशब्दः सुखामिलितत्वं च द्योतयतः । वने तिष्ठतो निरन्तरं सुखामिलितं दुःखं भवतीति द्योत्यार्थः । अनुभवन् प्राप्नुवन् । तत् प्रसीद । तत् तस्मात् वैराग्याऽस्वीकारादित्यर्थः । प्रसीद अनुकूलो भव विषयसुखोपभोगायेति शेषः । गुरुचरणशुश्रूषानिर्बन्धात् गुर्वोः पित्रोर्या चरणशुश्रूषा तत्र यो निर्बन्ध आदराधिक्यं तस्मात् । निवृत्य विमुखो भूत्वेत्यर्थः गुरुसेवाम्परित्यज्येति समुदायस्य निर्गलितोऽर्थः । इच्छापरिभोगरमणीयम् इच्छाशब्देन विषयरूपलक्ष्यार्थप्रतीत्या इच्छानाम् इच्छाविषयाणां परितो भोगेन साकल्येन लाभात् रमणीयं मनोज्ञमित्यर्थः ।

गुरुजनाराधनमेव पुत्राणां विशेषतः कर्तव्यमित्यभिप्रेत्य श्रुतविदूषकवचनो नायकः सत्वाधिक्यादप्राप्तकोपस्तं युक्तियुक्तवचसाऽनुशास्ति—तिष्ठन्निति । पितुस्तातस्य पुरोऽग्रे भुवि पृथिव्यां तिष्ठन् उपविशन् ( तन्नियोगं प्रतीक्ष्येति शेषः ) यथा यादृशो भाति शोभते ( पुत्र इति शेषः ) तथा तादृशः सिंहासने राजोचिनासने तिष्ठन् किं भाति किं शब्दः क्षेपे नैव भातीत्यर्थः । तु पुनः ( पुनरर्थेऽत्र तु शब्दः ) तातस्य पितुश्चरणौ सम्वाहयतः सम्मर्दयतः ( पुत्रस्येति शेषः ) यत् सुखं ( भवतीति शेषः ) । ( तत् सुखं ) राजकं राजसमूहं संवाहयतो निजचरणौ राजसमूहशिरस्सु निधाय भारवद्वहनं कारयतः ( पुत्रस्य ) किं भवति नैवेत्यर्थः । गुरोः पितुः भुक्तोज्झिते पूर्वं भुक्तं पश्चादुज्झितं च तस्मिन् ( स्नातानुलिप्तवत्समासः ) भक्षितावशिष्ट इत्यर्थः ( अन्ने ) भुक्ते भक्षिते सति ( पुत्रेणेति शेषः ) या धृतिः सन्तोषः ( भवति ) पुत्रस्यैवेत्यर्थः असौ धृतिस्तथाविधः सन्तोषो भुवनत्रये भुक्ते ( सत्यपि ) किं भवति नैवेत्यर्थः । उज्झितस्त्यक्तो गुरुस्तातो येन तस्य गुरुत्यागिन इत्यर्थः ( पुत्रस्य ) राज्यमाधिपत्यम् आयासः खलु दुःखमेवेत्यर्थः । तत्र राज्ये कश्चिद् गुणः किमपि सुखम् अस्ति नास्त्येवेत्यर्थः गुरुसेवाजातसुखापेक्षया नान्यदस्ति किमपि सुखमधिकमिति भावः । उपमानभूत-सिंहासन-राजक-भुवनत्रयाऽपेक्षयोपमेयभूत-तातान्तिकस्थिति-तातपाद-संवाहन-तात-भक्षितावशिष्टभोजनानामाधिक्यप्रतिपादनाद् व्यतिरेकोऽत्रालङ्कारः । तदुक्तं दर्पणकृता—

किं भुक्ते भुवनत्रये धृतिरसौ भुक्तोज्झिते या गुरोः ?
आयासः खलु राज्यमुज्झितगुरोस्तत्रास्ति कश्चिद्गुणः ॥७॥

विदूषकः—( आत्मगतम् ) ( क ) अहो से गुरुअणसुस्सूसाणुराओ। (विचिन्त्य) भोदु ता एदं पि दाव अण्णं विअ भणिस्सं। (प्रकाशं) भो वअस्स ! ण क्खु अहं रज्जसोक्खं ज्जेव ( केवलं ) उद्दिसिअ एव्वं भणामि, अण्णं पि दे करणीज्जं अत्थि ज्जेव।

नायकः—( सस्मितम् ) वयस्य ! ननु कृतमेव यत्करणीयम्।

पश्य—

न्याय्ये वर्त्मनि योजिताः प्रकृतयः सन्तः सुखं स्थापिता
नीतो बन्धुजनस्तथात्मसमतां राज्ये च रक्षा कृता।

---

( क ) अहो अस्य गुरुजनशुश्रूपाऽनुरागः। भवतु तदेतदपि तावत् अन्यदिव भणिष्यामि। भो वयस्य ! न खल्वहं राज्यसुखमेव ( केवलम् ) उद्दिश्य एवं भणामि, अन्यदपि ते करणीयमस्त्येव।

---

आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा।
व्यतिरेक एक उक्ते हेतौ नोक्ते स च द्विधा॥

शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥ कर्तुराद्यपादे तिष्ठन् जन इति प्रथमान्तनिर्देशात्-द्वितीयपादे जनस्य सुखमिति तृतीयपादे जनस्य धृतिरिति च भावनिर्देशाद् अक्रमभङ्ग-दोषः।

(क) अनीप्सितराज्यसुखस्य सात्विकोत्तमस्य नायकस्य स्वाशयविरोधि वचो निशम्य विदूपकः साक्षाद्विचारयति—अहो अस्येति। अहो इत्यद्भुतार्थसूचको निपातः। अनुरागः स्नेहः। नायमित्थं राज्यसुखप्रलोभद्वारा ततो निवर्त्तयितुं शक्य इत्यर्थः। भूयोऽप्युपायान्तरेण यतिष्य इत्यालोच्य प्रकाशमाह—न खल्विति। अन्यदपि गुरुचरणसेवनादिति शेषः। अन्यदित्युक्त्या तत्स्वरूपज्ञानादरश्चेद्बोधयामि तदिति सूच्यते। करणीयम् अवश्यकर्तव्यमित्यर्थः ( आवश्यके हि कृत्यप्रत्ययः )। एतेन तदविधाने प्रत्यवायसम्भवोऽभिव्यज्यते। अस्त्येव एवकारेण न पूर्ववदुपेक्षणीयमिति सूच्यते।

राजोचितमात्मकृतं कृत्यजातं प्रदर्शयति—न्याय्य इति। प्रकृतयोऽमात्यादयो न्याय्ये न्यायादनपेते ( युक्ते )-( धर्मपथ्यर्थन्यायादनपेत इत्यनेन न्यायशब्दाद्यत् ) वर्त्मनि मार्गे स्वाधिकारोचित आचार इति यावत् योजिताः

दत्तो दत्तमनोरथाधिकफलः कल्पद्रुमोऽप्यर्थिने
किं कर्त्तव्यमतःपरं कथय वा यत्ते स्थितं चेतसि ॥ ८ ॥

विदूषकः—(क) भो वअस्स ! अच्चन्तसाहसिओ मदङ्गहदओ

---

(क) भो वयस्य ! अत्यन्तसाहसिको मतङ्गहतकस्ते प्रतिपक्षः । तस्मिंश्च समासन्नस्थिते ते प्रधानामात्यसमधिष्ठितमपि न त्वया विना राज्यं सुस्थिरमिति प्रतिभाति ।

---

स्थिरीकृताः सन्तः साधवो विद्वांसो वा सुखं स्थापिताः (यासु सन्तो न तिष्ठन्ति ता वृथैव विभूतयः) इत्यालोच्य सुखं यथा तथा स्थानं प्रापिता इत्यर्थः । तथा तेन प्रकारेण बन्धुजनो मातृ-पितृगोत्रसम्बन्धीत्यर्थः (सुहृद्वर्गो वा) आत्मसमतां नीतः (कृताधिपत्यामिव साधु बन्धुतामि) त्यालोच्य देशकालाद्यनुरोधाद्वस्त्रान्नादि-कल्पनैरात्मनिर्विशेषतां प्रापित इत्यर्थः । च पुनः राज्ये राष्ट्रे रक्षा कृता मयेति शेषः । राज्यरक्षणमपि सम्यकृतया कृतमित्यर्थः । दत्तं सम्पादितं मनोरथादभिल-षितादधिकं विशेषं फलं येन स तथोक्तः कल्पद्रुमः कल्पवृक्षोऽपि अपिशब्दोऽत्र धनान्तरदानस्येतः प्राक्कालिकत्वं द्योतयति । अर्थिने याचकाय दत्तोऽर्पितः सर्वे-प्सितसाधकस्याऽमरपादपस्य दानात्परं न किमपि दातव्यमस्तीति भावः । दानवीर-त्वमेतेनास्य सूचितम् । अतः परं सम्पादिताखिलकार्यादन्यदित्यर्थः किं कर्त्तव्यं (क्षेपेऽत्र किं शब्दः) अवशिष्टतया किं कार्यमित्यर्थः (अस्तीति शेषः) । यत् (कार्यं) ते तव चेतसि हृदये स्थितं तिष्ठतीत्यर्थः । (तत्) कथय ब्रूहि मां बोधयेति भावः । एकस्यैव मयेति कर्तृकारकस्य योजन-स्थापन-प्रापण-रक्षण-दान-क्रियास्वन्वयाद्दीपकालङ्कारः ।

तं सर्वगुणसम्पन्नमभिषिच्यात्मजं पिता ।
कल्पवृक्षं ददावस्मै नानासिद्धिसुधाफलम् ॥
कान्ताकटाक्षविक्षेपचपलं यौवनं धनम् ।
जीवितं चेति स ज्ञात्वा तमर्थिभ्यस्तरुं ददौ ॥
कुलक्रमागते तस्मिन् कल्पवृक्षे व्ययीकृते ।
अपूर्वत्यागिना तेन त्रिलोकी विस्मयं ययौ ॥

इति क्षेमेन्द्रकथाऽनुसारेण यथावद्वस्तुवर्णनात्स्वभावोक्तिश्चेति द्वयोः संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

(क) अतः परमपि कर्तव्यान्तरमस्तीति स्वयमेव प्रागुक्तं विदूषको दर्शयति—वयस्येति । अत्यन्तसाहसिकः साहसिकानामग्रेसरः (सहसा करोतीति

दे पड़िवक्खो, तस्सिं अ समासण्णट्ठिदे दे पधाणामच्चसमधिट्ठिदं पि ण तुए विणा रज्जं सुत्थिरं त्ति पड़िभादि ।

नायकः—धिङ्मूर्ख ! मतङ्गो राज्यं हरिष्यतीति शङ्कसे ?

विदूषकः—( क ) अध इं ?

नायकः—यद्येवं, तत किं न स्यात् । ननु स्वशरीरात् प्रभृति सर्वं परार्थमेव मया परिपाल्यते । यत्तु स्वयं न दीयते, तत् तातानुरोधात्, तत् किमनेनावस्तुना चिन्तितेन । वरं ताताज्ञैवानुष्ठिता, आज्ञापितश्चास्मि तातेन, यथा—वत्स ! जीमूतवाहन ! बहुदिवसपरिभोगेण स्वीकृतसमित्कुशकुसुममुपभुक्तमूलफलकन्दनीवारप्रायमिदं स्थानं वर्त्तते । तदितो मलयपर्वतं गत्वा किञ्चित् तस्मिन् निवासयोग्यमाश्रमपदं निरूपयेति । तदेहि मलयपर्वतमेव गच्छावः ।

---

( क ) अथ किम् ?

---

विग्रहे ताद्धितष्ठक् ) । प्रतिपक्षो द्वेषी । मतङ्गदेवहतकः निन्दितं नामैवास्य नितान्तद्वेषसाधकम् । समासन्नस्थिते समीपवर्त्तिनि । प्रधानामात्यसमधिष्ठितं प्रधानसचिवसुरक्षितम् । एतेन मुख्यमंत्रिरक्षणात्साक्षादाक्रमणाऽभावेऽपि देशक्षोभस्त्वनिवार्य एवेति सूचितम् । इत्यभिप्रेत्यैव कर्त्तव्यान्तरमस्तीति प्रागुक्तम् । सुस्थिरं निष्प्रत्यूहेन चिरस्थायीत्यर्थः ।

विदूषकोक्तिमाकर्ण्य निराकांक्षितराज्यो नायकः पुनराह—धिङ्मूर्खेति ।

पुनराह नायकः—यद्येवमिति । यद्येवं मतङ्गेन मे राज्यं हृतं स्यादित्यर्थः । तत् किं न स्यात् अर्थात् सकलेप्सितस्य साफल्यं स्यादित्यर्थः । ननु यत इत्यर्थः । सर्वं राज्यादि । परार्थमेव परप्रयोजनायैवेत्यर्थः । न दीयते ( राज्यमिति शेषः ) । तातानुरोधात् स्वतोऽन्वयक्रमागतराज्यपालनस्य तताभिमतत्वादित्यर्थः । अवस्तुना निस्सारेण । वरं ताताज्ञैवानुष्ठिता राज्यं पालयेति तातनियोगो न केनाप्यलङ्घितपूर्वो मया सम्पादित इत्यर्थः । बहुदिवसपरिभोगेण चिरकालोपयोगेन । समिधश्च कुशाश्च कुसुमानि च समित्कुशकुसुमानि स्वीकृतानि ( तानि ) यस्मिन् यस्माद्वा तत् तथोक्तम् , मूलञ्च फलं च कन्दश्च नीवारश्च मूलफलकन्दनीवाराः उपभुक्तास्ते प्रायेण यस्मिन् यस्माद्वा तथोक्तम् उक्तविशेषणद्वयेन साम्प्रतमिह तत्तद्वस्तूनामभावः सूच्यते । अत एव वासोचितस्थानान्तरान्वेषणनियोगः संघटते । निरूपय पश्येत्यर्थः ।

विदूषकः—( क ) जं भवं आणवेदि । एदु भवं ।

( उभौ परिक्रामतः ) ।

विदूषकः—( अग्रतोऽवलोक्य ) (ख) भो बअस्स ! पेक्ख पेक्ख, एसो क्खु सरसघणचंदणवणुच्छङ्गपरिमिलणलग्गबहुलपरिमलो बिमलतड़णिवड़णजज्जरिज्जं तणिज्झरुच्छलितसिसिरसीअरासारवाही पढ़मसङ्गमोक्कण्ठिदपिआकण्ठग्गहो बिअ मग्गपरिस्समं अवणअंतो रोमञ्चेदि पिअवअस्सं मलअमारुदो ।

नायकः—( निरूप्य सविस्मयम् ) अये ! प्राप्ता एव वयं मलयपर्वतम् । ( समन्तादवलोक्य ) अहो रामणीयकमस्य ।

---

( क ) यद् भवानाज्ञापयति । एतु भवान् ।

( ख ) भो वयस्य ! प्रेक्षस्व प्रेक्षस्व । एष खलु सरसघनचन्दनवनोत्संगपरिमिलनलग्नबहुलपरिमलो विमलतटनिपतनजर्जरायमाणनिर्झरोच्छलितशिशिरशीकरासारवाही प्रथमसंगमोत्कण्ठितप्रियाकण्ठग्रह इव मार्गपरिश्रममपनयन् रोमाञ्चयति प्रियवयस्यं मलयमारुतः ।

---

(ख) अथ विदूषको नायकं भोगवीथ्य प्रवर्तयितुं मलयमारुतं वर्णयति—सरसेति । सरसस्य स्निग्धस्य घनस्य सान्द्रस्य चन्दनवनस्योत्सङ्गे क्रोडे परिमिलनात् संसर्गात् लग्नो जातो बहुलो विशेषः परिमलो गन्धो यस्मिन् तथोक्तः । एतेन वायोरतिसौरभशालित्वं सूच्यते । तथा–विमले निर्म्मले तटे कच्छे पतनात् स्रंसनात् जर्जरायमाणाश्चूर्णीभूता ये निर्झराः प्रवाहाः ( प्रवाहो निर्झरो झरः ) इत्यमरः । तेभ्य उच्छलितानां सर्वतो विक्षिप्तानां शिशिरशीकराणां शीतलजलकणानाम् आसार धारासम्पातं ( धारासम्पात आसारः शीकरोऽम्बुकणाः स्मृता इत्यमरः ) वहति तच्छीलः, तद्वानित्यर्थः । एतेन शैत्यातिशयोऽभिव्यज्यते । मलयमारुतो मलयाद्रिवायुः दक्षिणानिल इत्यर्थः । मलयेति विशेषणेन तत्र मान्याधिक्यं सूच्यते । प्रथमसङ्गमेऽभूतपूर्वसमागमे उत्कण्ठितायाश्चिरानुबद्धस्पृहोत्सुकायाः प्रियाया नायिकायाः कण्ठग्रहः तत्कर्तृकः कान्तकर्मकोऽनेकजन्मार्जितपुण्यलभ्यः कण्ठाश्लेप इव मार्गपरिश्रमम् अध्वगमनजातखेदम् अपनयन् परिहरन् प्रियवयस्यं ( त्वाम् ) रोमाञ्चयति रोमाञ्चवन्तं करोति सुखयतीति यावत् । उल्लासोदयादिति भावः । ( रोमाञ्चशब्दात् तत्करोति तदाचष्टे इति णिच् )

तथाहि—

माद्यद्दिग्गजगण्डभित्तिकषणैर्भग्नस्रवच्चन्दनः
क्रन्दत्कन्दरगह्वरो जलनिधेरास्फालितो वीचिभिः ।
पादालक्तकरक्तमौक्तिकशिलः सिद्धांगनानां गतै-
र्दृष्टोऽयं मलयाचलः किमपि मे चेतः करोत्युत्सुकम् ॥ ९ ॥

तदेह्यत्रारुह्य वासयोग्यं किञ्चिदाश्रमपदं निरूपयावः ।

विदूषकः—( क ) एव्वं करेह्य । ( अग्रतः स्थित्वा ) एदु भवं ।

---

( क ) एवं कुर्वः । एतु भवान् ।

---

मलयप्रदेशस्यातिरमणीयतावर्णनद्वारा तत्फलस्याऽऽत्माश्रयत्वमुपपादयति—माद्यदिति । माद्यन्तो मदस्रावेणोन्मादम्प्राप्नुवन्तो ये दिग्गजा दिङ्नागास्तेषां गण्डाः कपोला एव भित्तयः कुड्यानि तेषां यानि कर्षणानि कण्डूतिशमनहेतुकघर्षणानि तैर्भग्ना आमर्दितास्त्रोटिता इति यावत् । अत एव स्रवन्तः क्षरद्रसाश्चन्दनाश्चन्दनद्रुमा यत्र स तथोक्तः । ( चन्दनोत्पत्तिस्थानं हि मलयपर्वत इति प्रसिद्धिः ) । तथा निधीयन्ते नितरां धार्यन्ते यत्रासौ निधिराकरः ( सोपसर्गाद्दधातेरधिकरणे किः )–( रत्नाकरो जलनिधिरित्यमरः ) । जलानां निधिर्जलनिधिस्तस्य समुद्रस्येत्यर्थः । वीचिभिस्तरंगैः ( भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिष्वित्यमरः ) । आस्फालितस्ताडितः अत एव क्रन्दन्ति रुदन्ति दर्य्यः कन्दरा एव गह्वराणि यस्य स तथोक्तः । तथा सिद्धांगनानां देवयोनिविशेषस्त्रीणां गतैर्गमनैः ( करणैः ) पादालक्तकेन चरणलाक्षारसेन रक्ता रागं लौहित्यं प्रापिता मौक्तिकशिला मुक्ताप्रस्तरा यत्र सः । अयं पुरो विद्यमानो मलयाचलो दृष्टो निरीक्षितः सन् ( मयेति शेषः ) । मे मम चेतः ( कर्म ) किमपि लोकोत्कृष्टं यथा तथा, एतेन गुणोत्कर्षवर्णनफलमात्मसम्बद्धं प्रदश्यर्ते । उत्सुकं करोति दर्शनार्थमुत्कण्ठां जनयतीत्यर्थः । गजविशेषोक्तिः प्रदेशस्य दिव्यभूमित्वं गण्डभित्तीनां स्थौल्याधिक्यं च द्योतयति । तदाधिक्यद्योतनात् चन्दनतरूणां विमर्दसहत्वेन महत्वस्य कर्षणस्याधिकदेशव्यापित्वस्य च द्योतनम् । तेन चन्दनरसातिबाहुल्यं द्योत्यते । तेन चामुष्य प्रदेशस्यातिसेवनीयत्वं द्योत्यते । उत्तरार्द्धे पादालक्तकरक्तेत्युक्त्या शिलानां भाग्योदयात्स्वगुणापेक्षयाऽप्युत्कृष्टगुणग्राहित्वं द्योत्यते । यथावद्वस्तुवर्णनात् स्वभावोक्तिरलंकारः । उत्कण्ठाजनककारणानां पदार्थगतत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारश्चेत्यनयोः साङ्कर्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

तदेहीति । अस्य यदित्यादिः तथा च यद्यस्माद्धेतोः सेवनीयस्तत्तस्मा-

( आरोहणं नाटयतः )

नायकः—( निमित्तं सूचयन् ) अये !—

स्पन्दते दक्षिणं चक्षुः फलाकाङ्क्षा न मे क्वचित् ।
न च मिथ्या मुनिवचः कथयिष्यति किं न्विदम् ॥१०॥

द्धेतोरित्यर्थः । अथवौत्सुकं करोतीत्याक्षिप्य यद्यस्मादेप उत्सुकयति माम् तत्तस्माद्धेतोरित्यर्थः । एहीत्यनेनाऽऽत्मनस्त्वरासूचनम् । आरुह्येति, इदानीं कालपर्यन्तमाश्रमस्याहष्टत्वात्तदन्वेषणस्याऽऽवश्यकत्वाच्चेति शेषः ।

निमित्तमिति । शुभसूचकत्वेन प्रसिद्धं दक्षिणाक्षिस्फुरणात्मकमित्यर्थः । सूचयन् प्रकाशयन् । शृंगाररसाविर्भावतः प्रागेव शान्तमप्यात्मानं शुभनिमित्तद्वारा मनोरथपथमारोहयन्निति भावः । ब्रवीतीति शेषः । अये ! कोमलालापे सम्बोधनम् । यतो मदीयसुख-दुःखयोरनुभवी भवानतो मद्वचः समाकर्णयेति भावः ।

तदेव सूचयति—स्पन्दत इति । दक्षिणं सव्येयं शुभत्वेन निमित्तेषु प्रसिद्धमित्यर्थः । चक्षुर्नेत्रं तदपाङ्गस्थानमित्यर्थः । स्पन्दते निरन्तरं स्फुरति तर्हि किमपि समीहितं स्यादित्याशंक्याह—क्वचित् कस्मिंश्चिदप्यर्थादिविषये मे मम फलस्य प्रयोजनस्य कांक्षाऽभिलाषा न नास्ति कथमिदं भवेदिति विशेषस्पृहा नास्तीत्यर्थः । तर्हि व्यर्थमेव दक्षिणाक्षिस्फुरणमित्याशंक्याह—मुनेः शकुनशास्त्रज्ञस्य वचो दक्षिणाक्षिस्फुरणं शुभसूचकमित्येवंरूपमित्यर्थः । नच मिथ्या नैवाऽनृतं ( स्यात् ) अवश्यमेव सफलं स्यादित्यर्थः । मुनिशब्दोऽलीकत्वाऽसम्भवं द्योतयति । ( अतः ) इदं दक्षिणाक्षिस्फुरणं ( कर्तृ ) किं नु ( नुशब्दोऽत्र वितर्के ) एतेनौत्सुक्यं द्योत्यते । कथयिष्यति सूचयिष्यति ।

पुंसां दक्षिणाक्षिस्पन्दनस्य शुभफलसाधकत्वमुक्तं यथा—

वामभागस्तु नारीणां पुंसां श्रेष्ठस्तु दक्षिणः ।
दाने देवादिपूजायां स्पन्देऽलङ्करणेऽपि च ॥

इति । अचिरभाविशुभफलम्प्रति दक्षिणाक्षिस्पन्दनस्य हेतोर्वाक्यार्थगतत्वात्—मुनिवचनरूपहेतोश्च पदार्थगतत्वाच्च वाक्यार्थहेतुकं पदार्थहेतुकं च काव्यलिंगद्वयम् । अचिरभाविनः शुभफलात्मनः कार्यस्यैकस्मिन् दक्षिणाक्षिस्पन्दनात्मके हेतौ स्थितेऽपि ( खले कपोतिकान्यायात् ) मुनिवचनात्मकस्यापि हेत्वन्तरस्योक्तकार्यसाधकत्वात् समुच्चयालङ्कारश्च । तदुक्तं दर्पणे—

समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके ।
खले कपोतिका न्यायात् तत्करः स्यात् परोऽपि चेत् ॥

इति । पथ्यावक्त्रं वृत्तम् ॥१०॥

विदूषकः—(क) भो वअस्स ! अवस्समासण्णं दे पिअं णिवेदेदि।

नायकः—एवं नाम यथाऽऽह भवान्।

विदूषकः—(विलोक्य) (ख) भो वअस्स ! पेक्ख। एदं क्खु सविसेसघणसिणिद्धपादवविसोहिअं सुरहिहविग्गन्धगब्भिणुद्दामधूमणिग्गमं अणुव्विग्गसुहणिसण्णसावअगणं तवोवणं विअ लक्खीअदि।

नायकः—सम्यगुपलक्षितम्। तपोवनमेवैतत्। कुतः ?—

वासोऽर्थं दययेव नातिपृथवः कृत्तास्तरूणां त्वचो
मग्नाऽऽलक्ष्यजरत्कमण्डलु नभस्स्वच्छं पयो नैर्झरम्।

---

(क) भो वयस्य ! अवश्यमासन्नं ते प्रियं निवेदयति।

(ख) भो वयस्य ! प्रेक्षस्व प्रेक्षस्व। एतत् खलु सविशेषघनस्निग्धपादपविशोभितं सुरभिहविर्गन्धगर्भितोद्दामधूमनिर्गमम् अनुद्विग्नसुखनिषण्णश्वापदगणं तपोवनमिव लक्ष्यते।

---

(क) नायकोक्त्या तदौत्सुक्यमवेत्य विदूषकस्तदेव पोपयन्नाह—अवश्यमासन्नमिति। आसन्नं देशतः कालतश्चातिसन्निहितमित्यर्थः। प्रियं प्रीतिजनकम् किमप्यलौकिकं वस्त्वित्यर्थः॥ निवेदयति कथयति (उक्तनिमित्तमिति शेषः)।

विदूषकोक्तिमादृत्य नायक आह—एवं नामेति। नामशब्दः सम्भावनार्थकः एवम् आसन्नप्रियं भवान् यथा आह ब्रवीति तथा शुभनिमित्तसूचनादासन्नप्रियं सम्भावयामीति सन्दर्भसमुदायार्थः।

(ख) पुनर्नायकौत्सुक्यवर्द्धनायैव विदूषकस्योक्तिः—पश्य-पश्येति। सविशेषम् अत्यधिकं यथा तथा घना निबिडा ये पादपा वृक्षास्तैर्विशोभितं भूषितम्। तथा सुरभि घ्राणतृप्तिकरः, हविर्गन्धगर्भितस्य अन्तःस्थितहविर्गन्धस्य (हविर्गन्धो गर्भे संजातोऽस्येति विग्रहे तारकादित्वादितच्)। उद्दामस्योत्कटस्य निर्गमो यस्मात् तत्। तथा अनुद्विग्ना हिंसकादिजनितभयाभावादुद्वेगरहिताः। अत एव सुखनिषण्णाः सुखेन स्थिताः श्वापदगणा व्याघ्रादयो यस्मिन् तत्। तपोवनं तपश्चरणार्थं वनं तपः प्रधानं वनं वेत्यर्थः। (इवशब्दोऽत्रोत्प्रेक्षायाम्)।

तपोवननिश्चये हेतुमाह—वासोऽर्थमिति (अत्र हि क्वचित्प्रदेशे) वासोऽर्थं परिधानीयवस्त्रकार्यसम्पादनार्थं नतु प्रयोजनान्तरेणेति भावः। दययाऽनुकम्पया इव (कृपा दयाऽनुकम्पा स्यादित्यमरः) अतिस्थूलवल्कलच्छेदात्तरवो व्यथिता मा भवेयुरिति प्रीत्येवेति भावः। नातिपृथवो नातिस्थूलास्तरूणां वृक्षाणां त्वचो वल्कलानि

दृश्यन्ते त्रुटितोज्झिताश्च वटुभिर्मौञ्ज्यः क्वचिन्मेखला
नित्याकर्णतया शुकेन च पदं साम्नामिदं पठ्यते ॥ ११ ॥

तदेहि प्रविश्यावलोकयावः ( प्रवेशं नाटयतः )

नायकः—( सर्वतो विलोक्य ) अहो ! नु खलु मुदितमुनिजनप्रविचार्य्यमाणसन्दिग्धवेदवाक्यविस्तरस्य पठद्वटुजनाच्छिद्यमानार्द्रसमिधस्तापसकुमारिकाऽऽपूर्य्यमाणबालवृक्षालवालस्य प्रशान्तरमणीयता तपोवनस्य । इह हि ।

---

कृत्ताश्छिन्नाः ( कृती छेदनेऽस्मात् क्तः ) दृश्यन्ते । (क्वचित्प्रदेशे) मग्नोऽन्तर्लीनः ( अपि ) आलक्ष्यः सम्यक् दृश्यो जरन् अतिप्राचीनो जीर्णतामापद्यमान इति यावत् कमण्डलु मुनिजलपात्रविशेषो यस्मिन् तत् । नभः स्वच्छम् आकाशवन्निर्मलं निर्झरः प्रवाहः (प्रवाहो निर्झरो झर इत्यमरः) तस्येदं नैर्झरं पयः प्रवाहोदकमित्यर्थः ( दृश्यते ) । ( क्वचित्प्रदेशे ) वटुभि र्मुनिबालकैः त्रुटितोज्झिताः पूर्वं त्रुटिताः पश्चादुज्झिताः छिन्नत्यक्ता इत्यर्थः ( अत्र स्नातानुलिप्तवत्कर्मधारयसमासः ) मुञ्जानामिमा मौञ्ज्यो मुञ्जतृणनिर्मिता इत्यर्थः । मेखलाः काञ्चीदामानि दृश्यन्ते । (क्वचित्प्रदेशे ) शुकेन तदाख्यपक्षिविशेषेण ( कर्त्रा ) नित्याकर्णतया प्रतिदिनश्रवणेन ( हेतुना ) साम्नां सामवेदानाम् सामपदस्य वेदसामान्याभिधायकत्वाद्वेदानामित्यर्थो वा इदं श्रूयमाणमित्यर्थः पदं पठ्यते अभ्यस्यते अभ्यस्तं च तद् गीयत इति भावः । अत्र दययेवेत्यत्रोत्प्रेक्षार्थकेवशब्दसत्त्वादुत्प्रेक्षा । नभः स्वच्छमित्यत्र लुप्तोपमा । यथावद्वर्णनात्स्वभावोक्तिश्चेत्यलंकारत्रयम् । शार्दूलविक्रीडितं वृत्तम् ॥ ११॥

तपोवनं निश्चित्य साध्यानुकूलमाह—तदेहीति । तत् तस्मात् कमण्डलुमेखलादिभिराश्रमत्वेन निर्णीतत्वाद्धेतोरित्यर्थः । प्रविश्यावलोकयावः । एवं च निवासयोग्यत्वनिश्चयोऽतिसुलभः स्यादिति भावः । आश्रमस्तूक्तहेतुभिर्निर्णीत एव शिष्यमाणो निवासयोग्यतानिर्णयः प्रवेशावलोकनाभ्यां सम्पादितः स्यादिति निर्गलितोऽर्थः ।

मुनिजनाधिष्ठिततपोवनातिरमणीयतामीक्षमाणो नायकः सविस्मयं ब्रूते—अहो नु खल्विति । (आश्चर्ये हि निपातसमुदायः) मुदितेन सन्तुष्टेन मुनिजनेन प्रविचार्य्यमाणो निरूप्यमाणः संदिग्धः संशयास्पदीभूतो वेदवाक्यानां विस्तरो यस्मिन् तथोक्तस्य । तथा—पठन्तोऽभ्यासं कुर्वन्तो ये वटुजना मुनिबालकास्तैराच्छिद्यमाना समन्तात् खण्डतामापद्यमाना आर्द्रा अशुष्काः समिधो यज्ञकाष्ठानि यस्मिन् तत्तथोक्तं तस्य । तथा—तापसकुमारिकाभिर्मुनिकन्याभिरापूर्यमाणा संभ्रियमाणा बाल-

मधुरमिव वदन्तः स्वागतं भृङ्गशब्दै-
र्नतिमिव फलनम्रैः कुर्वतेऽमी शिरोभिः।
मम ददत इवार्घ्यं पुष्पवृष्टिं किरन्तः
कथमतिथिसपर्य्यां शिक्षिताः शाखिनोऽपि ॥१२॥

तन्निवासयोग्यमिदं तपोवनम्। मन्ये भविष्यतीह वसतामस्माकं निर्वृतिः।

---

वृक्षाणामत्यल्पवयस्कतरूणाम् आलवालाः तरुतलजलाधारभूतवर्तुलाकारवृतिविशेषा यस्मिन् तथोक्तस्य। (आलवानि सिक्तजलानि आलाति समन्ताद्गृह्णातीत्यालवालशब्दव्युत्पत्तिः) पठदित्युक्त्वा तद्बुद्धिवैशद्यातिबाहुल्यं प्रकाशयते। विस्तरशब्दो हि वेदशाखानामतिबाहुल्यात्सन्दिग्धविचारयोः संगतिं प्रदर्शयति।

पुनस्तत्रैव हेत्वन्तरमाह—मधुरमिति। अमी पुरोदृश्यमानाः शाखिनो वृक्षाः (वृक्षो महीरुहः शाखी विटपी पादपस्तरुरित्यमरः) भृंगाणां द्विरेफाणां शब्दैर्गुञ्जनैः (करणैः) मधुरं श्रुतिसुखं यथा तथा स्वागतं शुभागमनं वदन्तो जिज्ञासमाना इव। तथा फलनम्रैः फलभारावनतैः शिरोभिरग्रभागैः नतिं नमस्कारं कुर्वंत इव प्रणमन्तीव। तथा पुष्पवृष्टिं किरन्तः पुष्पवर्षां कुर्वन्तः मम अर्घ्यं ददत इव मम सपर्यां कुर्वन्तीव कथं केन प्रकारेण अतिथिसपर्य्यामतिथिपूजां शिक्षिताः ग्राहिताः (शिक्षयतेर्ण्यन्तात्कर्मणि क्तः)। (मुनिभिरिति शेषः)। यत्र तरवोऽप्यतिथिसपर्य्यां जानन्ति तादृशस्य तपोवनस्य महत्त्वम-लौकिकरमणीयत्वञ्चाऽस्माभिरवर्णनीयमिति भावः। उत्प्रेक्षासूचकेवशब्दमहिम्ना पूर्वत्र पादत्रये उत्प्रेक्षाऽलङ्कारः। तदुक्तं दर्पणकृता—

भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना।

इति। मधुरालाप-प्रणति-सपर्य्यात्मकानाम्-शिक्षित-विनयि-नम्रपुरुषव्यवहाराणां शाखिषु समारोपात्समासोक्तिरलङ्कारो ध्वन्यत इत्यलङ्कारेणाऽलंकारध्वनिः। मालिनीवृत्तम्। ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणात् ॥१२॥

तपोवनशाखिनामतिथिसपर्य्यामीक्षमाणो नायकः पुनराह—तन्निवासयोग्यमिति। तत् तस्मात् पूर्वोक्तानेकगुणसामग्रीसत्त्वादित्यर्थः। निवासयोग्यम्—तातेप्सितकुशसमिदादिसमुचितत्वाद्योग्यताऽत्र तिष्ठत्येवेति भावः। निवासे प्रादेशिकं मुख्यफलमाह—मन्ये। तत्र तत्र निरीक्षितैरनुमितैश्च हेतुभिरित्यर्थः। निर्वृतिः सुखम्।

विदूषकः—( क ) भो वअस्स ! किं क्खु एदे ईसिबलिअकन्धरा णिच्चलमुहावसरंतदरदलिअदब्भकवला समुण्णमिददिण्णेक्ककण्णा सुहणिमीलिदलोअणा आअण्णंता बिअ हरिणा लक्खीअन्ति ।

नायकः—( कर्णं दत्त्वा ) सखे ! सम्यगुपलक्षितम् । तथा हि—

स्थानप्राप्तावधानं प्रकटितसमतामन्द्रतारव्यवस्था-
निर्ह्लादिन्या विपञ्च्या मिलितमलिरुतेनेव तन्त्रीस्वरेण ।

---

( क ) भो वयस्य ! किं खल्वेते ईषद्वलितकन्धरा निश्चलमुखापसरद्दरदलितदर्भकवलाः समुन्नमितदत्तैककर्णाः सुखनिमीलितलोचना आकर्णयन्त इव हरिणा लक्ष्यन्ते ।

---

(क) नायकोक्तिमाकर्ण्य तं रसान्तरे प्रवेशयितुकामो विदूषक आह–भो वयस्येति। भो इत्युक्त्या इतो विलोक्यतां भवतेत्यर्थः फलति। (किं नु खल्विति निपातसमुदायोऽद्भुतार्थे ) ईषद्वलिता किञ्चिद्वक्री ता वक्रताम्प्रापिता कन्धरा ग्रीवा यैस्तथाभूताः । तथा—निश्चलानि रोमन्थादिव्यापाराभावात्स्थिराणि यानि मुखानि तेभ्योऽपसरन्तः स्खलन्तो दरदलिता ईषत्खण्डिता दर्भकवलाः कुशाङ्कुरग्रासा येषां ते तथोक्ताः। तथा—समुन्नमितः सम्यगुत्थापितो दत्तः शब्दश्रवणार्थमवधानम्प्रापित एकोऽद्वितीयः कर्णो यैस्तादृशाः। तथा—सुखेन निमीलिते सङ्कुचिते लोचने येषां तथोक्ताः। आकर्णयन्त इव श्रृण्वन्त इव ( किमपीति शेषः )।

विदूषकोक्त्या झटिति दत्तलोचनो नायको गीतमाकर्ण्य हरिणांश्च वीक्ष्य तम्प्रत्याह—सखे इति। सम्यक् यथावस्तु उपलक्षितं चिह्नेन ज्ञापितम्। अपूर्वानन्दसन्दोहजनकवस्तु प्रदर्श्य मित्रत्वोचितं सम्पादितमित्यर्थः। एतेनाऽऽश्चर्य्यस्य तदुत्थापितौत्सुक्यस्य चाऽभिव्यक्तिः।

पुनश्च तपोवनं निश्चेतुमेव हेत्वन्तरमाह–स्थानेति । एते दृश्यमाना इत्यर्थः। व्याजिह्मानि सालसानि अंगानि येषां ते तथोक्ता गीताकर्णनाभिप्रायेण निश्चलांगा इत्यर्थः। ( जिह्मस्तु कुटिलेऽलसे इत्यमरः ) कुरंगा मृगाः ( मृगे कुरंगवातायुहरिणाजिनयोनय इत्यमरः ) दन्तानामन्तरालेषु मध्येषु स्थिता विद्यमाना ये तृणकवलाः शष्पग्रासास्तेषां छेदशब्दं चर्वणध्वनिं नियम्य प्रतिरोध्य चर्वणध्वनिर्बाधको यथा न भवेत्तथा विधायेति भावः। प्रकटिता आविष्कृता या समतया साद्दश्येन आमन्द्रतारव्यवस्था गम्भीरोच्चव्यवस्थितिः तया निर्ह्रादोऽस्त्यस्या निर्ह्रादिनी तस्या निर्ह्रादिन्या वादितायाः ( स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वना इत्यमरः ) विपञ्च्या वीणाया ( विपूर्वकात्-पचि विस्तारे इत्यस्मात्पचा-

एते दन्तान्तरालस्थिततृणकवलच्छेदशब्दं निशम्य
व्याजिह्माङ्गाः कुरङ्गाः स्फुटललितपदं गीतमाकर्णयन्ति ॥१३॥

विदूषकः—(क) भो वअस्स ! को उण एसो तबोवणे गाअदि ।

नायकः—यथा कोमलांगुलितलाभिहन्यमाना नातिस्फुटं क्वणंति तन्त्र्यस्तथा काकलीप्रधानं गीयत इति तर्कयामि (अंगुल्यग्रेणाग्रतो निर्दिशन्) अस्मिन्नायतने देवतामाराधयन्ती काचिद्दिव्या योषिदुपवीणयति ।

विदूषकः—(ख) भो वअस्स ! एहि अम्हेवि देवदाअदणं पेक्खम्ह ।

(क) भो वयस्य ! कः पुनरेष तपोवने गायति ।

(ख) भो वयस्य ! एहि आवामपि देवतायतनं प्रेक्षावहि ।

दित्वादचि गौरादित्वान्ङीषि च विपञ्चीत्यस्य सिद्धिः)। (वीणा तु वल्लकी, विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनीत्यमरः) तन्त्रीस्वरेण तन्त्रीशब्देन अलिरुतेन भ्रमरगुञ्जितेन इव मिलितं सम्बद्धम्। तथा स्फुटितानि व्यक्तानि ललितानि मञ्जुलानि पदानि सुप्तिङन्तरूपाणि यस्मिन् तथोक्तम् गीतं गानं (कर्म) स्थाने समुचितस्थाने प्राप्तम् अवधानं सावधानत्वं यथा तथा आकर्णयन्ति श्रृण्वन्ति। स्वभावोक्तिः। अलिरुततेनेवेत्यत्रोपमासूचकेवशब्दसत्त्वादुपमा चेत्यनयोः संसृष्टिः। स्रग्धरा वृत्तम् ॥ १३ ॥

(क) अनास्वादितविषयानन्दस्य नायकस्य चेतोविकारमालक्ष्य विदूषको जिज्ञासते-कः पुनरेष इति। तपोवने यागादिक्रियासक्तचेतसामृषीणां नृत्त-गीताद्यनास्पदे स्थाने इत्यर्थः। क एष गायति कस्यैवमनुचिता प्रगल्भतेति भावः।

(ख) विदूषकोक्तेरुत्तरं निश्चित्याह—यथेति। कोमलांगुलितलाभिहन्यमानाः=कोमलानि मृदुलानि यानि अङ्गुलितलानि तैरभिहन्यमानास्ताड्यमाना इत्यर्थः। क्वणन्ति = स्वनन्ति। क्वणनस्य नातिस्फुटतयाऽङ्गुलीनां कोमलत्वं, स्वरपूर्त्तिवैषम्याभावपूर्वंकान्तिमनोज्ञत्वं च द्योत्यते। काकलीप्रधानं = काकली सूक्ष्मो मधुरास्फुटो ध्वनिः स प्रधानं यस्मिन् तद्यथा तथा (काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे इत्यमरः)। आयतने = मन्दिरे। दिव्ययोषित् सुरस्त्री। (दिवि भवा दिव्या भवार्थे यत् सा चासौ योषिच्चेति विग्रहः) उपवीणयति = वीणया उपगायति वीणावादनपूर्वकं गानं करोतीत्यर्थः। (उपवीणाशब्दान्नामधातवीयो णिच्)

देवमन्दिरव्याजेन तत्र नायकं निनीषोर्विदूषकस्योक्तिः—एतद् देवतायतनमिति। गानविशेषप्रशंसया नायकोत्सुकतामीक्षमाणस्य विदूषकस्य गानकर्त्रीविलोकनद्वारा तां विवर्द्धयितुमेष यत्नः।

नायकः—वयस्य ! साधूक्तं खलु भवता । वन्द्याः खलु देवताः । ( उपसर्पन् सहसा स्थित्वा ) वयस्य ! कदाचिद् द्रष्टुमनर्होऽयं जनो भवति । तदावां तमालगुल्मान्तरितौ पश्यन्तावक्सरं प्रतिपालयावः । (तथा कुरुतः)

( ततः प्रविशति भूमावुपविष्टा वीणां वादयन्ती मलयवती चेटी च )।

नायिका—( गायति )—

उत्फुल्लकमलकेसरपरागगौरद्युते ! मम हि गौरि ! ।
अभिवाञ्छितं प्रसिध्यतु भगवति ! युष्मत्प्रसादेन ॥१४॥

नायकः—( कर्णं दत्वा ) वयस्य ! अहो गीतम् ! अहो वाद्यम् !!

---

देवताऽवलोकनसापेक्षं तद्वचनमित्यवगत्याह—साधूक्तमिति । देवदर्शनस्येप्सितफलसाधकत्वात्त्वदुक्तिरभ्युपेयत इति भावः । सहसा = हठात् अविचार्यैवेत्यर्थः । उपसर्पन् = अन्तिकं गच्छन् । (कदाचिदिति पाक्षिकसन्देहे) । अनर्हः = अयोग्यः । अयोग्यत्वे कुलस्त्रीत्वादिति हेतुश्चिन्तनीयः । अयं जनः = इयं दिव्ययोपित् । तमालगुल्मान्तरितौ = तमालानां तमालवृक्षाणां गुल्मेन समूहेन अन्तरितौ व्यवहितौ । तमालतरुपत्राणामतिश्यामलत्वात्तत्प्रदेशस्य तु सुतरां तादृशत्वात्तत्रस्थितस्य नान्यकर्तृकदर्शनसम्भावनेति भावः ।

पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम् ।
सौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम् ।
आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत् ॥

इति दर्पणोक्त्यनुरोधान्मलयवतीगाथाया महाराष्ट्रीभाषयैवौचित्येऽपि तस्या दिव्यस्त्रीत्वादुत्तमपुरुषाणामिवोत्तमस्त्रीणामपि संस्कृतभाषयाऽभिधानेऽनौचित्याभावात् । एवञ्च सङ्गीतव्याजेन संस्कृतभाषयैव नायिका स्वाशयं प्रकाशयति—उत्फुल्लेति । उत्फुल्लानि विकासं प्राप्तानि यानि कमलानि तेषां केसरेषु किञ्जल्केषु यः परागो रजस्तद्वत् द्युतिः कान्तिर्यस्याः सा तथोक्ता तत्सम्बुद्धौ । स्वर्णप्रभे ! इत्यर्थः । भगवति ! श्री-काम-माहात्म्य-वीर्य-यत्न-भानु-कीर्त्तिरूपभगशब्दार्थाश्रयैकभूते ! इत्यर्थः । अतो न किमपि दुष्प्राप्यमिति भावः । गौरि! शिवे! युष्मत्प्रसादेन भवतीदयाबाहुल्येन मम अभिवाञ्छितम् अभिलषितं हीति निश्चयेन प्रसिध्यतु सफलं भवत्वित्यर्थः । परागवत् गौरी द्युतिरिति विग्रहे वतेरुपमासूचकस्य लुप्तत्वाल्लुप्तोपमाऽलङ्कारः । आर्यावृत्तम् ॥१४॥

गीतश्रवणजातविस्मयो नायको विदूषकम्प्रत्याह—वयस्येति । अहो गीतम् = माधुर्यातिशयवशाद्विस्मयपराकाष्ठामधिरोहतीत्यर्थः । अहो वाद्यम् = वीणावादनप्रकारोऽपि विस्मयातिशयमुद्भावयतीत्यर्थः ।

व्यक्तिर्व्यञ्जनधातुना दशविधेनाप्यत्र लब्धाऽमुना
विस्पष्टो द्रुतमध्यलम्बितपरिच्छिन्नस्त्रिधाऽयं लयः ।

गीतमेव विशिनष्टि—व्यक्तिरिति । अमुना (आकर्णितेनेति शेषः) दशविधेन दशप्रकारेणापि व्यञ्जनधातुना व्यज्यंते व्यक्तीक्रियंते स्वरा येन तद् व्यञ्जनं तदेव धातुर्वादनप्रकारस्तेन स्वरव्यञ्जकवीणावादनप्रकारेणेत्यर्थः । अत्र सङ्गीते व्यक्तिः स्वरप्राकट्यं लब्धा प्राप्ता, एभिर्दशविधवीणावादनभेदैः स्वरा व्यक्ता इति भावः। तथा अयम् (श्रुत इति शेषः)* लयः सङ्गीतस्य क्रिया कालयोः साम्यमित्यर्थः (तालः कालक्रियामानं लयः साम्यमथाऽस्त्रियामित्यमरः)। द्रुतं शीघ्रोच्चरितत्वम् मध्यं नातिशीघ्रोच्चरितत्वम्। विलम्बितं विलम्बोच्चरितत्वं तैः परिच्छिन्नो विशेषितः, अत एव त्रिधा द्रुत-मध्य-विलम्बितभेदेन त्रिविधः विस्पष्टः सुव्यक्तीकृतः। तथा गोपुच्छा तदाख्या यतिः प्रमुखः प्रधानं यासु ताः, गोपुच्छाप्रभृतय इत्यर्थः। तिस्रः गोपुच्छा—स्रोतोगता—समा इति भेदत्रयेण त्रिप्रकारा अपि † यतयो विच्छेदाः क्रमेण यथाक्रमम् सम्पादिताः स्पष्टीकृता इत्यर्थः। तथा तु पुनः (पुनरर्थेऽत्र तुशब्दः) त्रयस्त्रिविधा राद्ध—विद्ध—शय्यागतरूपा इत्यर्थः। आतोद्यानुगता आतोद्यं वीणा तदनुगता तत्सङ्गता इत्यर्थः। वीणा—वंशी—मृदङ्गादिरूपाऽनेकार्थकोऽप्यातोद्यशब्दो (वीणां वादयन्ती) त्युत्पत्त्या केवलं वीणार्थक एवात्र गृह्यते। ‡ वाद्यविधयो वाद्य-

* एतल्लक्षणं तद्भेदप्रकारश्च यथा—

तालान्तरालवर्ती यः स कालो लय उच्यते ।
त्रिविधः स च विज्ञेयो द्रुतो मध्यो विलम्बितः ॥ इति ।

† एतल्लक्षणं यथा—

तालच्छन्दोऽत्रगतिविधये वाद्यते यो विरामो-
वाद्यैर्हीनः श्रवणसुभगो नामतः सा यतिः स्यात् ॥ इति ।

अस्यास्त्रैविध्यमप्युक्तम्—

लयगानाद् यतिः सम्यक् कथिता दत्तिलादिभिः ।
समा श्रोतोवहा चैव गोपुच्छा चेति सा त्रिधा ॥ इति ।

‡ राद्ध—विद्ध—शय्यागतभेदैस्त्रिविधस्य वाद्यस्य लक्षणं प्रतिपादितं यथा—

समा यतिर्लयश्चैव द्रुतो यत्र भवेदिह ।
तदैवोपरिपाणिश्च राद्धं वाद्यं च तद्भवेत् ॥
अवपाणिस्तु यत्र स्यात् प्रयोगो लम्बितो लयः ।
गोपुच्छा च यतिर्वाद्यं तद्वै शय्यागतं भवेत् ॥
स्रोतोगता यतिर्यत्र लयो मध्यस्तथैव च ।
समपाणिप्रयोगश्च विद्धवाद्यं तु तद्भवेत् ॥

गोपुच्छप्रमुखाः क्रमेण यतयस्तिस्रोऽपि सम्पादिता-
स्त्वातोद्यानुगताश्च वाद्यविधयः सम्यक् त्रयो दर्शिताः ॥१४॥

चेटी—( सप्रणयम् ) (क) भट्टिदारिए ! चिरं क्खु वादअंतीए कुदो ण परिस्समो अग्गहत्थाणं।

नायिका—( साधिक्षेपम् ) (ख) हञ्जे ! कुदो मे देईए पुरदो वीणं वादअंतीए अग्गहत्थाणं परिस्समो।

चेटी—(ग) भट्टिदारिए ! णं भणामि किं एदाए णिक्करुणाए पुरदो वाइदेण। जा एत्तिअं कालं कण्णआजणदुक्करेहिं णिअमोवासणेहिं आराधअंतीए अज्जवि ण दे पसादं दंसेदि।

---

(क) भर्तृदारिके ! चिरं खलु वादयन्त्याः कुतो न परिश्रमोऽग्रहस्तयोः।

(ख) हञ्जे ! कुतो मे देव्याः पुरतो वीणां वादयन्त्या अग्रहस्तयोः परिश्रमः।

(ग) भर्तृदारिके ! ननु भणामि किमेतस्या निष्करुणायाः पुरतो वादितेन। या एतावन्तं कालं कन्यकाजनदुष्करैर्नियमोपासनैराराधयन्त्या अद्यापि न ते प्रसादं दर्शयति।

---

व्यापाराश्च सम्यक् दर्शिता व्यक्तीकृता इत्यर्थः। स्वभावोक्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥१५॥

(क) वीणावादनेऽतिशयाग्रहमालोक्य नायिकाम्प्रति सस्नेहं चेट्युक्तिः—भर्तृदारिके !। अग्रहस्तयोः = हस्ताग्रभागयोः। हस्तयोरग्रे अग्रहस्तौ तयोः। ( राजदन्तादिषु परमिति हस्तशब्दस्य परनिपातः ) कुतो न परिश्रमः चिरवादनं हि परिश्रमहेतुः। अतोऽवश्यमेव परिश्रमो जात इत्यर्थः।

(ख) साकूतां चेट्युक्तिमविज्ञायैव नायिका तामधिक्षिपति—हञ्जे ! चेटीम्प्रति राजकन्यकाकर्तृकं सम्बोधनमिदं नाटकादावतिप्रसिद्धम्। ( हण्डे-हञ्जे-हलाऽऽह्वाने नीचां-चेटीं-सखीम्प्रति, इत्यमरः )। जगन्मातुर्देव्याः समीपेऽनुरागेण वीणां वादयन्त्या न कोऽपि मे परिश्रमः सम्भाव्यतामित्यर्थः।

(ग) अज्ञातनिजाशयां नायिकाम्प्रति तदुक्तिमाकर्ण्य चेट्युक्तिः—भर्तृदारिके ! ननु भणामि = नावगतं त्वया मदीयतात्पर्यमतस्तदपि प्रकाशयामीत्यर्थः। निष्करुणाया दयारहिताया नैष्कारुण्यस्य कार्यादनुमानम्भवतीति भावः। एतस्या देव्या गौर्या इति यावत् पुरतोऽग्रे वादितेन वीणावादनेन किं ? न किमपि फलमित्यर्थः। या देवी एतावन्तं कालम् एतत्कालपर्यन्तं कन्यकाजनदुष्करैः कन्यकाजनानाम् असुलभैरित्यर्थः। नियमोपासनैः व्रत-परिचर्यारूपैः। आराधयन्त्याः सेवमानायाः

विदूषकः—(क) कण्णआ क्खु एषा, किं ण पेक्खम्ह ।

नायकः—को दोषः ? निर्दोषदर्शनाः कन्यका भवन्ति । किन्तु कदाचिदस्मान् दृष्ट्वा बालभावसुलभात् साध्वसान्न चिरमिह तिष्ठेत्, तदनेनैव तमालजालान्तरेण पश्यावः ।

विदूषकः—( ख ) एव्वं करेम्ह ।

( उभौ पश्यतः )

विदूषकः—(ग) ( दृष्ट्वा सविस्मयम् ) भो वअस्स । पेक्ख पेक्ख । अहह अच्चरिअं । एसो ण केवलं वीणाविण्णाणेणेव्व सुहं करेदि । जाव इमिणा वीणाविण्णाणाणुरूवेण रूवेण वि अच्छीणं सुहं उप्पादेदि। का उण

---

(क) कन्यका खल्वेषा, किं न प्रेक्षावहे ?

(ख) एवं कुर्वः ।

(ग) भो भवस्य ! प्रेक्षस्व प्रेक्षस्व । अहह आश्चर्य्यम् । न केवलं वीणाविज्ञानेनैव सुखं करोति । यावत् अनेन वीणाविज्ञानानुरूपेण रूपेणापि अक्ष्णोः सुखमुत्पादयति । का पुनरेषा ? किं तावत् देवी ? आहोस्वित् नागकन्यका ? आहोस्वित् विद्याधरदारिका ? आहोस्वित् सिद्धकुलसम्भवेति ? ।

---

ते तुभ्यम् प्रसादं परितोषं । दर्शयति प्रकाशयति । वरदानादिति शेषः । इत्यभिप्रेत्यैव मे परिश्रमप्रश्नो न तु तवाऽपटुत्वाशङ्कयेति भावः ।

(क) नायिका—चेट्योर्मिथो भाषणात्कन्यां निश्चित्य विदूषकस्य साशयोक्तिः—कन्यका खल्विति । कुलस्त्रीदर्शने दोषो नतु कन्यादर्शन इति तदन्तिकगमने न कापि हानिरिति भावः ।

(ख) को दोषः ( एतां द्रष्टुमिति शेषः ) दोषान्निष्क्रान्तं निर्दोषं तादृशं दर्शनं यासां ता निर्दोषदर्शनाः नच पश्येत् परस्त्रियमिति शास्त्रात्परस्त्रीदर्शनमेव निषेधविषयो नतु कन्यादर्शनं तस्याः परस्त्रीत्वाभावादिति भावः । अस्मान् अविदितसकलपरिचयान् । बालभावसुलभात् बाल्ये वयसि स्वभावतो जायमानात् साध्वसात् भयात् ( भीतिर्भीः साध्वसं भयमित्यमरः ) । तमालजालान्तरेण तमालवृक्षसमूहच्छिद्रेण ।

(ग) तथावलोकनाद् विस्मितस्य नायकचेतसो भाविरतिसुखास्वादनोपायमाह—भोवयस्य ? । वीणाविज्ञानेन वीणावादने विशेषतो नैपुण्येनेत्यर्थः । वीणाविज्ञानानुरूपेण वीणाविज्ञानस्य अनुरूपं वीणाविज्ञानानुरूपं तेन वीणावादननैपुण्यसदृशेनेत्यर्थः । रूपेणाऽपि सौन्दर्येणापि । (आहो—स्वित् इति निपातनद्वयम् ) तत्राद्यो विकल्पेऽपरश्च प्रश्ने ।

एसा ? किं दाव देई ? आहो णाअकण्णआ ? आहो विज्जाहरदारिआ ? आहो सिद्धकुलसम्भवेत्ति ?

नायकः—( सस्पृहमवलोकयन् ) वयस्य ! केयमिति नावगच्छामि ।

एतत् पुनरहं जानामि ।—

स्वर्गस्त्री यदि तत् कृतार्थमभवच्चक्षुः सहस्रं हरे-
र्नागी चेन्न रसातलं शशभृता शून्यं मुखेऽस्याः स्थिते ।

---

अदृष्टपूर्वसौन्दर्यवतीं नायिकां विलोक्य नायकस्तदुत्कृष्टतामुपपादयति—केयमिति । इयं ( कन्या ) का किं जातीया इति नावगच्छामि न वेद्मि । देश-जातिभेदादनेकविधेषु स्त्रीसौन्दर्येषु मया दृष्टेषु क्वापीदृशसौन्दर्यस्यादर्शनादिति भावः । एतत्पुनरहं जाने—एतेन नायिकागुणोत्कीर्तनोत्सुकता प्रकाश्यते ।

एतत्पुनरहं जाने इति पूर्वोक्तवाक्यगतैतत्पदलभ्यमर्थमाह—स्वर्गस्त्रीति । यदि इयं विलोचनपथे पथिकायमानेत्यर्थः । स्वर्गस्त्री स्वर्गवास्तव्या काचित् सुराङ्गना भवेत्, तत् तदा हरेरिन्द्रस्य (यमा-निलेन्द्र-चन्द्रार्क-विष्णु-सिंहांशु—वाजिषु । शुकाहि-कपि-भेकेषु हरिर्ना कपिले त्रिषु इत्यमरः ) चक्षुः सहस्रं सहस्रसंख्यकं चक्षुरित्यर्थः । कृतः सम्पादितोऽर्थः प्रयोजनं येन तत् सफलप्रयोजनमित्यर्थः अभवत् । स्वर्गस्त्रीत्युक्त्या चक्षुर्द्वयकार्यसम्पादनमेव सहस्रचक्षुरपि कुर्यात्तदाऽलमधिकसंख्ययेत्येवंरूपस्येन्द्रखेदस्य परिहारो व्यज्यते । चेत् यदि ( इयम् ) नागी नागकन्या ( अस्ति )—( तदा ) अस्या मुखे स्थिते विद्यमाने ( सति ) रसातलं पातालं शशं बिभर्तीति शशभृत् तेन पूर्णचन्द्रेणेत्यर्थः शून्यं विरहितं न ( अभवत् ) मुखस्य चन्द्रतुल्यत्वादिति भावः । एतेन लोकान्तरे सार्वदिकपूर्णचन्द्रसंयोगाभावादस्या मुखचन्द्रेण पातालस्य सार्वदिकसंयोगेन लोकान्तराद् वैलक्षण्यं व्यज्यते । चेत् यदि ( इयम् ) विद्याधरी विद्याधरजातीया ( भवेत् ) तदा नोऽस्माकं जातिः विद्याधरजातिरित्यर्थः सकलान्यजातिजयिनी त्रिभुवनव्याप्तजातिपराभवकारिणी (सकलाम् अन्यां जातिं जेतुं शीलमस्या इति विग्रहे ताच्छील्यार्थे णिनिः )—( भवेत् ) । यदि ( इयम् ) सिद्धान्वयजा सिद्धानां देवयोनिविशेषाणामन्वये वंशे जातेत्यर्थः । ( भवेत् )—( सप्तम्यां जनेर्डः, इति डः ) । ततस्तदा सिद्धाः तदाख्यदेवयोनिविशेषाः त्रयाणां लोकानां समाहारस्त्रिभुवनं तस्मिन् त्रिभुवने लोकत्रये प्रसिद्धा विख्याता ( अभवन् ) । कौस्तुभेन जलनिधेराकल्पं रत्नाकरत्वमिव सिद्धान्वयस्याप्येतत्स्त्रीरत्नेन स्त्रीरत्नाकरत्वमाकल्पं स्थास्यतीति भावः । एतेन लोकोत्तरस्त्रीदर्शनात्समुद्दीपितस्य सस्नेहाक्षिपातादिना गुणगौरववर्णनेन च सहकृतस्य भावि-

जाति नः सकलान्यजातिजयिनी विद्याधरी चदियं
स्यात् सिद्धान्वयजा यदि त्रिभुवने सिद्धाः प्रसिद्धास्ततः ॥ १६ ॥

विदूषकः—( नायकमवलोक्य सहर्षमात्मगतम् ) (क) दिट्ठिआ चिरस्स दाव कालस्स पड़िदो क्खु एसो गोअरे मम्महस्स । ( आत्मानं निर्दिश्य भोजनमभिनीय ) अहवा णहि णहि, मम एव्व एक्कस्स वह्मणस्स ।

चेटी—(सप्रणयम्) (ख) भट्टिदारिए ! णं भणामि, किं एदाए णिक्करुणाए पुरदो वाइदेण ? ( इति वीणामाक्षिपति )

नायिका—(सरोषम्) (ग) हञ्जे ! मा भअवदिं गोरिं अधिक्खिव । णं किदो मे भअवदीए पसादो ।

---

(क) दिष्ट्या चिरस्य तावत् कालस्य पतितः खल्वेप गोचरे मन्मथस्य । अथ वा नहि नहि, ममैवैकस्य ब्राह्मणस्य ।

(ख) भर्तृदारिके । ननु भणामि, किमेतस्या निष्करुणायाः पुरतो वादितेन ?

(ग) हञ्जे ! मा भगवतीं गौरीमधिक्षिप । नन्वद्य कृतो मे भगवत्या प्रसादः ।

---

रतिसमावेशस्य शृङ्गाररसस्याविर्भावः सूचितः । मलयवत्यां स्वर्गस्त्रीत्वादेः सन्देहात्सन्देहालङ्कारः ।

सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः ।

इति दर्पणोक्त्या प्रकृतेऽप्रकृतवस्तुनः संशयस्यैवोक्तालङ्कारविषयत्वात् । स चेन्द्र नेत्रसहस्रसाफल्योक्त्याऽतिशयोक्त्यलंकारेण, मलयवत्या एकस्या एव स्वर्गस्त्रीत्ववि-शिष्टादिरूपेणोल्लेखादुल्लेखालङ्कारेण च संसृष्टः । शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

(क) दिष्ट्येति । दिष्ट्या भाग्येन । चिरस्य कालस्य ( सम्बन्धविवक्षयाऽत्र षष्ठी ) चिरेण कालेनेत्यर्थः । ममैव एकस्य ब्राह्मणस्य ( गोचरे पतित इति पूर्वोक्तं शेषः । ) स्मरवशीकृतचेतसो नायकस्याभिलषितसिद्धिर्मत्प्रयत्नसाध्या तत्सिद्धौ च यथेच्छभोजनलाभो मे भविष्यतीति तदाशयः ।

(ख) चिरकालेऽतीतेऽपि प्रसादोन्मुखीं देवीमवीक्ष्य प्रवृद्धकोपा चेटी ( सप्रणयम् ) तामधिक्षिपति—भर्तृदारिके ! इति । सप्रणयं सस्नेहम् । असकृद्वारिताऽपि वीणावादनमत्यजन्ती मूढा प्रतीयसे त्वम् अतो भूयोऽपि क्रियया तद-वरोधो विधीयते मयेति भावः ।

(ग) चेटीकृततदवरोधमसहमाना नायिका ताम्प्रत्याह—हञ्जे ! इति । अधि-क्षिप = तिरस्कुरु । देवीं—गौरीम्प्रति तवाधिक्षेपः सर्वथाऽनुचितः । प्रसादाऽदर्शन-बुद्ध्यापि नोचितोऽसौ स्वप्ने प्रसादस्याद्य सिद्धत्वादिति भावः ।

चेटी—( सहर्षम् ) (क) भट्टिदारिए ! कहेहि दाव कीरिसो ?

नायिका—(ख) हञ्जे ! जाणामि, अज्ज सिविणए एदं एव्व वीणं वादअंती भअबदीए गोरिए भणिदह्मि,—"बच्छे मलअवदि ! परितुट्ठह्मि तुह एदिणा वीणाविण्णाणादिसएण, इमाए अ बालजणदुक्कराए असाहारणाए ममोवरि भत्तिए । ता विज्जाहरचक्कवट्टी अचिरेण ज्जेव पाणिग्गहणं दे णिव्वत्तइस्सदि" त्ति ।

चेटी—( सहर्षम् ) ( ग ) भट्टिदारिए ! जइ एव्वं, ता कीस

---

( क ) भर्तृदारिके ! कथय तावत् कीदृशः ?

( ख ) हञ्जे ! जानामि, अद्य स्वप्ने एतामेव वीणां वादयन्ती भगवत्या गौर्य्या भणिताऽस्मि,—"वत्से मलयवति ! परितुष्टाऽस्मि तवैतेन वीणाविज्ञानातिशयेन, अनया च बालजनदुष्करया असाधारणया ममोपरि भक्त्या । तद् विद्याधरचक्रवर्त्ती अचिरेणैव ते पाणिग्रहणं निर्वर्त्तयिष्यति" इति ।

(ग) भर्तृदारिके ! यद्येवं तत् कस्मात् स्वप्नोऽयं भण्यते । ननु हृदयस्थितो वरो देव्या दत्तः ।

---

(क) प्रसादसिद्धिप्रतिभासिनीं नायिकोक्तिमाकर्ण्य सानन्दं जिज्ञासते चेटी—भार्तृदारिके ! इति । कीदृशः प्रसाद इति शेषः । अज्ञातप्रसादयैव मयाऽधिक्षिप्ता देवी ननु ज्ञातप्रसादयाऽतोऽत्रापि तवैव दोषो न ममापि, प्राक् त्वया तस्याज्ञापितत्वादिति भावः ।

(ख) चेटीकृतस्य पूर्वसन्दर्भगतप्रश्नस्योत्तरमाह—हञ्जे ! जानामीति । अद्य अतीतरात्रेरन्तिमे याम इत्यर्थः । एतेन स्वप्नफलेऽचिरभावित्वं सूच्यते । चरमयामगतस्वप्नस्य शास्त्रे शीघ्रफलदायित्वप्रतिपादनादिति भावः । जानामीति । वाक्यारम्भे वाक्यान्तराभिधानमविस्मरणस्थैर्यायेति भावः । स्वप्न इति । साक्षाद्दर्शनं यथा फलनैश्चित्यं प्रकाशयति तथा स्वप्नदर्शनमपीति तात्पर्यतो मया प्रसादः कृतो देव्येत्युक्तम् । वत्से ! पुत्रीवत् भूरिवात्सल्यद्योतनाय सम्बोधनमिदम् । वीणाविज्ञानातिशयेन = वीणावादनेऽतिनैपुण्येन । बालजनदुष्करया = अल्पवयस्कजनायोग्यया । विद्याधरचक्रवर्त्ती=विद्याधराणां तज्जातिदेवयोनिविशेषाणाम् चक्रवर्त्ती सम्राट् । पाणिग्रहणं=विवाहम् । निर्वर्त्तयिष्यति=सम्पादयिष्यति । पाणिग्रहणसम्पादके न पूर्वतश्चक्रवर्तित्वं सिद्धमपि तु पाणिग्रहणसम्पादनेनैवेति पाणिग्रहणं सम्पाद्य चक्रवर्त्ती भविष्यतीति तदाशयः ।

(ग) इत्थं स्वप्ननिवेदनसंतुष्टा चेटी तमेव प्रशंसति—भर्तृदारिके ! इति । हृदयस्थित ईप्सित इत्यर्थः । वर इति । द्व्यर्थकोऽयं शब्दः, तथा च वरो विषयो

सिविणअं इमं भणीअदि ? णं हिअअत्थिदो बरो देईए दिण्णो ।

विदूषकः—( श्रुत्वा ) ( क ) भो वअस्स ! अवसरो क्खु एसो अह्माणं देईदंसणस्स । ता एहि पविसह्म ।

नायकः—न तावत् प्रविशामि ।

विदूषकः—(अनिच्छन्तमपि नायकं बलादाकृष्य उपसृत्य) ( ख ) सोत्थि भोदीए । भोदि ! सच्चं ज्जेव चदुरिआ भणादि, बरो एव्व सो देईए दिण्णो ।

नायिका—(ससाध्वसमुत्तिष्ठन्ती नायकमुद्दिश्य) ( ग ) हञ्जे ! को णु क्खु एसो ?

---

(क) भो वयस्य ! अवसरः खल्वेषोऽस्माकं देवीदर्शनस्य । तदेहि प्रविशावः ।

(ख) स्वस्ति भवत्यै । भवति ! सत्यमेव चतुरिका भणति, वर एव स देव्या दत्तः ।

(ग) हञ्जे ! को नु खल्वेषः ? ।

---

विवाहसम्पाकः (पाणिग्रहीता) चेत्यर्थः । देवीशब्दोऽपि द्व्यर्थकः । तथा च एको गौरीरूपोऽर्थोऽपरश्च मलयवतीरूपो बोध्यः । सौन्दर्यातिशयेन चक्रवर्तिनः स्त्रीत्वेऽभिषेकस्य जनिष्यमाणत्वेन च मयवत्यां देवीसादृश्यादिति भावः । ( देवी कृताऽभिषेकायामित्यमरः ) । मलयवती-जीमूतवाहनसम्भोगोत्कीर्त्तनस्यैवाऽत्र नाटके प्रधानफलत्वात् वर-देवीपदयोर्द्व्यर्थत्वेन सुश्लिष्टत्वात् प्रधानफलस्योक्तस्याऽपेक्षितत्वाच्च चतुर्थं पताकास्थानमिदम्—

द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।
प्रधानार्थान्तरापेक्षी पताकास्थानकं परम् ॥

इति दर्पणोक्तेः ।

(क) इत्थमनयोर्भाषणे प्रवृत्ते प्रवेशक्षणमात्मनो निश्चित्य नर्मसाचिव्यं कर्तुकामो विदूषको नायकं छद्मना त्वरयति—भो वयस्येति । अवसरः खल्वेष इति । गीतश्रवण-अत्रागमन-तिरोधान-कन्यकादर्शन-तदन्वयविचारेषु जातेषु सम्प्रति देवी दर्शनस्य समय उपस्थित इत्यर्थः । उपसर्पावः=सन्निधिं गच्छावः ।

ससाध्वसम्=साध्वसेन भयेन सहितं यथा तथेत्यर्थः ( भीतिर्भीः साध्वसं भयमित्यमरः ) ।

६५ चेटी—( नायकं निरूप्य ) (क) इमाए अणण्णसरिसाए आकि- दीए एसो सो भअवदीए पसादीकिदो त्ति तक्केमि ।

नायिका—( सस्पृहं सलज्जञ्च नायकमवलोकयति । )

नायकः—

तनुरियं तरलायतलोचने !
श्वसितकम्पितपीनघनस्तनि ! ।
श्रममलं तपसैव गता पुनः
किमिति सम्भ्रमकारिणि ! खिद्यते ? ॥१७॥

---

(क) अनया अनन्यसदृश्या आकृत्या एष स भगवत्या प्रसादीकृत इति तर्कयामि ।

---

(क)निरूप्य=दृष्ट्वा । अपवार्य्यं=विमुखीभूय वैमुख्ये नायककर्तृकं निरूपणमेव हेतुत्वेन ग्राह्यम् । सः=विद्याधरचक्रवर्ती । प्रसादीकृतः=दययाऽत्रोपस्थापित इत्यर्थः ।

आत्मनि स्पृहावतीमवगच्छतो नायकस्य नायिकाम्प्रति प्रियोक्तिरियम्— तनुरिति । आयते च ते लोचने आयतलोचने तरले आयतलोचने यस्यास्तत्सम्बुद्धौ हे तरलायतलोचने ! चपलदीर्घनयने ! । श्वसितेन निश्वासेन कम्पितौ पीनावतिस्थूलौ घनौ सान्द्रौ स्तनौ यस्यास्तत्संबुद्धौ । सम्भ्रमं सन्देहं कर्तुं शीलमस्या इति सम्भ्रमकारिणी तत्सम्बुद्धौ मदवलोकनजातभ्रान्तिमतीत्यर्थः । इयं पुरोदृश्यमानेत्यर्थः तनुः शरीरं तवेति शेषः । तनुशब्दमहिम्ना कार्श्यमपि व्यज्यते । तपसा तपश्चर्यया एव अलम् अत्यर्थं श्रमं गता श्रान्तेत्यर्थः ( अस्तीति क्रियाशेषः ) । पुनः किमिति कथं खिद्यसे वीणावादनेऽतिशयाऽऽग्रहेण खेदं प्रकाशयसीत्यर्थः । एतेन—

भयं खेदं च सन्त्यज्य स्वाच्छन्द्यमवलम्बताम् ।
नाऽस्य ते प्रतिकूलोऽहमनुकूलोऽस्मि सर्वथा ॥

इति पीयूषवीचिप्लाविनो नायकस्य प्रियोक्तिर्द्योत्यते । आकृति-चेष्टाभ्यां साध्वसत्वाऽभिव्यक्त्या गौरीदयाऽऽनुकूल्येन प्राप्तपुरुषदर्शनलाभव्याजद्वारा रतिखेदस्य सूचनात् पद्येऽस्मिन् सूक्ष्मालङ्कारः ।

संलक्षितस्तु सूक्ष्मोऽर्थं आकारेणेङ्गितेन वा ।
कयाऽपि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते ॥

इति दर्पणोक्तलक्षणात् । द्रुतविलम्बितं वृत्तम् । द्रुतविलम्बितमाह नभौ भराविति लक्षणात् ॥१७॥

नायिका--( अपवार्य्यं ) (क) हञ्जे! अदिसद्धसेण ण सक्कुणोमि एदस्स अहिमुही ट्ठादुं।

( नायकं तिर्य्यक् सलज्जञ्च पश्यन्ती किञ्चित् पराङ्मुखी तिष्ठति। )

चेटी—(ख) भट्टिदारिए ! किं एदम् ?

नायिका—(ग) हञ्जे ! ण सक्कुणोमि एदस्स आसण्णे चिट्ठिदुं। ता एहि अण्णेदो गच्छह्म (३३)। ( उत्थातुमिच्छति। )

विदूषकः—( घ ) भो ! भादि क्खु एसा। मम पठिअविज्जं बिअ मुहुत्तअं धारेमि।

नायकः—को दोषः ?

विदूषकः—( ङ ) भोदि ! किं एत्थ तुह्माणं तवोवणे ईरिस आआरो ?—जेण अदिही आअदो वाआमेत्तएण बि ण संभावीअदि ?

---

(क) हञ्जे। अतिसाध्वसेन न शक्नोमि एतस्याभिमुखी स्थातुम्।

(ख) भर्तृदारिके ! किमेतत् ?

(ग) हञ्जे ! न शक्नोमि एतस्यासन्ने स्थातुम्। तदेह्यन्यतो गच्छावः।

(घ) भो ! बिभेति खल्वेषा ! मम पठितविद्यामिव मुहूर्तं धारयामि।

(ङ) भवति ! किमत्र युष्माकं तपोवने ईदृश आचारः—येनातिथिरागतो वाङ्मात्रेणापि न सम्भाव्यते ?

---

अपवार्य=पराङ्मुखीभूय।

तिर्यक्=वक्रभावेन। पराङ्मुखी=परावृत्तानना।

आसन्ने=समीपे।

(घ) पुरुषदर्शनजातसाध्वसाद्गन्तुमुत्सुकां नायिकाम्वीक्ष्य स्वकार्यासिद्धिम्मन्यमानो विदूषको नायिकामवरोद्धुमुपायं रचयन् नायकम्प्रत्याह—भो ! इति। बिभेति=अपरिचितपुरुषदर्शनादिति भावः। मम पठितविद्यां=गुरुम्विना स्वेनैवाभ्यस्तविद्यामिवेत्यर्थः। गुरुशिक्षामनधिगम्य स्वाभ्यस्तविद्यां यथा क्षणमात्रं जनो धारयति तथैवैतामपि क्षणमात्रं धारयामि युक्त्यन्तरेणाऽवरोधयामीति तात्पर्यम्।

(ङ) अथ किंकर्त्तव्यविमूढां नायिकाम्वीक्ष्य विदूषकस्तया सहाऽऽभाषणोपायमारचयति—भवति !। आचारः = व्यवहारः। येन=आचारेणेति शेषः। ( हेतुतृतीयान्तम् )। वाङ्मात्रेणापि केवलया वाचाऽपीत्यर्थः। वागेव वाङ्मात्रमितिव्युत्पत्तिः (स्वार्थे मयट् प्रत्ययः)। न सम्भाव्यते न सत्क्रियते। उपस्थिताऽतिथिजनसम्भावनोपेक्षा नास्ति कुत्रापि। तपोवने भवतीनामियं नियता चेत् लोक-

चेटी—( नायिकां दृष्ट्वाऽऽत्मगतम् ) ( क ) अणुरज्जदी विअ एत्थ एदाए दिट्ठी। भोदु एव्वं दाव भणिस्सं ( प्रकाशम् ) भट्टिदारिए ! जुत्तं भणादि बह्मणो। उइदो क्खु दे अदिहिजणसक्कारो। ता किं ईरिसे महाणुभावे पड़िवत्तिमूढ़ा चिट्ठसि ? अहवा चिट्ठ तुमं, अहं एव्व जधाणुरूवं करिस्सं। ( नायकं निर्दिश्य ) साअदं अज्जस्स ? आसणपडिग्गहेण अलङ्करेदु अज्जो इमं पदेसं।

विदूषकः—(ख) भो बअस्स ! सोहणं एसा भणादि। उबविसिअ एत्थ मुहुत्तअं बीसमह्म।

नायकः—युक्तमाह भवान्।

( उभावुपविशतः। )

---

(क) अनुरज्यतीवात्रैतस्या दृष्टिः। भवतु एवं तावत् भणिष्यामि। भर्तृदारिके ! युक्तं भणति ब्राह्मणः। उचितः खलु ते अतिथिजनसत्कारः। तत किमीदृशे महानुभावे प्रतिपत्तिमूढ़ा तिष्ठसि ? अथवा तिष्ठ त्वम्, अहमेव यथाऽनुरूपं करिष्यामि। स्वागतमार्य्यस्य ? आसनपरिग्रहेणाऽलङ्करोत्वार्य्य इमं प्रदेशम्।

(ख) भो वयस्य ! शोभनमेषा भणति। उपविश्यात्र मुहूर्तं विश्राम्यावः।

---

व्यवहारविरोधान्नासावुत्तमां शोभां धारयतीति भावः। उक्तञ्चाऽतिथिसपर्यामधिकृत्य नीतिशास्त्रे यथा—

तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ इति ॥

(क) नायिकाऽऽशयं परीक्षितुमनाश्चेटी विमृशति—अनुरज्यतीवेति। अस्याः= मलयवत्याः। दृष्टिः=चक्षुः। दृष्टिरित्यनेन विकारस्यातिसूक्ष्मता प्रतीयते। अत्र= अस्मिन्नायके। अनुरज्यतीव = अनुरागं बध्नातीव। इति सम्भावयामीति शेषः। महानुभावे=महामहिमशालिनि। एतेनेदृशस्यातिथेरतिदौर्लभ्यं सूच्यते। प्रतिपत्तिमूढा = कर्त्तव्यज्ञानशून्या। यथाऽनुरूपम्=यथायोग्यम् (यथोचितं)। अहमेवेति। आवयोः सख्यत्वान्मत्कृतं त्वत्कृतमेवेति रीत्या तवाकौशलमपनीयत इति व्यङ्ग्योक्तिः। आसनपरिग्रहेण=आसनस्य उपवेशनार्थं मद्दत्तास्तरणस्य परिग्रहेण स्वीकारेणेत्यर्थः।

(ख) एवं नायिका-नायकोभयमनोऽनुकूलं चेटीवचो निशम्य विदूषकस्तत्प्रशंसति-भो वयस्येति। आवयोर्विश्रमस्याऽपेक्षितत्वाद्वाग्विन्यासस्याऽप्येतस्यास्तदनुकूलत्वाद्युक्तमेव शोभनत्वं तदुक्तेरिति भावः।

नायिका—( चेटीमुद्दिश्य ) ( क ) अइ परिहाससीले ! मा एव्वं करेहि। कदाबि कोवि ताबसो पेक्खे, तदो मं अविणीदेत्ति संभावइस्सदि।

( ततः प्रविशति तापसः। )

तापसः—आज्ञापितोऽस्मि कुलपतिना कौशिकेन, यथा—"वत्स शाण्डिल्य ! पितुराज्ञया युवराजो मित्रावसुर्भविष्यद्विद्याधरचक्रवर्त्तिनं कुमारजीमूतवाहनम् इहैव मलयपर्वते कापि वर्त्तमानं भगिन्या मलयवत्या वरहेतोर्द्रष्टुमद्य गतः। तच्च प्रतीक्षमाणाया मलयवत्याः कदाचित् मध्यन्दिनसवनवेलावधिरतिक्रामेत्, तदेनामाहूयागच्छ" इति। तत् तपोवनगौरीगृहमेव गच्छामि। ( परिक्रम्य भूमिं निरूप्य सविस्मयम् ) अये ! कस्य पुनरियं पांशुले भूप्रदेशे प्रकाशचक्रचिन्हा पदपङ्क्तिः ? ( अग्रतो जीमूतवाहनं निर्दिश्य ) नूनमस्यैवेयं महापुरुषस्य।

---

(क) अयि परिहासशीले ! मैवं कुरु। कदापि कोऽपि तापसः प्रेक्षेत, ततो मामविनीतेति सम्भावयिष्यति।

---

(क) चेटीवचोऽभ्युपेत्य ताभ्यामासने परिगृहीते लज्जमाना नायिका ताम्प्रत्याह—अयि परिहासशीले ! मदन्तिके पुरुषद्वयोपवेशनात्मकस्ते व्यापारो लोकाचारच्छद्मना परिहास एव परिणमति तत्स्वभावत्वात्परिहासशीला त्वमसीति भावः। मैवम्। मा शब्दो निषेधार्थकः। एवम् = मदन्तिके पुरुषद्वयोपवेशनमित्यर्थः। प्रेक्षेत = पुरुषसन्निधिवर्त्तिनीं मामिति शेषः। अविनीता = दुश्चरित्रा। एतेन चेटीम्प्रति नायिकासमुचितवाग्विन्यासेन ताम्प्रति नायकस्वरूपप्रशंसनोत्तरं स्वानुकूलवरान्वेषणयोग्यतामभिधातुं विप्रलम्भशृङ्गारमुत्पादयितुं च कस्यचित्तापसविशेषस्य प्रवेशः सूच्यते।

एवं नायिकावाग्विन्याससूचितप्रवेशस्तापसस्ताम्प्रति गुरुनियोगं निवेदयति—आज्ञापितोऽस्मीत्यादिना। कुलपतिना = अन्नदानपूर्वकदशसहस्रमुनिपाठकेन। उक्तं च कुलपतिलक्षणम्—

मुनीनां दशसाहस्रं योऽन्नपानादिपोषणात्।
अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः॥

इति। कौशिकेन = विश्वामित्रेण। ( कुशिकस्यापत्यं पुमानिति विग्रहेऽपत्यार्थकोऽण् प्रत्ययः ) युवराजः = कुमारः। ( युवराजस्तु कुमारो भर्तृदारक इत्यमरः )। भविष्यद्विद्याधरचक्रवर्त्तिनम्। प्रागेव लक्षणैरस्य भावि चक्रवर्त्तित्वं सुनिश्चितमित्यर्थः। एतेन मलयवतीपाणिग्रहणयोग्यताऽस्य सूच्यते। कुमारम्।

तथाहि,—

उष्णीषः स्फुट एष मूर्द्धनि बिभात्यूर्णेयमन्तर्भ्रुवो-
श्चक्षुस्तामरसानुकारि हरिणा वक्षःस्थल स्पर्द्धते ।
चक्राङ्कञ्च यथा पदद्वयमिदं मन्ये तथा कोऽप्ययं
नो विद्याधरचक्रवर्त्तिपदवीमप्राप्य विश्राम्यति ॥१८॥

अथवा कृतं सन्देहेन । व्यक्तमेतेनैव जीमूतवाहनेन भवितव्यम् । ( मलयवतीं निरूप्य ) अये ! इयमपि राजपुत्री । (उभौ विलोक्य) चिरात् खलु युक्तकारी विधिः स्यात्, यदि युगलमेतदन्योन्यानुरूपं घटयेत् । ( उपसृत्य नायकं निर्दिश्य ) स्वस्ति भवते ।

नायकः—भगवन् ! ( उत्थाय ) जीमूतवाहनोऽभिवादयते ।

---

एतेन समुचितवयस्कत्वमभिव्यज्यते । जीमूतवाहनम् । एतेन नाम्नः प्रसिद्धि-रुच्यते । इहैव मलयपर्वत इत्युक्त्या वरान्वेषणप्रयाससौलभ्यं द्योत्यते । तम् = मित्रा-वसुम् । मध्यन्दिनसवनवेलाऽवधिः = मध्यन्दिने मध्यान्हे यत् सवनं स्नानं तस्य वेलावधिः समयनियम इत्यर्थः । अतिक्रामेत् = व्यतीयात् । पांशुले=धूलिमये । ( पांशवोऽस्मिन् सन्तीति विग्रहे पांशुशब्दाल्लच् प्रत्ययः ) । पांशुशब्दस्य धूलि-वाचकत्वे कोशप्रमाणं यथा–(रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयोरज इति अ०) । प्रकाशं व्यक्तं चक्रचिन्हं चक्रवर्त्तिलक्षणं यस्यां सा प्रकाशचक्रचिन्हा = व्यक्तचक्रवर्त्ति-लक्षणेत्यर्थः । पदपंक्तिः = पादन्यासवीथी । महापुरुषस्य = महामहिमशालिनः ।

महापुरुषत्वं वर्णयितुमुपक्रमते—उष्णीष इति । मूर्धनि शिरसि एष दृश्यमान इत्यर्थः । स्फुटोऽतीवविशद उष्णीषो नृपतिमुकुटविशेषो विभाति शोभते । भ्रुवोः अन्तर्मध्यभागे इयं ( दृश्यमाना ) ऊर्णा महापुरुषचिन्हविशेषो भ्रूमध्यवर्ती रोमावर्त इत्यर्थः (ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोरित्यमरः) विभाति । चक्षुर्नेत्रद्वयम् तामरसं कमलमनुकर्तुं शीलमस्येति तथोक्तं कमलतुल्यमित्यर्थः ( पंकेरुहं तामरसं सारसं सरसीरुहमित्यमरः ) । इदं पदद्वयं चरणद्वयं यथा यादृशं चक्राङ्कं चक्रचिन्हितं ( भवेत् ) तथा तादृशं मन्ये तर्कयामि । अयम् अनतिक्रान्तलोचनपथः ( पुरुषः ) इत्यर्थः । विद्याधरचक्रवर्त्तिपदवीं विद्याधराणां चक्रवर्ती राजा स एव पदवी उपाधिस्तां विद्याधरसार्वभौमत्वमित्यर्थः । अप्राप्य न विश्राम्यति न तिष्ठतीत्यर्थः । अमुनाऽवश्यमेव चक्रवर्तिना भविष्यत इति भावः । अत्रोत्प्रेक्षा-स्वभावोक्तिश्चेत्यलङ्कारद्वयम् । शार्दूलविक्रीडितं वृत्तम् ॥१८॥

युक्तकारी=योग्यसंघटयितेत्यर्थः । युगलम् = उभयम् । अन्योन्यानुरूपम्= मिथः सदृशम् । घटयेत्=सङ्गमयेत् ।

तापसः—अलमलमभ्युत्थानेन । ननु "सर्वस्याभ्यागतो गुरुः" इति भवानेवास्माकं पूज्यः । तद् यथासुखं स्थीयताम् ।

नायिका—(क) अज्ज ! पणमामि ।

तापसः—(नायिकां निर्दिश्य) वत्से ! अनुरूपभर्तृगामिनी भूयाः । राजपुत्रि ! त्वामाह कुलपतिः कौशिकः, यथा,—"अतिक्रामति मध्यन्दिनसवनवेला, तत् त्वरितमागम्यताम्" इति ।

मलयवती—(ख) जं गुरु आणवेदि । (आत्मगतम्) एक्कतो गुरुवअणं अण्णतो दइअदंसणसुहं त्ति गमणागमणाधिरूढं अज्ज वि मं दोलअदि हिअअं ।

(उत्थाय निश्वस्य सलज्जं सानुरागञ्च नायकं पश्यन्ती तापससहिता निष्क्रान्ता नायिका-चेटी च ।)

नायकः—(सोत्कण्ठं निश्वस्य नायिकां पश्यन्)

अनया जघनाभोगभरमन्थरयातया ।
अन्यतोऽपि व्रजन्त्या मे हृदये निहितं पदम् ॥१९॥

---

(क) आर्य्य ! प्रणमामि ।

(ख) यत् गुरुराज्ञापयति । एकतो गुरुवचनम्, अन्यतो दयितदर्शनसुखमिति गमनाऽगमनाधिरूढमद्यापि दोलायति मां हृदयम् ।

---

अभ्युत्थानेन = आगतस्प्रत्युत्थायाऽभ्यर्थनादिकरणेनेत्यर्थः । अस्माकं पूज्यः= अस्माभिः पूज्य इत्यर्थः। यथासुखम् = सुखमनतिक्रम्येत्यर्थः । क्रियाविशेषणमिदम्। स्थीयताम् भवतेति शेषः ।

अनुरूपभर्तृगामिनी=योग्यपतिमिलिता । ( अनुरूपं योग्यं भर्त्तारं स्वामिन गच्छति तच्छीलेति विग्रहे णिनिः ) ।

(ख) एकतो गुरुवचनमिति । एकत एकं (सार्वविभक्तिकस्यापि तसिलो विधीयमानत्वादिह प्रथमान्तात्तसिल् ) गुरोः कौशिकस्य वचनं त्वरितमागम्यतामित्यादेशरूपं सर्वथाऽनुल्लङ्घनीयमित्यर्थः । अन्यतोऽन्यच्च द्वीतीयमित्यर्थः दयितदर्शनसुखं पतिविलोकनानन्दलाभः, इति कार्यद्वयमस्ति अतो गुरुनियोगपालनाय गमनं, दयितदर्शनसुखायाऽगमनं ( स्थितिः ) इत्युभयमप्यपेक्षितम् । तदारूढं गमनोत्सुकमगमनोत्सुकं चेत्यर्थः । हृदयं ( कर्तृ ) मां दोलयति पीडयतीत्यर्थः ।

गुरुजनानुरोधाद्विवशं गच्छन्त्या नायिकाया वियोगमसहमानो नायकः सनिश्श्वासमाह—अनयेति । जघनस्य कटिपश्चाद्भागस्य आभोगो विस्तारता तस्य

विदूषकः—(क) भो ! दिट्ठं तुए पेक्खिदव्वं; ता दाणिं मज्झण्ण-सूरकिरणसंतावदिउणिदो विअ मे उदरग्गी धमधमाअदि, ता एहि णिक्क-मह्म । जेण बह्मणो अदिही भविअ मुणिजणसआसादो लद्धेहिं कंदमूल-फलेहिं पि दाव पाणधारणं करेमि ।

नायकः—( ऊर्ध्वमवलोक्य ) अये ! मध्यमध्यास्ते नभस्तलस्य भगवान् सहस्रदीधितिः । तथाहि—

तापात् तत्क्षणघृष्टचन्दनरसौ पाण्डू कपोलौ वहन्
संसक्तैर्निजकर्णतालपवनैः संवीज्यमाननः ।

---

(क) भो ! दृष्टं त्वया प्रेक्षितव्यम् । तदिदानीं मध्याह्नसूर्यकिरणसन्तापद्विगुणित इव मे उदराग्निर्धमधमायते । तदेहि निष्क्रामावः । येन ब्राह्मणोऽतिथिर्भूत्वा मुनिजनसकाशात् लब्धैः कन्दमूलफलैरपि तावत् प्राणधारणं करोमि ।

---

भरेण भारेण मन्थरं मन्दं यातं गमनं यस्याः सा तथोक्ता तया, अन्यतोऽन्यत्र व्रजन्त्या गच्छन्त्या अपि अनया नायिकयेति शेषः । मे मम हृदये पदं स्थानं ( चरणं वा ) निहितं स्थापितम् । जघनपरिणाहवशादतीवमन्दगामिनीमेनां पश्यतो मे हृदयं तदायत्तमिति भावः । अत्र छेकानुप्रासोऽलङ्कारः । पदं चरणमित्यर्थे हृदये तत्स्थापनस्याऽसम्भवाज्जायमानविरोधस्य पदं स्थानमित्यर्थेन परिहाराद्विरोधाभासोऽपीत्यलङ्कारद्वयस्य संसृष्टिः । अनुष्टुप् वृत्तम् ॥१९॥

(क) मलयवतीदर्शनादवाप्तसन्तोषाऽतिशयं नायकं विलोकमानो विदूषकस्त-द्दर्शनमुत्कृष्टतया वर्णयन् समयान्तरं सूचयति—भो दृष्टं त्वया प्रेक्षितव्यमिति । प्रेक्षितव्यम्=प्रेक्षितुं योग्यं दर्शनीयमित्यर्थः । मध्यान्हे दिनस्य मध्यभागे सूर्यस्य किरणैः सन्तापादत्यौष्ण्यात् द्विगुणितो वर्द्धित इव । कन्दमूलफलैः = मुनिजनाशन-योग्यैर्वस्तुभिरित्यर्थः । एतेन मिष्टान्नाद्युत्तमभोज्यपदार्थालाभात्खेदातिशयो व्यज्यते । प्राणधारणमित्युक्त्या प्राणधारणमेव फलं नतु तृप्तिरिति सूच्यते ।

रसान्तरं प्रविष्टो नायको नर्मसचिववचो निशम्य मध्यान्हं वर्णयितुमुपक्रमते—अये इति । इदं कोमलालापे सम्बोधनम् । अनेन चेतसो विषयान्तरासक्ततया न मया प्राक् समयान्तरापातो निरूपित इति सूच्यते । भगवान्=षड्विधैश्वर्यवान् सहस्रदीधितिः=सहस्रं दशशतं दीधितयः किरणा यस्य सः=दशशतकिरणधारणशील इत्यर्थः । नभस्तलस्य = आकाशप्रदेशस्य मध्यं = मध्यभागम् अध्यास्ते = अधि-तिष्ठतीत्यर्थः । ( अधिशीङ्स्थासां कर्मेति सूत्रेण मध्य इत्याधारस्य कर्मत्वम् ) ।

अथ मध्यान्हकालं वर्णयति—तापादिति । एष पुरोदृश्यमान इत्यर्थः ।

सम्प्रत्येष विशेषसिक्तहृदयो हस्तोज्झितैः शीकरै
र्ग्लायच्छल्लकदुःसहामिव दशां धत्ते गजानां पतिः ॥२०॥

(निष्क्रान्ताः सर्वे।)

इति प्रथमोऽङ्कः।

---

गजानां पतिर्गजराजः तापात् प्रचण्डमार्तण्डकिरण-सन्तापात् (सम्पातात्)—(हेतोः) घृष्टो मर्दितश्चन्दनस्य श्रीखण्डस्य रसो निर्य्यासो याभ्यां तादृशौ, अत एव पाण्डू शुभ्रौ कपोलौ गण्डप्रदेशौ वहन् धारयन्। संसक्तैरविच्छिन्नैः निजौ कर्णावेव तालौ तालव्यजने तत्कृतैः पवनैर्वायुभिः (करणैः) संवीज्यमानं संसेव्यमानम् आननं मुखं येन यस्य वा स तथोक्तः हस्तेन शुण्डारूपेणेत्यर्थः। उज्झितैर्विक्षिप्तैः शीकरैर्जलकणैः (करणैः)—(शीकरोऽम्बुकणाः स्मृता इत्यमरः)। विशेषेण विशेषं वा सिक्तं हृदयं येन तथाभूतः सन् सम्प्रति इदानीं मध्यान्हकाल इत्यर्थः। ग्लायतां ग्लानिं प्राप्नुवतां शल्लकानां करिभक्ष्यतदाख्यद्रुमविशेषाणां दुःसहाम् अतिक्लिष्टां दशामवस्थां धत्ते गृह्णाति। यथा गजभक्षणेन शल्लकवृक्षाणां क्लेशबाहुल्यमुत्पद्यते तथा ग्रीष्मोत्तापेन गजानामपीति भावः। नायिकावियुक्तनायकपक्षेऽपि सकलविशेषणयोजनात् "विरहिणोऽपि कामसन्तापादीदृशीमेव दशां धारयन्ती"त्येवं रूपोऽर्थान्तरश्च स्फुरतीत्यवसेयम्। तुर्यपादगतोपमासूचकेवशब्दमहिम्ना शल्लकदशा इव गजपतिदशेत्युपमोपमेयभाववर्णनात्पूर्णोपमाऽलङ्कारः। स च निदाघे वन्यगजानामीदृशी स्वाभाविकी दशा भवत्येवेति स्वभाववर्णनादुत्पत्तिमता स्वभावोक्त्यलङ्कारेण संसृष्टः। शार्दूलविक्रीडितं वृत्तम्॥ २०॥

इति प्रथमोऽङ्कः। इति शब्दस्याऽत्र समाप्तिसूचकत्वात् अङ्कशब्दस्य च परिच्छेदार्थकत्वात् प्रथमः परिच्छेदः समाप्त इत्यर्थः। अङ्कलक्षणं साहित्यदर्पणोक्तं प्रागुक्तमेव नाट्यशास्त्रोक्तमङ्कलक्षणमिहोच्यते यथा—

अङ्क इति रूढिशब्दो भावैश्च रसैश्च चिन्हयत्यर्थान्।
नानाविधानयुक्तान् यस्मात्तस्माद्भवेदङ्कः॥
यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः।
किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदाव गन्तव्यः॥
एकदिवसप्रवृत्तं कार्यं त्वङ्केऽथ बीजमधिकृत्य।
रङ्गं तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्क्रान्तिः॥

इति नागानन्दव्याख्यायां पीयूषवर्षिण्यां प्रथमोऽङ्कः।

---

# अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति चेटी )

चेटी—(क) आणत्तह्मि भट्टिदारिआए मलअवदीए, जहा—"हञ्जे ! मणोहरिए ! अज्ज चिराअदि मे भाअरो अज्जो मित्तावसू । ता गदुअ जाणेहि किं आअदो ण वेत्ति" । ( परिक्रामति । नेपथ्याभिमुखं दृष्ट्वा ) का उण एसा तुरिदतुरिदं इदो ज्जेव्व आअच्छदि ? (निरूप्य) कहं चदुरिआ !

( ततः प्रविशति द्वितीया चेटी )

---

(क) आज्ञप्ताऽस्मि भर्तृदारिकया मलयवत्या, यथा—"हञ्जे मनोहरिके ! अद्य चिरयति मे भ्राता आर्यो मित्रावसुः । तद्गत्वा जानीहि किमागतो न वा" इति । का पुनरेषा त्वरितत्वरितमित एवागच्छति । कथं चतुरिका ।

---

अथ विप्रलम्भ-सम्भोगाभ्यां श्रृङ्गाररसो हि द्विविधः, विप्रलम्भश्रृङ्गारः सम्भोगश्रृङ्गारश्च । तत्राद्योऽपि अयोग-विप्रयोगाभ्यां द्वैविध्यं भजते । अयोगविप्रलम्भश्रृङ्गारो—विप्रयोगविप्रलम्भश्रृङ्गारश्च । एवञ्चात्र द्वितीयेऽङ्के नायिका—नायकयोरन्योन्यमयोगादयोगविप्रलम्भश्रृङ्गाररस एव वर्णनीयत्वेन व्यवस्थापितस्तथा च मदनसन्तापसंतप्तचेतसो नायिकाया दुःखोपशमनार्थमपेक्षितं शैत्योपचारादि-मित्रावसुप्रयत्नादि—चन्दनलताभवननिर्माणादि रूपं सूचनीयमर्थम् अङ्कसन्धौ विनियुक्तेन नीचपात्रोभयकृतेन ( अभिनीतेन ) प्रवेशकनाम्नाऽर्थोपक्षेपकेण चेटी कथयति—आज्ञप्तास्मीति । उक्तञ्चाऽऽवश्यकत्वं प्रवेशकस्य नाट्यशास्त्रे यथा—

बह्वाश्रयमप्यर्थं प्रवेशकैः संक्षिपेत्प्रबन्धेषु ।
अङ्केषु संप्रयुक्तो जनयति खेदं प्रयोगस्य ॥
सदृशाभ्यां प्रयोज्यः स्यादङ्कसन्धौ प्रवेशकः ।

इति । (क) आज्ञां प्रापिताऽस्मीत्यर्थः । आज्ञालाभादात्मनः कृतार्थतामुद्बोधयति । भर्तृदारिकया = राजकन्यया (राजा भट्टारको देवस्तत्सुता भर्तृदारिकेत्यमरः) । भर्तृदारिकेत्युक्त्या तत्राऽऽदरातिशयः प्रतीयते । मलयवतीत्युक्त्या तत्र वात्सल्याऽऽधिक्यं द्योत्यते । चिरयति = विलम्बं करोतीत्यर्थः । नैतादृशोऽस्य विलम्बः कदापि पूर्वं दृष्ट इति भावः । वरान्वेषणार्थमस्य गमनमिति तदन्तराशयः । ( चिरं करोतीत्यर्थे—चिरशब्दात्—'तत्करोति तदाचष्टे' इति णिच् ) । आर्येत्युक्त्या

प्रथमा—(उपसृत्य) (क) हला चदुरिए ! किं णिमित्त उण मं परिहरिअ एव्वं तुरिदाए गच्छीअदि !

द्वितीया—(ख) हला मणोहरिए ! आणत्ह्मि भट्टिदारिआए मलअवदीए—"हञ्जे चदुरिए ! कुसुमावचअपरिस्समणीसहं मे सरीरं । सरदादवजणिदो विअ मे संदावो अधिअदरं बाधेदि । ता गच्छ तुमं, बालकदलीपत्तपरिक्खित्ते चंदणलदाघरए चन्दमणिसिलाअलं सज्जी-करेहि" त्ति । अणुचिट्ठिदं अ मए जधा आणत्तं । जाव गदुअ भट्टिदारि-आए णिवेदेमि !

---

(क) हला चतुरिके ! किं निमित्तं पुनर्मां परिहृत्यैवं त्वरितया गम्यते ।

(ख) हला मनोहरिके ! आज्ञप्ताऽस्मि भर्तृदारिकया मलयवत्या—"हञ्जे चतुरिके ! कुसुमावचयपरिश्रमनिःसहं मे शरीरम् । शरदातपजनित इव मे सन्तापोऽधिकतरं बाधते । तद् गच्छ त्वं बालकदलीपत्रपरिक्षिप्ते चन्दनलतागृहे चन्द्रमणिशिलातलं सज्जीकुरु" इति । अनुष्ठितञ्च मया यथाऽऽज्ञप्तम् । यावद् गत्वा भर्तृदारिकायै निवेदयामि ।

---

स्वाऽपेक्षया तस्य ज्येष्ठत्वं प्रतिपाद्यते । पात्रान्तरप्रवेशकामनयैव तथा वाग्वैदग्ध्येन चेटीकर्तृकं सूचनीयार्थाऽभिधानमित्यवधेयम् ।

(क) त्वरितया = त्वरामापन्नयेत्यर्थः । त्वयेति शेषः । ( त्वरा सञ्जाताऽस्या इति विग्रहे तारकादित्वादितच् ) ।

(ख) पूर्वचेटीकृतजिज्ञासामाकर्ण्य तदुत्तरवचोव्याजेन सूचनीयमर्थमुद्बोधयितुमपरा चेटी प्रक्रमते—हला मनोहरिके ! इत्यादिना । कुसुमाऽवचयपरिश्रमनिस्सहं कुसुमानां पुष्पाणाम् अवचयो देवीसमाराधनाथ राशीकरणं तत्र यः परिश्रमः प्रयासस्तेन निस्सहं पीडितमित्यर्थः । शरदातपजनितः = शरदस्तन्नाम्न ऋतोः ( सम्बन्धी ) य आतपो रौद्रस्तेन जनित उत्पादित इव सन्तापो दुःखं मे मम शरीरम् अधिकतरं विशेषतया बाधते आकुलयति । तूष्णीमासितुमप्यसमर्थां मां करोतीत्यर्थः । एतेन शरदातपस्याऽतितैक्ष्ण्यात् तत्सादृश्येन सन्तापस्याऽपि तैक्ष्ण्यातिशयः प्रकाश्यते । तद् गच्छ, सन्तापोपशमनाय शैत्योपचारस्यापेक्षितत्वादिति भावः । बालकदलीपत्रपरिक्षिप्ते=बालानि नूतनानि ( मसृणकोमलानि सरसानीति यावत् ) यानि कदलीपत्राणि तैः परिक्षिप्ते आस्तृते । एतेन शैत्य-प्रकर्षोऽभिव्यज्यते । चन्दनलतागृहे, एतेन लतागृहस्याऽसूर्य्यंपश्यान्तरत्वं बोध्यते । चन्द्रमणिशिलातलं = चन्द्रकान्तशिलाप्रदेशम् । एतेन शैत्यातिशयात्तस्य सन्ता-

प्रथमा—(क) जइ एव्वं, ता लहुं गदुअ णिवेदेहि, जेण से तहिं गदाए उवसमदि संदावो।

द्वितीया—(विहस्यात्मगतम्) (ख) ण ईरिसो से संदावो जो एव्वं उवसमिस्सदि। अण्णञ्च विचित्तरमणीअं चंदणलदाघरअं पेक्खन्तीए अधिअदरो संदावो हुविस्सदि त्ति तक्केमि। (प्रकाशम्) ता गच्छ तुमं। अहम्पि "सज्जीकिदं मणिसिलाअलं" त्ति गदुअ भट्टिदारिआए णिवेदेमि।

(इति निष्क्रान्ते)

(प्रवेशकः)

---

(क) यद्येवं, तल्लघु गत्वा निवेदय, येनास्यास्तत्र गताया उपशाम्यति सन्तापः।

(ख) नेदृशोऽस्याः सन्तापो य एवमुपशमिष्यति। अन्यच्च विचित्ररमणीयं चन्दनलतागृहं प्रेक्षमाणाया अधिकतरः सन्तापो भविष्यतीति तर्कयामि। तद्गच्छ त्वम्। अहमपि "सज्जीकृतं मणिशिलातलम्" इति गत्वा भर्तृदारिकायै निवेदयामि।

---

पशमनयोग्यता द्योत्यते। सज्जी कुरु = शुष्कपर्णाद्यपनयनद्वाराऽतिनिर्मलं विधेहीत्यर्थः।

(क) द्वितीयोक्तवृत्ताऽभिप्रायमनधिगच्छन्ती प्रथमा पुनस्तास्प्रत्याह—यद्येवमिति। यदि एवं कामसन्तापस्याऽऽधिक्य इत्यर्थः। तद् तदा लघु द्रुतं (लघु-क्षिप्रमरं द्रुतमित्यमरः) निवेदय = विज्ञापय। उपशाम्यति सन्तापः = तस्याः सन्तापोपशमनमेवाऽस्माकमीप्सिततममित्यर्थः।

(ख) प्रथमाया वचनमधिक्षिपन्ती द्वितीया हासपूर्वं स्वगतमाह—नेदृशोऽस्या इत्यादितर्कयामीत्यन्तम्। ईदृशः = स्मररोगहेतुकोऽप्यन्यहेतुकत्वेन प्रसिद्ध इत्यर्थः। एवं = चन्दनलतागृहप्रवेशादिनेत्यर्थः। अन्यच्च = अपितु। विविक्तरमणीयम् = लतागृहे विविक्तत्वम् (एकान्तता) रमणीयत्वं (मनोज्ञता) च सन्तापवर्द्धकमेवेति तर्कयामि। स्मरसन्तापस्य स्वभावदर्शनात् तथा कल्पयामीत्यर्थः। गच्छ त्वम् स्वकार्यसाधनायेति शेषः। अहमपि भर्तृदारिकायै निवेदयामि अनुष्ठितं कार्यमिति शेषः।

इति निष्क्रान्ते। इत्थं सूचनीयमर्थं सूचयित्वा चेटीद्वयस्य निष्क्रान्तिः रङ्गस्थानादिति शेषः।

प्रवेशकः। मिथोऽनुरक्तयोर्नायिका-नायकयोः प्रेक्षणरूप-संयोगरूपाणां वृत्तवर्त्तिष्यमाणकथांशानामनुदात्तस्वरेण नीचपात्र-चेटीद्वयकर्तृकसूचनाद्विष्कम्भकलक्षणवत्तया प्रवेशकाख्यमत्र नाटकाङ्गमित्यवधेयम्। उक्तञ्च दर्पणकृता लक्षणं यथा—

प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥

इति।

( ततः प्रविशति सोत्कण्ठा मलयवती चेटी च )

मलयवती—( निश्वस्यात्मगतम् ) ( क ) हिअअ ! तधा णाम तस्सिं

(क) हृदय ! तथा नाम तस्मिन् जने यत् लज्जया मन्थरं मुखं कृत्वेदानीं

प्रागुक्तलक्षणलक्षितेन प्रवेशकनामनाटकाङ्गेन सूचितं नायिकाऽयोगविप्रलम्भश्टङ्गारमभिधातुमुपक्रमते—ततः प्रविशतीत्यादिना । ततस्तदनन्तरं चेटीद्वयस्य निष्क्रमणानन्तरमित्यर्थः । सोत्कण्ठा—उत्कण्ठा नाम ईप्सितवस्त्वलाभान्मनोऽस्थैर्य्यादिसाधको गात्रशोषणादिसम्पादकश्च दशाविशेषस्तेन सहितेत्यर्थः । उक्तश्चोत्कण्ठालक्षणं यथा—

रागे त्वलब्धविषये वेदना महती तु या ।
संशोषिणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः ॥

इति ।

परस्परानुरागिणोर्द्वयोः सङ्गमात्प्राग्वर्त्तिदशाविशेषस्यैव पूर्वरागत्वेनाऽभिधानात् सम्प्रत्ययोगविप्रलम्भश्टङ्गारस्याद्यभेदः पूर्वराग एव द्वयोर्विराजतितराम् । पूर्वरागलक्षणं यथा—

श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥

इति ।

तत्र पुरुषरागस्यादावुत्पन्नत्वेन प्राग्वर्णनीयत्वेऽपि स्त्रीरागस्यैव प्राग्वर्णनमपेक्षितम् पुरुषरागवर्णनाऽपेक्षया स्त्रीरागवर्णनस्यैवाऽधिकरमणीयताऽऽधायकत्वात् । तदुक्तं दर्पणे—

आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदङ्गितैः ।

इति । अत्र हि दश दशा भवन्ति । तथाहि—

अभिलाषस्ततश्चिन्ता स्मृतिश्च गुणकीर्तनम् ।
उद्वेगः संप्रलापश्चोन्मादः ससम ईरितः ।
ततो व्याधिश्च जडता मृतिरेता दश दश ॥

अपि च—

चक्षूरागस्तदनुमनसः सङ्गतिर्भावना च
व्यावृत्तिः स्यात्तदनु विषयग्रामतश्चेतसोऽपि ।
निद्राच्छेदस्तदनु तनुता निस्त्रपत्वं च पश्चात्
क्षैप्यं मूर्च्छा तदनुमरणं स्युर्दशास्तु क्रमेण ॥

(क) अतो मलयवत्यास्तत्सख्याश्च वचनोपवचनव्याजेन स्त्रीपूर्वरागमेवादौ वर्णयति—हृदय ! तथा नामेत्यादिना । हृदयेति सम्बोधनोक्त्या जननादारभ्य सर्वदा

जणे जं लज्जाए मंथरं मुहं कदुअ दाणिं तहिं अत्तणा गदंसि त्ति अहो ! दे अत्तंभरित्तणं ( प्रकाशम् ) । हञ्जे चदुरिए ! आदेसेहि मे भअवदोए आअदणं ।

चेटी—( आत्मगतम् ) ( क ) चंदणलदाघरं पत्थिदा भणादि भअवदीए आअदणं । ( प्रकाशम् ) चंदणलदाघरअं भट्टिदारिआ पत्थिदा ।

नायिका—( सलज्जम् ) ( ख ) हञ्जे ! सुठ्ठु सुमराविदं । ता एहि तहिं ज्जेव्व गच्छह्म ।

---

तत्रात्मना गतमसीत्यहो ते आत्मम्भरित्वम् । हञ्जे चतुरिके ! आदिश मे भगवत्या आयतनम् ।

(क) लतागृहं प्रस्थिता भणति भगवत्या आयतनम् । चन्दनलतागृहं भर्तृदारिका प्रस्थिता ।

(ख) हञ्जे ! सुष्ठु स्मारितम् । तदेहि तत्रैव गच्छावः ।

---

मयाऽनुसृतस्य कदापि नो वियुक्तस्य ते मयीदृशी शठता नौचित्यमवलम्बत इति तम्प्रति साऽधिक्षेपोक्तिर्द्योत्यते । तथा तेन प्रकारेण, नामेति निन्दायाम् । गतमसीति यत् निन्दनीयं तदित्यर्थः । तस्मिन् जने महामहिमशालिनि जीमूतवाहने नायके तत्सन्निधावित्यर्थः । लज्जया मन्थरं जडं वाग्रहितमित्यर्थः । इदानीं तत्र तस्मिन् जने आत्मना स्वयमेव गतम् सम्मिलितम् असि इति यत् अहो आश्चर्यम् ते आत्मम्भरित्वं स्वार्थपरत्वम् ( आत्मानं बिभर्तीत्यात्मम्भरिस्तस्य भावस्तत्त्वम् )। त्वया तस्य जनस्य समीपे पूर्वमाभाषणमपि लज्जया न कृतम् इदानीं तु ताम्परिहृत्य तदायत्तमेव जातमित्यर्थः । प्रायः स्वार्थिनामीदृश्येव व्यवस्थेति भावः । एतावदात्मगतमुक्तिः । आदिश मे भगवत्या आयतनम् इति उक्तविधया रत्यर्णवे मज्जनोन्मज्जनमनुभवन्त्या संकल्प–चिन्तोन्माद–प्रलाप–जड़ता–पुलकोद्गमादिभिश्चेतसो व्याप्ततया प्रलापेन विस्मृतप्रस्तुतगमनाया नायकाऽऽद्यदर्शनप्रदेशमनुस्मरन्त्याश्चेतोऽनुकूला चेटीम्प्रतिप्रकाशमुक्तिः ।

(क) इत्थं तद्वचो निशम्य तदीयभ्रान्तिमविज्ञायैव चतुरिका ताम्प्रत्याह—चन्दनलतागृहं भर्तृदारिका प्रस्थितेति । प्रस्थिता = प्रस्थातुमुद्यतेत्यर्थः । तापोपशमनहेतुकं चन्दनलतागृहे शिलातलं सज्जीकृत्य समागतया मया सह तत्र गन्तुमुद्यता किमिति भगवत्यायतनं ब्रतेऽपितु चन्दनलतागृहमादेशयेत्येव वक्तव्यमित्यर्थः ।

(ख) चेटीवचनश्रवणलब्धस्मरणा नायिका तां प्रसंशति—सुष्ठु स्मारितमिति।

चेटी—( क ) एदु एदु भट्टिदारिआ। ( अग्रतो गच्छति )।

( नायिकाऽग्रतो गच्छति )।

१२ चेटी—( पृष्ठतो दृष्ट्वा सोद्वेगमात्मगतम् )। ( ख ) अहो ! से सूण-हिअअत्तणं ! कहं तं ज्जेव्व देवीभवणं पत्थिदा। ( प्रकाशम्। ) भट्टि-दारिए ! णं इदो चंदणलदाघरअं ता इदो इदो एहि।

नायिका—( सविलक्षस्मितं तथा करोति )।

चेटी—( ग ) इदं चंदणलदाघरअं। ता पविसिअ चंदमणिसिलादले उपविसिअ समस्ससिदु भट्टिदारिआ।

( उभे उपविशतः )।

---

(क) एतु एतु भर्तृदारिका।

(ख) अहो ? अस्याः शून्यहृदयत्वम् ! कथं तदेव देवीभवनं प्रस्थिता। भर्तृदारिके ! नन्वितश्चन्दनलतागृहम्। तदित इत एहि।

(ग) इदं चन्दनलतागृहम्। तत् प्रविश्य चन्द्रमणिशिलातले उपविश्य समाश्वसितु भर्तृदारिका।

---

मया विस्मृतस्य त्वया स्मारितत्वात् साधुता सम्पादितेति भावः। (एतेन मनः-संयोगरूपा द्वितीया दशा सूच्यते)।

(ख) नायिकायाः प्रतिकूलगमनद्वारा काय-मनो-वाक्य-चेष्टासु सम्भ्रममालोक्य विषीदन्ती चेटी मनसि विचारयति—अहो अस्याः शून्यहृदयत्वमिति। विवेक-हीनत्वस्यैव शून्यशब्दार्थत्वादियं सम्प्रति विवेकहीनहृदया जातास्तीत्यर्थः। अविवेकदशायां चेतनस्यापि जड़प्रायत्वाच्छून्येत्युक्तिः। पुनरपि तदीयसम्भ्रम-गोपनेच्छया चेटी तांप्रति प्रकाशं ब्रूते—भर्तृदारिके ! ननु इतश्चन्दनलतागृहम्। इत इत एहीति। नास्ति ते कुतोऽपि हेतोर्मार्गपरिज्ञानमतोऽनेन पथाऽऽ-गच्छेति भावः।

(ग) सविलक्षस्मितमिति। विलक्षो विस्मितो जनस्तस्य स्मितम् ईषद्धास्यं तेन सहितं यथा तथा क्रियाविशेषणमिदम्। विस्मितजन इव किञ्चिद्विहस्ये-त्यर्थः। ( विलक्षो विस्मयान्विते इत्यमरः ) तथा करोति=चेटीप्रदर्शितमार्गमनु-सरतीत्यर्थः। मनोभावाऽप्रकाशाय विस्मितजनस्य स्मितमिव दासीतो निजाशय-गोपनाय मलयवतीस्मितमिति भावः।

नायिका—( निश्श्वस्यात्मगतम् ) ( क ) भअवं कुसुमाउह ! जेण तुमं रूअसोहाए णिज्जिदोसि, तस्स तुए ण किम्पि किदं । मम उण अणवरद्धाए वि अबलेत्ति करिअ पहरंतो ण लज्जेसि । ( आत्मानं निर्वर्ण्य मदनावस्थां नाटयन्ती प्रकाशम् ) । हञ्जे ! कीस उण घणपल्लवणिरुद्ध-सूरकिरणं तं एव्व चंदणलदाघरअं ण मे अज्जवि संदावदुक्खं अवणेदि ।

---

(क) भगवन् ! कुसुमायुध ! येन त्वं रूपशोभया निर्जितोऽसि, तस्य त्वया न किमपि कृतम् । मम पुनरनपराद्धाया अपि अबलेति कृत्वा प्रहरन् न लज्जसे ! हञ्जे ! किं पुनर्घनपल्लवनिरुद्धसूर्य्यकिरणं तदेव चन्दनलतागृहं न मेऽद्यापि सन्ताप-दुःखमपनयति !

---

(क) अथ मनोभवाऽसह्यवेदनामसहमाना विरहाकुलमानसा नायिका साक्षेपगर्भं कामम्प्रत्याह—भगवन् ! कुसुमायुध ! त्वदायत्तं जगत्सर्वमित्यभिप्रेत्य भगवन्निति सम्बोधनं प्रयुक्तम् । कुसुमानि आयुधानि यस्य स तथोक्तस्तत्सम्बुद्धौ । ( कुसुमेषुरनन्यज इत्यमरः ) । सर्वो हि जगति कठोरास्त्रेण शत्रून् जयति भवांस्तु मृदुलतमेन पुष्पास्त्रेणैवेति सर्वातिशायि ते गौरवमिति धिया कुसुमायुधेति सम्बोधनम् । कामस्य पुष्पबाणनामानि यथा—

अरविन्दमशोकञ्च चूतञ्च नवमल्लिका ।
नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः ॥

येन = जीमूतवाहनेन । रूपशोभया = सौन्दर्यभासा ( करणेन ) निर्जितः = पराभूतः । तस्य = जीमूतवाहनस्य । किमपि न कृतम् = किञ्चिदपि नाऽपकृतम् । तस्याऽधिकबलीयस्त्वात् तव चातिदौर्बल्यादिति भावः । एतेन जीमूतवाहनस्याधिकसौन्दर्य्यं बलाधिक्यञ्च स्मराऽपेक्षया सूच्यते । पुनः = किन्तु । अनपराद्धायाः = दोषशून्यायाः अपि मम (उपरीति शेषः) अविद्यमानं बलं यस्याः सा अबला = बलहीना ( स्त्री ) इति कृत्वा = इत्थं मनसि निधाय प्रहरन् बाणान् प्रक्षिपन् न लज्जसे लज्जां न प्राप्नोषि, वीराग्रवर्त्तिनस्ते निरागसि स्त्रीजने बाणव्यापाराद् लज्जया भवितव्यमिति भावः । इत्थमनेकधावागारम्भात्मकाऽनुभावविकासितमनोविकारसन्दोहा विविधोद्दीपनोद्दीपितसन्तापकलापा सती चेटिकाम्प्रति प्रकाशं ब्रूते—हञ्जे ! इति । घनपल्लवनिरुद्धसूर्यकिरणम् = घनानि निबिडानि यानि पल्लवानि तैर्निरुद्धा निवारिताः सूर्यस्य किरणा यस्मिन् तत्तथोक्तम् । किसलयानामाधिक्याद्उपर्युपरिस्थितत्वेन सूर्यसन्तापस्य चन्दनलतागृहे न कदापि संभव इत्यर्थः ।

चेटी—( क ) जाणामि अहं एत्थ संदावस्स कारणं; किं उण असम्भाविणी भट्टिदारिआ ण तं पड़िवज्जिस्सदि त्ति ।

नायिका—( आत्मगतम् ) ( ख ) लक्खिदा विअ अहं एदाए, तहवि पुच्छिस्सं । ( प्रकाशम् ) हञ्जे ! किं तं जं ण पड़िवज्जिअदि । ता कहेहि दाव किं तं कारणं ।

चेटी—( ग ) एसो दे हिअअट्ठिदो वरो ।

नायिका—( सहर्षं सम्भ्रममुत्थाय द्वित्राणि पदानि गत्वा ) ( घ ) कहिं कहिं सो ।

---

( क ) जानाम्यहमत्र सन्तापस्य कारणम्; किं पुनरसम्भाविनी भर्तृदारिका न तत् प्रतिपत्स्यत इति ।

( ख ) लक्षितेवाहमेतया, तथाऽपि पृच्छामि । हञ्जे ! किं तत् यन्न प्रतिपद्यते । तत् कथय तावत् किं तत् कारणम् ? ।

( ग ) एष ते हृदयस्थितो वरः ।

( घ ) कुत्र कुत्र सः ? ।

---

(क) नायिकोक्तवचो निशम्य स्मितेन मुखं विकाशयन्ती चेटी तामाह—जानाम्यहमिति । अत्र = अस्मिन् स्त्रीजने-(इदानीं काले वा) । सन्तापस्य=कामकृतमनोव्यथाया इत्यर्थः, कारणं = हेतुं जीमूतवाहन इति भावः । जानामि = मन्ये । किं पुनः=किन्त्वित्यर्थः । असम्भाविनी = जीमूतवाहनो मे पतिर्भावीत्यसम्भवं मन्यमानेत्यर्थः । तत् = मदीप्सितम् । न प्रतिपत्स्यते = नाङ्गीकरिष्यति ( न ज्ञास्यते )

(ख) चेटीवचनमाकर्ण्य शङ्कितहृदया नायिका मनसि चिन्तयति—लक्षितेवाऽहमिति । अहम् । एतया सख्या लक्षिता इव ज्ञातरहस्यभेदा इव । अस्मीति शेषः । पुनः प्रकाशं ब्रूते—किं तत् यन्न प्रतिपद्यते, त्वया निरूपितं कारणं किमस्ति यन्मया नाऽभ्युपेयत इत्यर्थः ।

(ग) चेटी नायिकावचनमुत्तरयति—एष ते हृदयस्थितो वरः । ते तव हृदयस्थितो मनोवर्त्ती एष वरो वरत्वेनाऽपेक्षितो जीमूतवाहन इत्यर्थः । असन्निहितेऽपि जीमूतवाहनो बुद्धिविषयो भवन् एतच्छब्दप्रतिपाद्यतामाश्रयते । तव सन्तापहेतुरस्तीति भावः ।

(घ) सहर्षं ससम्भ्रमुत्थायेत्यादि । स्वकृतानुयोग ( पृच्छा ) म्प्रति समुचितोत्तरतामापन्नस्य चेटीप्रतिपादितस्यैष ते हृदयस्थितो वर इत्येतद्वाक्यस्य, ते हृदयस्थितो वरः, एष पुरः प्राप्त इत्यर्थं मत्वा हर्ष-भ्रान्तियुक्ता सती द्वित्राणि, द्वे-त्रीणि वा पदानि गत्वा कुत्र कुत्र स इति कृत्वा स्वयमेव रहस्यं प्राऽकाशयदिति भावः ।

चेटी—( उत्थाय सस्मितम् ) ( क ) भट्टिदारिए ! सो को ।

नायिका—( सलज्जमुपविश्याऽधोमुखी तिष्ठति ) ।

चेटी—( ख ) भट्टिदारिए ! एदह्मि वत्तुकामा,—एसो दे हिअअट्ठिदो वरो एव्व देईए दिण्णो सिविणके। पच्छपि क्खणं एव्व पविमुक्ककुसुमबाणो विअ मअरद्धओ भट्टिदारिआए दिट्ठो। सो दे इमस्स संदाबस्स कारणं, जेण एदं सहावसीदलम्पि चंदणलदाघरअं ण दे संदाबदुखं अवणेदि ।

नायिका—( ग ) चदुरिआए लक्खिदम्हि । सच्चं हञ्जे ! चदुरिआ क्खु तुमं । किं दे अवरं पच्छाईअदि, ता कहिस्सं ।

---

( क ) भर्तृदारिके ! स कः ?

( ख ) भर्तृदारिके ! एतदस्मि वक्तुकामा,—एष ते हृदयस्थितो वर एव देव्या दत्तः स्वप्ने । पश्चादपि क्षणमेव प्रविमुक्तकुसुमबाण इव मकरध्वजो भर्तृदारिकया दृष्टः। स तेऽस्य सन्तापस्य कारणं, येनैतत् स्वभावशीतलमपि चन्दनलतागृहं न ते सन्तापदुःखमपनयति ।

( ग ) चतुरिकया लक्षिताऽस्मि । सत्यं हञ्जे ! चतुरिका खलु त्वम् । किं तेऽपरं प्रच्छाद्यते, तत् कथयिष्यामि ।

---

(क) उक्तविधनायिकाव्यापारमावीक्ष्य स्मितमुखी चेटी सुगूढमप्यर्थमनया स्वयं प्रकाशितं दृढीकर्तुमाह—भर्तृदारिके ! स क इति । कस्याऽपि पूर्वमप्रस्तुतत्वात् प्रसिद्धस्यापि प्रकरणसिद्धत्वेनाऽज्ञातत्वात् भवतीप्रयुक्तवाक्यगततच्छब्दवाच्यतां को गृह्णाति तदुच्यतामिति भावः ।

(ख) इत्थं गुप्तभेदेन तदीयचेतसश्चपाऽऽधीनताम्विज्ञाय प्राक् वक्तुमारब्धस्य ( एष ते हृदयस्थितो वरः ) इत्येतद्वाक्यस्याऽशिष्टभागाऽभिधानद्वारा स्वकृतमेव ( स कः ) इति पूर्वपक्षं स्वयमेव चेटी समाधत्ते—भर्तृदारिके । एतदस्मि वक्तुकामेत्यादि । एतत् = वक्ष्यमाणप्रकारम् । (तत्क्षणमेवेत्युक्त्या तस्य भाग्यादुपस्थितत्वं द्योत्यते) । (मकरध्वज इवेत्युत्प्रेक्षया त्वदीप्सिते नास्माकं प्रातिकूल्यमपि त्वानुकूल्यमेवेति व्यज्यते) । प्रविमुक्तकुसुमबाणः = प्रविमुक्ताः प्रक्षिप्ताः कुसुमबाणा येन सः । मकरध्वजः = काम इव । दृष्टः जीमूतवाहन इति शेषः । स्वभावशीतलं = नैसर्गिकशिशिरम् । अपनयति = दूरीकरोति नाशयतीति यावत् ।

चेटी—( क ) भट्टिदारिए ! दाणिं एव्व कहिदं । किं वहुणा पलबिदेण, अलं संभमेण । मा संतप्प । जइ अहं चदुरिआ, तदा सोवि भट्टिदारिअं अवेक्खंतो ण मुहुत्तअं पि अहिरमिस्सदि । ता एदम्पि मए लक्खिदं ।

नायिका—( सास्रम् ) ( ख ) हञ्जे ! कुदो अम्हाणं एत्तिओ भाअधेओ ।

चेटी—( ग ) भट्टिदारिए ! मा एव्वं भण । किं मधुसुअणो विअ वच्छत्थलेण लच्छिं अणुव्वहंतो णिव्वुदो भोदि ।

---

( क ) भर्त्तृदारिके ! इदानीमेव कथितम् । किं बहुना प्रलपितेन, अलं सम्भ्रमेण । मा सन्तप्यस्व । यद्यहं चतुरिका, तदा सोऽपि भर्त्तृदारिकाम् अपेक्षमाणो न मुहूर्त्तमप्यभिरंस्यते । तदेतदपि मया लक्षितम् ।

( ख ) हञ्जे ! कुतोऽस्माकमेतावद्भागधेयम् ? ।

( ग ) भर्त्तृदारिके ! मैवं भण । किं मधुसूदन इव वक्षःस्थलेन लक्ष्मीमनुद्वहन् निर्वृतो भवति ? ।

---

(क) एवं सन्तापकलापवर्द्धकं नायिकाप्रलापमाकर्ण्य प्राक् सूचितमपि नायकानुरागं तदाश्वासनाय पुनश्चेटी सूचयति—भर्तृदारिके ! इदानीमेव कथितमित्यादिना । इदानीमेव कथितम् = नातः परं वक्तुमपेक्ष्यमाणमस्ति किञ्चिदित्यर्थः । प्रलपितेन = अनर्थकवचनोपन्यासेन । अलं सम्भ्रमेण = सन्देहो न कर्त्तव्य इत्यर्थः । ( अलं व्यर्थ-समर्थयोरिति कोशः ) । यद्यहं चतुरिका = विविधचातुर्य्यवत्तया चतुरिकेत्यन्वर्थनाम्नीत्यर्थः । तदा सोऽपि = जीमूतवाहनोऽपि । भर्तृदारिकां = भवतीम् । अपेक्षमाणः = अभिलषन् । मुहूर्त्तमपि = क्षणमात्रमपि । न अभिरंस्यते = नाऽविकृतचेता भविष्यतीत्यर्थः । यथा नायकदर्शनाद्विकृतं त्वदीयचित्तमालक्षितं मया तथा त्वद्दर्शनात्तस्यापीति भावः ।

(ख) एवं चेटीवचनमाश्वासनार्थमुक्तमाकर्ण्य जातस्पृहा नायिका स्वभाग्यं प्रत्याह—हञ्जे ! कुतोऽस्माकमेतावद्भागधेयमिति । तस्याऽहं दयापात्रं भविष्यामीति निर्णेतुं न शक्यते मदीयादृष्टेनेति भावः ।

(ग) भर्तृदारिके ! मैवं भणेति । यथा लक्ष्मीं विना मधुसूदनस्य क्षणमपि सुखं नोत्पद्यते तथा लोकोत्तररूपशालिनीं त्वां विना तस्यापि महानुभावस्य सुखं नोत्पद्यत इति भावः ।

नायिका—( क ) किं सुअणो पिअं वज्जिअ अण्णं भणिदुं जाणादि। सहि ! अदो वि मे संदावो अधिअदरं बाधेदि, जं सो महाणुभाओ वाआमेत्तएण वि मए ण संभाविदो। सो वि अकिदपड़िवत्ती अदक्खिणेत्ति मं संभावइस्सदि ( इति रोदिति )।

चेटी—(ख) भट्टिदारिए ! मा रोद। अहवा कहं ण रोइस्सदि। अहिओ से हिअअस्स संदावो अधिअदरं वाधेदि। ता किं दाणीं एत्थ करइस्सं ? ता जाव चंदणलदापल्लवरसं से हिअए दाइस्सं। ( उत्थाय चन्दनपल्लवं गृहीत्वा निष्पीड्य हृदये ददाति ) भट्टिदारिए ! णं भणामि, मा रोद। अअं क्खु ईरिसो चंदणरसो इमेहिं अणवरदपड़तेहिं बाहविंदूहिं उण्हीकिदो ण दे हिअअस्स एदं संदावं अवणेदि।

---

( क ) किं सुजनः प्रियं वर्जयित्वा अन्यत् भणितुं जानाति ? सखि ! अतोऽपि मे सन्तापोऽधिकतरं बाधते, यत् स महानुभावो वाङ्मात्रेणापि मया न सम्भावितः। सोऽप्यकृतप्रतिपत्तिरदक्षिणेति मां सम्भावयिष्यति।

( ख ) भर्तृदारिके ! मा रुदिहि। अथवा कथं न रोदिष्यति ! अधिकोऽस्या हृदयस्य सन्तापोऽधिकतरं बाधते। तत् किमिदानीमत्र करिष्ये ! तद्यावच्चन्दनलतापल्लवरसमस्या हृदये दास्ये। भर्तृदारिके ! ननु भणामि, मा रुदिहि। अयं खल्वीदृशश्चन्दनरस एभिरनवरतपतद्भिर्बाष्पबिन्दुभिरुष्णीकृतो न ते हृदस्यैतं सन्तापमपनयति।

---

(क) चेटीवचनं नातिसत्कुर्वन्ती नायिका तांप्रत्याह—किं सुजन इत्यादि। त्वयि सौजन्यातिशयसद्भावादियमुक्तिः। नैतावता कृतार्थतौदासीन्यम्वा भाविना त्ववश्यमेव भवितव्यम्। परमेष एव सन्तापे प्रबलहेतुर्यत् वाचाऽप्यसत्कृतोऽसौ महानुभावो माम् अकृतप्रतिपत्तिः = अकृतसत्कारा अदक्षिणा = अविनीता इति ज्ञास्यते इति भावः। (अत्र महानुभावशब्दमहिम्ना तस्मिन् लोकोत्तरत्वेन सत्कारयोग्यत्वं द्योत्यते)॥

(ख) नायकाऽसत्कारेणात्मानं विगर्हयन्तीं तद्दर्शनमसम्भवं मन्यमानां रुदन्तीं नायिकां चेटी वारयति—भर्तृदारिके ! मा रुदिहि। चेटीव्यापारजन्यफलस्य मलयवतीगामित्वात्परस्मैपदे प्राप्तेऽपि मलयवती-चेट्योः सखीत्वेनात्मैक्याभ्युपगमान्नायिकाशान्तिलाभात्मकफलस्य चेटीशान्तिलाभात्मकफलस्य चाऽभिन्नत्वेन क्रियाफले कर्तृगामित्वविवक्षणात् करिष्ये—दास्ये इत्युभयत्राप्यात्मनेपदमुपपद्यत इत्यवसेयम्। हृदये चन्दनरसावसेकादपि शान्तिमलभमानां रुदन्तीं नायिकां प्रकारान्तरेण पुनर्वारयति—भर्तृदारिके ! ननु भणामि मा रुदिहीति।

(कदलीपत्रमादाय वीजयति)

नायिका—(क) (हस्तेन निवारयति) सहि ! मा बीजेहि । उण्हो क्खु एसो कअलीदलमारुदो ।

चेटी—(ख) भट्टिदारिए ! मा इमस्स दोसं कहेहि । तुमं चिअ-चंदणपल्लवसंसग्गसीदलं इमं णीसासेहिं पपञ्चिअ कअलीदलमारुदं उण्हं करेसि ।

नायिका—(ग) (सास्रम्) सहि ! अत्थि कोवि इमस्स संदावस्स उवसमोवाओ ।

चेटी—(घ) भट्टिदारिए ! अत्थि, जदि सो एत्थ आअच्छे ।

---

(क) सखि ! मा वीजय । उष्णः खल्वेष कदलीदलमारुतः ।

(ख) भर्त्तृदारिके ! मा अस्य दोषं कथय । त्वं चितचन्दनपल्लवसंसर्ग-शीतलमिमं निश्श्वासैः प्रपञ्च्य कदलीदलमारुतमुष्णं करोषि ।

(ग) सखि ! अस्ति कोऽप्यस्य सन्तापस्योपशमोपायः ? ।

(घ) भर्त्तृदारिके ! अस्ति, यदि सोऽत्रागच्छेत् ।

---

कदलीपत्रमिति । एतेन व्याधिरूपा दशा सूच्यते ।

(क) कदलीदलवीजनमप्यसहमाना नायिका तन्निवारयन्ती व्याहरति—सखि ! मा वीजयेति । उष्णः खलु = उष्ण एवेत्यर्थः । ( एवार्थे खलुशब्दः ) । न केवलं तत्रौष्ण्ययमेव दोषोऽपि तु प्रतिकूलतादोषोऽपीति भावः ।

(ख) तदानींतनीमवस्थामनुसरन्त्या नायिकाया वचसः समुचिताऽभिप्रायं वर्णयति चेटी—भर्तृदारिके ! माऽस्य दोषं कथयेत्यादिना । चितं वृक्षात्संगृहीतं यत् चन्दनपल्लवं तस्य संसर्गेण सम्पर्केण शीतलं शिशिरम् इमम् कदलीदलमारुतं कदलीपत्रपवनं निश्श्वासैः नासिकारन्ध्रेण निस्सरद्भिर्वायुभिरित्यर्थः । प्रपञ्च्य वर्द्धयित्वा उष्णं = दाहकारकं करोषि = विदधासि । नोष्णतादोषः खलु कदलीदल-मारुते नैसर्गिकः सांसार्गिको वा तिष्ठति अपि तु त्वन्निश्श्वाससम्पर्कलब्ध एवासा-वतोऽस्य दोषं परिहाय शीतलोपचारविपक्षभूतो रोदनदीर्घनिश्श्वासोभयः प्रति-रुध्यतामिति भावः ।

(ग) सन्तापस्य निरवधिकत्वमपेक्ष्य रुदती नायिका चेटीम्पृच्छति—सखि ! अस्ति कोऽप्यस्येति । एतेनापि नायिकाया उन्माददशैव सूच्यते ।

(घ) चेटी नायिकावचनमुत्तरयति—भर्तृदारिके ! अस्तीत्यादिना । (एतेनो-पायान्तरस्य नैष्फल्यं द्योत्यते) ।

( ततः प्रविशति नायको विदूषकश्च )

नायकः—

व्यावृत्त्यैव सितासितेक्षणरुचा तानाश्रमे शाखिनः
कुर्वन्त्या विटपावसक्तविलसत्कृष्णाजिनौघानिव ।
यद्दृष्टोऽस्मिइ तया मुनेरपि पुरस्तेनैवमभ्याहते
पुष्पेषो ! भवता मुधैव किमिति क्षिप्यन्त एते शराः ॥१॥

---

आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः ।

इत्युक्तदिशामवलम्ब्य प्रागुद्दीपनादिभिर्नायिकाऽयोगविप्रलम्भस्योत्कर्षमभिधाय सम्प्रति नायकाऽयोगविप्रलम्भस्योत्कर्षमभिधातुं तत्प्रवेशं सूचयति—ततः प्रविशतीति ।

अथ लोकोत्तरनायिकाऽवलोकनात्प्रभृति मदनवशीकृतहृदयो नायको दयावीरोऽपि तदङ्गभूते रसान्तरे ( शृङ्गारे ) प्रवेशोन्मुखो विरहाकुलमनोविनोदाय नर्मसचिवसहायस्तमेव देशं गच्छन् साङ्गमिवाऽनङ्गं पुरोवर्त्तिनं विधाय प्राह—व्यावृत्त्येति । पुष्पाणि इषवो यस्य स तथोक्तस्तत्सम्बुद्धौ हे पुष्पेषो ! कुसुमशर ! ( एतेन वीरोचितातिकठोरबाणसाध्यकार्यमपि मृदुतरकुसुमशरद्वारैव साधयतस्ते वीरत्वमतीवविस्मयोत्पादकमिति ध्वन्यते) । मुनेरपि नत्वन्यसाधारणस्येति भावः । एतेनाऽस्यापि मत्कर्मकं तत्कर्तृकं दर्शनमपेक्षितमिति सूच्यते । पुरोऽग्रतः सितञ्च असितञ्च सितासिते श्वेतनीले तथाभूते यदीक्षणे नेत्रे तयोरुचा कान्त्या श्वेतनीलाक्षिकान्त्येत्यर्थः । आश्रमे मुनिनिवासस्थाने (स्थितानिति शेषः) तान् पूर्वदृष्टान् शाखिनो वृक्षान् विटपेषु शाखासु अवसक्ताः संलग्नास्तथा विलसन्तः स्फुरन्तः कृष्णाजिनानां कृष्णमृगचर्मणाम् ओघाः समूहा येषां येषु वा ते तथोक्तास्तान् तथाभूतान् कुर्वन्त्या विदधत्या (एतेन शाखिनामपि भाग्यवत्त्वं द्योत्यते) । इव तया कान्तया ( मलयवत्येत्यर्थः ) व्यावृत्त्यैव मुखं परावृत्त्यैव न तु सम्मुखीकृत्यैवेत्यर्थः अस्मि अहम् ( अस्मीत्यहमर्थेऽव्ययम् ) यत् दृष्टो निरीक्षितस्तेनैव मुखव्यावृत्तिपूर्वकदर्शनेनैव एवम् इत्थम् अभ्याहते ताडिते कटाक्षबाणप्रहृते इति भावः । ( मयीति शेषः ) मुधैव वृथैव किमिति कथम् एते शरा बाणाः क्षिप्यन्ते पात्यन्ते । प्रहृते प्रहारस्याऽवीरधर्मत्वान्मयि बाणप्रहारस्तव प्रयासवैफल्येन सहाऽवीरत्वमेव सूचयतीति भावः । कामबाणपातस्य वैफल्ये हेतुभूतः कान्तानयनबाणो वाक्यार्थगत इति वाक्यार्थहेतुककाव्यलिङ्गमलङ्कारः । स च कुर्वन्त्या इवेत्युत्प्रेक्षया संसृष्टः । शार्दूलविक्रीडितं वृत्तम् ॥१॥

३३ विदूषकः—(क) भो वअस्स ! कहिं क्खु दे गदं तं धीरत्तणं।

नायकः—वयस्य ! ननु सुधीर एवास्मि, कुतः—

नीताः किं न निशाः शशाङ्कधवला नाघ्रातमिन्दीवरम् ?
किं नोन्मीलितमालतीसुरभयः सोढाः प्रदोषानिलाः।
झङ्कारः कमलाकरे मधुलिहां किं वा मया न श्रुतः
निर्व्याजं विधुरेष्वधीर इति मां येनाभिधत्ते भवान् ॥२॥

---

(क) भो वयस्य ! कुत्र खलु ते गतं तत् धीरत्वम्।

---

(क) एवं नायकोक्तिमाकर्ण्य विदूषकस्तत्राऽधीरत्वं सूचयति—भो वयस्य ! कुत्र खलु ते गतं धीरत्वमिति।

तेनैवमाक्षिप्तो नायकः स्वस्मिन् सुधीरत्वं दृढीकर्तुमाह—नीता इति। (मयेति कर्तृपदं सर्वत्रान्वये योजनीयम्) मया शशाङ्केन चन्द्रेण धवला विशदाः (शशाङ्कशब्देन तत्किरणो लक्ष्यते) तथा च शशाङ्ककिरणविशदा इत्यर्थः, निशा रात्रयः (निशा निशीथिनी रात्रिरित्यमरः) किं, न नीता न यापिता अपि तु यापिता एवेत्यर्थः। तथा मया इन्दीवरं नीलकमलं नाघ्रातम् अपि तु आघ्रातमेवेत्यर्थः। (अथ नीलाम्बुजन्म च। इन्दीवरं च नीलेऽस्मिन्नित्यमरः)। तथा मया उन्मीलिता विकसिता या मालत्यः (लक्षणया मालतीलतापुष्पाणीत्यर्थः) ताभिः सुरभयः सौरभवन्तः प्रदोषानिलाः सायंकालीनवाताः किं न सोढाः किन्तु सोढा एवेत्यर्थः। तथा मया कमलाकरे कासारे (पद्माकरस्तडागोऽस्त्री कासारः सरसीरुह इत्यमरः) मधुलिहां भ्रमराणां झङ्कारो गुञ्जनशब्दः न श्रुतः किन्तु श्रुत एवेत्यर्थः। येन भवान् माम् विधुरेषु कातरेषु अधीरः कातर इति निर्व्याजं निश्छलं यथेच्छमित्यर्थः यथा तथा अभिधत्ते कथयति। धीरत्वोचितकार्यकरणेऽप्यधीरत्वं मयि व्याहरतस्तेऽवैदग्ध्यातिशयः प्रतिभातीति भावः। शशाङ्कधवलनिशादीनामधीरताहेतुभूतानां सद्भावेऽपि स्वस्मिन् धीरत्वोक्त्या तथा सहनशीलत्वात्कातरत्वरूपस्य वस्तुनोऽभिव्यक्त्यार्थशक्त्युद्भवो वस्तुध्वनिः। (एतेन धैर्यरूपसत्त्वोद्भवः पौरुषगुणः प्रतिपाद्यते)।

व्यवसायादचलनं धैर्यं विघ्ने महत्यपि।

इति दर्पणोक्तेः। दशविधकामदशासु निद्रोच्छेदरूपा चतुर्थी दशा च प्रतिपाद्यते। मया शशाङ्कधवला निशाः किं न नीता अपि तु नीता एवेत्यर्थस्य काका प्रतीत्या काकुवक्रोक्तिरत्राऽलङ्कारः।

(विचिन्त्य)। अथवा मृषा नाभिहितं, वयस्यात्रेय! नन्वधीर एवास्मि।

३५ स्त्रीहृदयेन न सोढाः क्षिप्ता कुसुमेषवोऽप्यनंगेन।
येनाद्यैव पुरस्तव वदामि धीर इति स कथमहम्॥३॥

विदूषकः—(आत्मगतम्) (क) एव्वमधीरत्तणं पडिवज्जंतेण

---

(क) एवमधीरत्वं प्रतिपद्यमानेन आख्यातो महाननेन हृदयस्यावेगः, तत् यावत् कुत्रैव एनमपक्षिपामि। भो वयस्य! कथं पुनरद्य त्वं लघ्वेव गुरुजनं शुश्रूषित्वा इहागतः।

---

अन्यस्याऽन्यार्थकं वाक्यमन्यथा योजयेद्यदि।
अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा॥

इति दर्पणोक्तेः। अलंकारोऽयमुक्ति-प्रत्युक्तिस्थलादन्यतोऽपि भवतीति बोध्यम्। एकस्यैव मयेति कर्तृकारकस्य नयन-आघ्राण-सहन-श्रवणरूपक्रियाचतुष्टयेऽन्वयाद्दीपकालङ्कारोऽपि। अधीरतासाधकहेतोश्चन्द्रकिरणोज्ज्वलनिशादेः सत्त्वेऽप्यधीरतारूपकार्यानुत्पत्त्या विशेषोक्तिरलङ्कारः। धीरतासाधकहेतोरसत्त्वेऽपि धीरतारूपकार्योत्पत्तेर्विभावनाऽपीत्यनयोः सन्देहसङ्करः। इत्यलंकारचतुष्टयसाङ्कर्यम्। शार्दूलविक्रीडितम्॥ २॥

पूर्वमात्मनि धीरत्वमुपपाद्य क्षणं विचिन्तनोत्तरं पुनरधीरत्वमुपपादयति नायकः—स्त्रीहृदयेनेति। स्त्रियां प्रियायां हृदयं यस्य (अथवा) स्त्री प्रिया हृदये यस्य, (अथवा) स्त्रीणां हृदयमिव हृदयं यस्य स तथोक्तस्तेन स्त्रीहृदयेन प्रियासक्तचेतसेत्यर्थः येन (मयेति शेषः) अविद्यमानमङ्गं यस्य सोऽनङ्गस्तेन कामेनेत्यर्थः (निरङ्गत्वादवीरेणेति ध्वन्यते) क्षिप्ता यथाकथञ्चिन्मुक्ता न तु मां लक्ष्यीकृत्य पातिता इत्यर्थः। कुसुमेषवः अतिकोमलाः पुष्पबाणा न तु वज्रवत्कठोरा इत्यर्थः। अपि न सोढा नाऽसाहिषत, सोऽहम् असोढमृदुलपुष्पवाण इत्यर्थः। अद्यैव न तु कालान्तरे इत्यर्थः। तव (मित्रस्येति शेषः) न तु शत्रोरिति पुरोऽग्रे न तु परोक्षमिति ध्वनिः। धीरो धैर्यवान् (अस्मीति शेषः) इति कथं केन प्रकारेण वदामि। सर्वदा सहचरत्वेन साक्षिभूतस्य मित्रस्य तवाग्रे स्वस्मिन् धीरत्वप्रकटनमयुक्तमिति भावः। (एतेन पञ्चमी कार्श्यरूपा कामदशा सूच्यते)। स्वभावोक्तिरलङ्कारः। अहं धीर इति कथं वदामि इत्युक्त्या अर्थात् तवाग्रे धीरत्वप्रकटनं सर्वथाऽयुक्तमेवेत्यर्थस्यापातादर्थापत्तिरलङ्कारोऽपि। आर्या वृत्तम्॥ ३॥

(क) एवमधीरत्वाभिव्यञ्जकं नायकस्य वचो निशम्य विदूषको मनसि विचारयति—एवमधीरत्वमित्यादि। अधीरत्वं = कातरत्वम्। प्रतिपद्यमानेन = प्राप्नु

आचक्खिदो महान्तो अणेण हिअअस्स आवेगो, ता जाव कहिं एव्व एदं अवक्खिवामि। (प्रकाशम्) भो वअस्स! कीस उण अज्ज तुमं लहुं जेव्व गुरुअणं सुस्सूसिअ इध आअदो।

नायकः—वयस्य! स्थाने प्रश्नः, कस्य वाऽन्यस्यैतत् कथनीयम्। अद्य खलु स्वप्ने जानामि—सैव प्रियतमा (अङ्गुल्या निर्दिशन्) अत्र चन्दनलतागृहे चन्द्रकान्तमणिशिलायामुपविष्टा प्रणयकुपिता किमपि मामुपालभमानेव रुदती मया दृष्टा, तदिच्छामि स्वप्नानुभूतदयितासमागमरम्ये अस्मिंश्चन्दनलतागृहे दिवसशेषं समतिवाहयितुम्। तदेहि, गच्छावः। (परिक्रामतः)

चेटी—(कर्णं दत्वा ससम्भ्रमम्) (क) भट्टिदारिए! पदसद्दो विअ।

नायिका—(ससम्भ्रममात्मानं पश्यन्ती) (ख) हञ्जे! मा ईरिसं आआरं पेक्खिअ कोवि मे हिअअं तुलईस्सदि। ता उट्ठेहि, इमिणा रत्तासोअपादवेण अंतरिदाअ पेक्खम्ह दाव को एसो त्ति (तथा कुरुतः)।

विदूषकः—(ग) एदं चंदणलदाघरअं। ता एहि पविसम्ह। (नाट्येन प्रविशतः)

---

(क) भर्तृदारिके! पदशब्द इव।

(ख) हञ्जे! मा ईदृशमाकारं प्रेक्ष्य कोऽपि मे हृदयं तुलयिष्यति। तदुत्तिष्ठ, अनेन रक्ताशोकपादपेनाऽन्तरिते प्रेक्षावहे तावत् क एष इति।

(ग) इदं चन्दनलतागृहम्। तदेहि प्रविशावः।

---

वता। आख्यातः = सूचितः। महान् = विशेषः। आवेगः = औत्सुक्यम्। कुत्रैव = कस्मिंश्चिद्विषयान्तरे। अपक्षिपामि = योजयामि। विषयान्तरकथोद्घाटनादेतस्य विस्मृत्या क्षणिकविनोदलाभो भविष्यतीति भावः। लघ्वेव = शीघ्रमेव।

प्रियानुरक्तहृदयो नायकस्तद्विषयोदन्तद्वारैव विदूषकप्रश्नमुत्तरयति—वयस्य! स्थाने प्रश्न इत्यादिना। प्रश्नः = जिज्ञासा। स्थाने = युक्तः। (युक्ते द्वे साम्प्रतं स्थाने इत्यमरः। गुरुजनशुश्रूषायां शीघ्रताहेतुकः प्रश्नो नायुक्त इति भावः। प्रियतमा = मलयवती। प्रणयकुपिता = प्रणयेन स्नेहेन कुपिता रुष्टेत्यर्थः। अत एव मां किमपि, उपालभमाना = तिरस्कुर्वती। स्वप्ने अनुभूताया अनुभवविषयं प्राप्तायाः साक्षात्कृताया इति यावत् दयितायाः कान्तायाः (मलयवत्या इति भावः) समागमेन समुपस्थित्या रम्ये रमणीये इत्यर्थः। समतिवाहयितुम् = यापयितुम्।

(ख) चेट्युक्तं पदशब्द इवेति वचो निशम्य नायिका तांप्रत्याह—हञ्जे!

नायकः—

चन्दनलतागृहमिदं सचन्द्रमणिशिलमपि प्रियं न मम।
चन्द्राननया रहितं चन्द्रिकया मुखमिव निशायाः ॥४॥

चेटी—(क) (दृष्ट्वा) भट्टिदारिए! दिट्ठिआ वड्ढसि। सो ज्जेव्व णं दे हिअअवल्लहो जणो।

नायिका—(दृष्ट्वा सहर्षं ससाध्वसञ्च) (ख) हञ्जे! एदं पेक्खिअ अदिसज्झसेण ण सक्कुणोमि इह एव्व आसण्णे चिट्ठिदुं, कदाबि एसो पेक्खदि, ता एहि अण्णदो गच्छम्ह। (सोत्कण्ठं पदं गत्वा) हञ्जे! वेबंति मे ऊरुओ।

---

(क) भर्तृदारिके! दिष्ट्या वर्द्धसे। स एव ननु ते हृदयवल्लभो जनः।

(ख) हञ्जे! एनं प्रेक्ष्य अतिसाध्वसेन न शक्नोमि इहैवासन्ने स्थातुं कदापि एष प्रेक्षते, तदेहि अन्यतो गच्छावः। हञ्जे! वेपेते मे ऊरू।

---

मा ईदृशमिति। मा शब्दोऽत्र निषेधार्थकः। तुलयिष्यति = ज्ञास्यति। (तुलां करिष्यतीति विग्रहे-(तत्करोति तदाचष्टे इति णिच्)। अन्तरिते = व्यवहिते। प्रेक्षावहे = पश्यावः। (आवामिति कर्तृपदशेषः)।

प्रियाशून्यं चन्दनलतागृहं विलोकमानो नायको विदूषकम्प्रत्याह—चन्दनलतागृहमिति। चन्द्रिकया कौमुद्या (चन्द्रिका-कौमुदी-ज्योत्स्नेत्यमरः) रहितं वियुक्तं निशाया रात्रेर्मुखं प्रदोषकाल इव। चन्द्रवत् आननं मुखं यस्यास्तया (कान्तया-मलयवत्येर्थः) रहितं शून्यम् इदं पुरोविद्यमानम् चन्द्रमणिशिलया सहितं सचन्द्रमणिशिलं चन्द्रकान्तमणिसनाथमपीत्यर्थः चन्दनलतागृहं मम प्रियावियुक्तस्य (जीमूतवाहनस्येत्यर्थः) न प्रियम् नानन्दजनकम्। (भवतीति शेषः)। यथा ज्योत्स्नाशून्यं स्वमुखं रात्रिं न सुखयति तथा प्रियाशून्यमिदं चन्दनलतागृहं मामपि न सुखयतीत्यर्थः। (एतेन पञ्च्या अरतीरूपकामदशायाः सूचनं भवति)। प्रीत्युत्पादकस्यापि चन्दनलताभवनस्याऽप्रीत्युत्पादकत्वे हेतुभूतस्य चन्द्राननारहितत्वस्य वाक्यार्थगतत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम्। तच्च निशाया मुखमिवेत्युपमया संसृष्टम्। वृत्तच्छेदमार्या नाम ॥ ४ ॥

(ख) चेटीनिवेदितं कान्तस्यागमनं निशम्य नायिका ताम्प्रत्याह—हञ्जे! एनं प्रेक्ष्येति। अतिसाध्वसेन = भयातिशयेन। (भीतिर्भीः साध्वसं भयमित्यमरः) आसन्ने = समीपे। वेपेते = कम्पेते। ऊरू = सक्थिनी। (सक्थि क्लीबे पुमानूरुरित्यमरः)।

चेटी—( विहस्य ) (क) अइ काअरे ! इह ट्ठिदं तुमं को पेक्खदि ? णं बिसुमरिदो दे अअं रत्तासोअपादवो, ता इध एव्व उवविसिअ चिट्ठम्ह ( तथा कुरुतः )

विदूषकः—( निरूप्य ) (ख) भो बअस्स ! एसा सा चंदमणिसिला ।

नायकः—( सवाष्पं निश्वसिति ) ।

चेटी—(ग) भट्टिदारिए ! जाणामि सिबिणआलावो बिअ, ता अबहिदा दाब सुणम्ह । ( उभे आकर्णयतः )

विदूषकः—( हस्तेन चालयन् ) (घ) भो बअस्स ! णं भणामि, एसा सा चंदमणिसिलेत्ति ।

नायकः—( सवाष्पं निश्वस्य ) सम्यगुपलक्षितम् । ( हस्तेन निर्दिश्य )—

शशिमणिशिला सेयं यस्यां विपाण्डुरमाननं
करकिसलये कृत्वा वामे घनश्वसितोद्गमा ।

---

( क ) अयि कातरे ! इह स्थितां त्वां कः प्रेक्षते ? ननु विस्मृतस्तेऽयं रक्ताशोकपादपः, तदिहैवोपविश्य तिष्ठावः ।

( ख ) भो वयस्य ! एषा सा चन्द्रमणिशिला ।

( ग ) भर्तृदारिके ! जानामि स्वप्नालाप इव, तदवहिते तावच्छृणुवः ।

( घ ) भो वयस्य ! ननु भणामि, एषा सा चन्द्रमणिशिलेति ।

---

ऊरुकम्पनोक्त्या ग्रन्थकृता स्नेहोत्पन्नः सात्विकभावो वेपथुर्नाम प्रादर्शि । तदुक्तं दर्पणकृता—

रागद्वेषश्रमादिभ्यः कम्पो गात्रस्य वेपथुः ।

इति ।

चन्द्रमणिशिलादर्शनात्स्मृतं स्वप्नदृष्टविषयं पुनर्नायको वर्णयति—शशिमणिशिलेति । सा इयं प्राक्स्वप्ने दृष्टा सम्प्रति नेत्रगोचरीभूतेत्यर्थः शशिमणिशिला चन्द्रकान्तमणिपाषाणः ( वर्तत इति शेषः ) । यस्यां शशिमणिशिलायां मयि जीमूतवाहने चिरयति विलम्बयति सति वामे दक्षिणेतरे करकिसलये हस्तपल्लवे ( पल्लवोऽस्त्री किसलयमित्यमरः ) । विपाण्डुरम् विशेषेण शुक्लवर्णं ( विरहातिशयादिति भावः ) ( अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः । हरिणः पाण्डुरः पाण्डुरित्यमरः ) । आननं मुखं कृत्वा संस्थाप्य घनोऽधिकः श्वसितानां निश्वासानामुद्गमः प्रादुर्भावो यस्याः सा तथोक्ता, अधिकं निश्वसतीत्यर्थः । तथा व्यक्तः सूचितः आकूतो मनोऽभिप्रायो यया सा तथोक्ता, तथा मनाक् इषत् स्फुटितः

चिरयति मयि व्यक्ताकूता मनाक्स्फुरिताधरा
विरमितमनोमन्युर्दृष्टा मया रुदती प्रिया ॥५॥

ततस्त्वस्यामेव चन्द्रमणिशिलायाम् उपविशावः।

( उभावुपविशतः )

नायिका—( विचिन्त्य ) (क) का उण एसा हुविस्सदि ?

चेटी—(ख) भट्टिदारिए ! जधा अम्हे ओवारिदा दाव एदं पेक्खम्ह, मा णाम तुमम्पि एव्वं दिट्ठा।

नायिका—(ग) जुज्जदि एदं । किं उण पणअकुविदं पिअअणं हिअए करिअ मंतेदि।

चेटी—(घ) भट्टिदारिए ! मा ईरिसिं सङ्कं करेहि, पुणोवि दाव सुणम्ह।

---

( क ) का पुनरेषा भविष्यति ?

( ख ) भर्तृदारिके ! यथा आवामपवारिते तावदेनं प्रेक्षावहे, मा नाम त्वमपि एवं दृष्टा।

( ग ) युज्यत एतत्। किं पुनः प्रणयकुपितं प्रियजनं हृदये कृत्वा मन्त्रयति।

( घ ) भर्तृदारिके ! मा ईदृशीं शङ्कां कुरुष्व, पुनरपि तावच्छृणुवः।

---

कम्पितः ( कोपादिति भावः ) अधरो यस्यास्तादृशी, तथा विरमित उपशमितो निवर्तित इति यावत् ( तदानीमेव मद्दर्शनादिति भावः ) मनोमन्युर्मनसः क्रोधो यया तादृशी, अत एव रुदती रोदनं कुर्वती प्रिया कान्ता ( मलयवतीत्यर्थः ) मया दृष्टा ( स्वप्ने इति शेषः )। प्रियाऽदर्शनजन्यः कोपस्तद्दर्शनाद्रोदने पर्य्यवस्यतीति भावः। स्वप्नदृष्टप्रियाया यथावद्वर्णनात्स्वभावोक्तिरलङ्कारः। वृत्त्यनुप्रासश्च। हरिणी नाम वृत्तम्। नसमरसलागः षड्वेदैर्हयैर्हरिणी मतेति तल्लक्षणम् ॥५॥

(क) इत्थं नायकोक्तिमाकर्ण्य विचिन्तनोत्तरं नायिका स्वयमाह—का पुनरेषा भविष्यतीति। एषा = मलयवती ( अहमित्यर्थः ) भविष्यति ( प्रियस्येति शेषः )।

(ख) चेटी नायिकाम्प्रत्याह—भर्तृदारिके ! यथेति ! अपवारिते = व्यवहिते। मा त्वमप्येवं दृष्टा, ( भूया इति क्रियाशेषः )।

(ग) चेटीवचनमाकर्णयन्ती नायिका प्राह—युज्यत एतदिति। कदाचिन्मामपि स पश्येदिति सम्भवतीति भावः। किम्पुनः = अथवा। प्रणयकुपित प्रणयेन स्नेहेन कुपितं रुष्टमित्यर्थः। प्रियजनं = जीमूतवाहनम्। मन्त्रयति = कथयति।

विदूषकः—( आत्मगतम् ) (क) अहिरमदि एसो एदाए कधाए, भोदु एदं ज्जेव्व वड्ढाइस्सं । ( प्रकाशम् ) भो वअस्स ! तदा सा तुए रुदती किं भणिदा ।

नायकः—वयस्य ! इदमुक्ता—

निष्यन्दत इवानेन मुखचन्द्रोदयेन ते ।
एतद् वाष्पाम्बुना सिक्तं चन्द्रकान्तशिलातलम् ॥६॥

४७ नायिका—( सरोषम् ) (ख) चदुरिए ! अत्थि किं अदो वि अवरं सोदव्वं । ता एहि गच्छम्ह अण्णदो ।

४८ चेटी—( हस्ते गृहीत्वा ) (ग) भट्टिदारिए ! एव्वं मा भण, तुमं एव्व सिविणए दिट्ठा, ण एदस्स अण्णस्सिं दिट्ठी अहिरमदि ।

---

( क ) अभिरमत एष एतया कथया, भवतु एतामेव वर्त्तयिष्यामि । भो वयस्य ! तदा सा त्वया रुदती किं भणिता ।

( ख ) चतुरिके ! अस्ति किमतोऽप्यपरं श्रोतव्यम् । तदेहि, गच्छावोऽन्यतः ।

( ग ) भर्तृदारिके ! एवं मा भण, त्वमेव स्वप्ने दृष्टा, नैतस्याऽन्यस्यां दृष्टिरभिरमते ।

---

(क) अभिरमते = प्रसीदति । एषः = जीमूतवाहनः । एतया = मलयवती-विषयिण्या । वर्त्तयिष्यामि = कथयिष्यामि ।

स्वप्ने प्रियाम्प्रत्यभिहितं वचो विदूषकं श्रावयति नायकः—निष्यन्दत इति । वाष्पाम्बुना नेत्रजलेन, सिक्तम् आर्द्रीकृतम् , एतत् पुरोदृश्यमानम् , चन्द्र-कान्तशिलातलं चन्द्रकान्तमणिप्रदेशं ते तव मुखं चन्द्र इव मुखचन्द्रस्तस्योदय उद्गमस्तेन चन्द्रसदृशमुखसहयोगेनेत्यर्थः । निष्यन्दत इव क्षरति इव । चन्द्रोदयेन चन्द्रकान्तमणिः प्रस्रवतीति प्रसिद्धिरिति भावः । अत्र रूपकाऽनुप्राणितोत्प्रेक्षा नामाऽलङ्कारः । अनुष्टप् वृत्तम् ॥६॥

(ख) एवम्मनोवृत्तिविरुद्ध-नायकवचनश्रवणाज्जातकोपा नायिकाऽधिक्षेपगर्भं चेटीम्प्रत्याह—चतुरिके ! अस्ति किमिति । गच्छावोऽन्यतः, कस्यापि लोके निष्फल-प्रवृत्तेरदर्शनान्निष्फलवचोनिशमनाऽपेक्षयाऽन्यत्र गमनमेव वरमिति भावः ।

(ग) नायकवचोभावमजानन्तीं नायिकाम्प्रति चेटी प्राह—भर्तृदारिके ! एवं मा भणेति । एतस्य=नायकस्य ( जीमूतवाहनस्य ) । अन्यस्यां=त्वदितरस्याम् । कस्यांचिन्नायिकायामित्यर्थः । अभिरमते=सन्तुष्यति प्रसीदतीति यावत् ।

नायिका—(क) ण मे हिअअं पत्तिआअदि, ता कहावसाणं जाव पडिपालेम्ह ।

नायकः—वयस्य ! जाने तामेवास्यां शिलायामालिख्य, तया चित्रगतया आत्मानं विनोदयामीति, तदित एव गिरितटान्मनःशिलाशकलानि आदायऽऽगच्छ ।

विदूषकः—(ख) जं भवं आणवेदि । (परिक्रम्य गृहीत्वोपसृत्य) भो वअस्स ! तुए एक्को वण्णओ आणत्तो, मए उण इध ज्जेव्व सुलहपञ्चराइणो वण्णआ आणीदेत्ति, आलिहदु भवं । ( उपनयति ) ।

नायकः—वयस्य ! साधु कृतम् । (गृहीत्वा शिलायामालिखन् सरोमाञ्चम्)

सखे ! पश्य,—

अक्लिष्टबिम्बशोभाधरस्य नयनोत्सवस्य शशिन इव ।
दयितामुखस्य सुखयति रेखाऽपि प्रथमदृष्टेयम् ॥७॥

( लिखति )

---

( क ) न मे हृदयं प्रत्येति, तत् कथाऽवसानं यावत् प्रतिपालयावः ।

( ख ) यद्भवान् आज्ञापयति । भो वयस्य ! त्वया एको वर्ण आज्ञप्तः, मया पुनरिहैव सुलभपञ्चरागिणो वर्णा आनीता इति; आलिखतु भवान् ।

---

(क) एवमाश्वासनवाक्यं चेटीकृतमाकर्ण्य नायिका पुनराह—न मे हृदयमिति । प्रत्येति = विश्वसिति । ( प्रतिपूर्वकादिणो लट् ) । कथाऽवसानं यावत्= मिथोभाषणसमाप्तिपर्यन्तम् । प्रतिपालयावः=इहैव कालं यापयावः ।

प्रियासक्तहृदयस्तद्वियोगमसहमानो नायकश्चित्रितामपि तामवलोक्यात्मनः प्रसादं चिकीर्षन् विदूषकम्प्रत्याह—वयस्य ! जान इति । जाने = विचारयामि । तां=स्वप्नावलोकितां कान्ताम् । अस्यां शिलायां = साक्षाद्दृश्यमाने चन्द्रकान्तपाषाणे । तया = कान्तया । चित्रगतया=चित्रितया । विनोदयामि=प्रसादयामि । मनश्शिलाशकलानि=मनश्शिलानामोपधातुखण्डानि ( भित्तं शकलखण्डे वा पुंसीत्यमरः ) ।

(ख) सुलभपञ्चरागिणः सुखलभ्यलोहितादिपञ्चप्रकारवन्तः । सुलभाः सुखेन लभ्याः पञ्चरागा लोहितादिपञ्चप्रकाराः सन्त्येषामिति विग्रहः ।

प्रियस्य रेखाम्विलिखन् नायको जातानन्दतरङ्गो विदूषकम्प्रति चित्रं प्रशंसति—अक्लिष्टेति । अक्लिष्टं सुपक्वं परिणतमिति यावत् (ननु जीर्णमपक्वं भग्नं वेति भावः ) यद् बिम्बं तदाख्यं फलं तस्य या शोभा साऽस्यस्येति अक्लिष्टबिम्बशोभा

विदूषकः--( सकौतुकं निर्वर्ण्य ) (क) अपच्चक्खेवि एव्वं णाम रूअं लिहीअदि, अदो अच्चरिअं।

नायकः--( सस्मितम् ) वयस्य !—

प्रिया सन्निहितैवेयं सङ्कल्पस्थापिता पुरः।
दृष्ट्वा दृष्ट्वा लिखाम्येनां यदि तत् कोऽत्र विस्मयः॥८॥

नायिका--( सास्रम् ) (ख) चदुरिए ! जाणिदं क्खु कहावसाणं, ता एहि दाव मित्तावसुं पेक्खम्ह।

चेटी—( सविषादमात्मगतम् )। (ग) जीविदणिरवेक्खो विअ से

---

( क ) अप्रत्यक्षेऽप्येवं नाम रूपं लिख्यते, अहो आश्चर्य्यम्।

( ख ) चतुरिके ! ज्ञातं खलु कथाऽवसानं, तदेहि तावन्मित्रावसुं प्रेक्षावहे।

( ग ) जीवितनिरपेक्ष इवास्या उल्लापः। भर्त्तृदारिके ! ननु गतैव तत्र मनोहरिका, तत् कदापि भर्त्ता मित्रावसुरिहैवागच्छति।

---

( अर्शादित्वादच् ) तादृशोऽधरो यस्मिन् तस्य, (अथवा) धरतीति धरं (पचादित्वादच् ) अक्लिष्टबिम्बशोभाया धरमक्लिष्टबिम्बशोभाधरं तस्य, सुपक्वबिम्बफलकान्तिधारणशीलस्येत्यर्थः। नयनोर्नेत्रयोरुत्सव आनन्दो यस्मात्तादृशस्य नेत्रानन्दविधायिन इत्यर्थः। शशिनश्चन्द्रस्येव दयितामुखस्य प्रियाऽऽननस्य प्रथमदृष्टा इयं रेखाऽपि सुखयति सुखं करोतीत्यर्थः। यस्य दयितामुखस्य रेखामात्रदर्शनमपि सुखयति तस्य साक्षाद्दर्शनं किं पुनरिति भावः। आद्यविशेषणद्वयं शशिन्यपि संघटते तथाहि—अक्लिष्टां मेघाद्यावरणरहितां बिम्बस्य मण्डलस्य ( बिम्बोऽस्त्री मण्डलं त्रिष्वित्यमरः ) शोभां धरतीति तथोक्तस्य। नयनोत्सवस्य नेत्रानन्दजनकस्य (पूर्णचन्द्रदर्शनादानन्द उत्पद्यत एवेति भावः)। अत्र श्लेषोपमयोः साङ्कर्यम्। आर्या वृत्तम्॥७॥

चित्ररेखाम्वीक्ष्याऽऽश्चर्यम्मन्यमानं विदूषकम्प्रत्याह नायकः—प्रियेति। पुरोऽग्रतः संकल्पेन चेतोभावनया स्थापिता अत एव सन्निहिता समीपस्था एव इयं प्रिया ( मलयवती ) वर्तत इति शेषः। अत एनां पुरःसंकल्पस्थापितां प्रियामित्यर्थः दृष्ट्वा दृष्ट्वा यदि लिखामि तत् तदा अत्र चित्रलिखने को विस्मयः किम् आश्चर्यं न किमप्याश्चर्यमित्यर्थः। मनश्चिन्तितनायिकाचित्रलिखने तदभिमुखस्थापनादेरसम्बन्धेऽपि तत्सम्बन्धोक्त्याऽतिशयोक्त्यलङ्कारः। अनुष्टुप्वृत्तम्॥८॥

(ग) नायिकायाः काकूक्तिं निशम्य विस्मयापन्नहृदया चेटी मनसि विचारयति—जीवितनिरपेक्ष इति। निर्गता अपेक्षा यस्य स निरपेक्षः जीविते निरपेक्षो जीवि-

च्छाबो। ( प्रकाशम् ) भट्टिदारिए ! णं गदा एव्व तहिं मणोहारिआ, ता कदावि भट्टा मित्तावसू इध एव्व आअच्छदि।

( ततः प्रविशति मित्रावसुः )।

मित्रावसुः—आज्ञापितोऽस्मि तातेन, यथा—"वत्स मित्रावसो ! जीमूतवाहनोऽस्माभिरिहासन्नभावात् सुपरीक्षितोऽयं, कुतोऽस्माद्योग्यो वरः ? तदस्मै वत्सा मलयवती प्रतिपाद्यताम्" इति। अहन्तु स्नेहपराधीनतया अन्यदेव किमप्यवस्थान्तरमनुभवामि अन्यच्च,—

यद्विद्याधरराजवंशतिलकः प्राज्ञः सतां सम्मतो
रूपेणाप्रतिमः पराक्रमधनो विद्वान् विनीतो युवा।
यच्चासूनपि सन्त्यजेत् करुणया सत्वायमभ्युद्यत-
स्तेनास्मै ददतः स्वसारमतुलां तुष्टिर्विषादश्च मे ॥१॥

---

तनिरपेक्षः जीवननिराकांक्ष इत्यर्थः। उल्लापो भाषणम् काकूक्तिरिति यावत्। प्रियम्विना नैतस्या जीवनाशेति भावः।

मित्रावसुस्तातसन्दिष्टं वचो नायकं श्रावयति—आज्ञापितोऽस्मीत्यादिना। आसन्नभावात्=सामीप्यात्। सुपरीक्षितः=वरयोग्यो न वेति कृतपरीक्षः। प्रतिपाद्यताम् = दीयताम्। स्नेहपराधीनतया = परिणयोत्तरं मलयवती स्वामिगृहं गमिष्यतीति प्रेमाकुलतयेत्यर्थः।

नायके ( जीमूतवाहने ) सकलगुणास्पदत्वेन वरयोग्यतां दयाबाहुल्यात्परार्थमात्मजीवपरित्यागसम्भावनया तदयोग्यतां च दर्शयन्नाह—यदिति। विद्याधराणां देवयोनिविशेषाणां राजा विद्याधरराजस्तस्य वंशोऽन्वयस्तत्र तिलकः श्रेष्ठः। प्राज्ञो बुद्धिमान्। सतां साधूनां सम्मतः साधुत्वेन ज्ञात इत्यर्थः। रूपेण सौन्दर्येण अप्रतिमोऽद्वितीय इत्यर्थः। पराक्रमो बलं धनं यस्य स पराक्रमधनः अतिवीर्यवानित्यर्थः। विद्वान् पण्डितः। विनीतो नम्रः। युवा यौवनापन्न इति यत्, तथा—करुणया कृपया सत्त्वार्थं जीवरक्षार्थम् अभ्युद्यतस्तत्परः सन् असून् प्राणानपि सन्त्यजेत् जह्यात् इति च यत् तेन उक्तद्विविधहेतुना अस्मै जीमूतवाहनाय अतुलाम् अनुपमां स्वसारं भगिनीं ( मलयवतीं ) ददतः प्रत्यर्पयतो मे मम तुष्टिः आनन्दः, विषादः शोकश्च (जायेते इति क्रिया शेषः)। सत्पात्रेऽस्मिन् कन्यादानात्तुष्टिः, कस्यापि जीवरक्षार्थं प्राणत्यागसम्भावनातो भगिन्या वैधव्यापत्त्या विषादश्चेति भावः। एकस्मिन्नेव कन्यादानविषये युगपद्धर्ष—शोकयोरसम्भ-

श्रुतश्च, यथा—जीमूतवाहनो गौर्य्याश्रमसम्बद्धे चन्दनलतागृहे वर्त्तत इति, तदेतत् चन्दनलतागृहं यावत् प्रविशामि। ( प्रविशति )।

विदूषकः—( ससम्भ्रममवलोक्य ) (क) भो वअस्स! पच्छादेहि इमिणा कअलीवत्तेण इमं चित्तगदं कण्णअं, एसो क्खु सिद्धजुवराओ मित्तावसू इध आअदो कदावि पेक्खिस्सदि।

नायकः—( कदलीपत्रेण प्रच्छादयति )।

मित्रावसुः—( प्रविश्य ) कुमार। मित्रावसुः प्रणमति।

नायकः—( दृष्ट्वा ) मित्रावसो! स्वागतम्, इतः स्थीयताम्।

चेटी—(ख) भट्टिदारिए! आअदो भट्टा मित्तावसू।

नायिका—(ग) हञ्जे! पिअं मे।

नायकः—मित्रावसो! अपि कुशली सिद्धराजो विश्वावसुः।

---

(क) भो वयस्य! प्रच्छादयानेन कदलीपत्रेणेमां चित्रगतां कन्यकाम्, एष खलु सिद्धयुवराजो मित्रावसुरिहागतः कदापि प्रेक्षिष्यते।

(ख) भर्तृदारिके! आगतो भर्त्ता मित्रावसुः।

(ग) हञ्जे! प्रियं मे।

---

वात्प्रतिभासमानस्य विरोधस्य सत्पात्रत्वाद्धर्षः प्राणत्यागसम्भावनाहेतुकश्च शोक इति रीत्या परिहाराद्विरोधाभासोऽत्रालङ्कारः। तदुक्तं दर्पणे—

विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः। इति।

उक्तावशिष्टसन्देशं श्रावयति—श्रुतश्चेत्यादिना। गौर्य्याश्रमसम्बद्धे = गौरीगृहसमीपस्थे।

(क) रहस्यभेदभिया विदूषको नायकं शिक्षयति–भो वयस्य! प्रच्छादयेत्यादिना। प्रच्छादय = गोपय। प्रेक्षिष्यते = द्रक्ष्यति।

आगते स्वागतं कुर्यादित्यादिशिष्टाचारादागतम्प्रति स्वागतविधानमावश्यकं निश्चित्य नायकः प्राह–मित्रावसो! स्वागतमिति। स्थीयताम् = उपविश्यताम्।

कुशलजिज्ञासुर्नायको मित्रावसुं पृच्छति—मित्रावसो! अपि कुशलीति। अपिशब्दोऽत्र प्रश्ने। कुशली ( कुशलमस्यास्तीति विग्रहे तद्धित इन् प्रत्ययः ) कुशलयुक्त इत्यर्थः। सिद्धराजो विश्वावसुः कुशलयुक्तोऽस्ति किमिति सन्दर्भार्थः।

मित्रावसुः—कुशली। तातसन्देशेनास्मि त्वत्सकाशमागतः।

नायकः—किमाह तत्रभवान्।

नायिका—(क) सुणिस्सं दाव, किं तादेण कुसलं संदिट्ठं त्ति।

मित्रावसुः—(सास्रम्) इदमाह—"तात! अस्ति मे मलयवती नाम कन्या जीवितमिवास्य सर्वस्यैव सिद्धराजान्वयस्य, सा मया तुभ्यं प्रतिपाद्यते, प्रतिगृह्यताम्" इति।

चेटी—(विहस्य) (ख) भट्टिदारिए! किं ण कुप्पसि दाणीं।

नायिका—(सस्मितं सलज्जाऽधोमुखी स्थिता)। (ग) हञ्जे। मा हस, किं विसुमरिदं दे एदस्स अण्णहिअअत्तणं।

---

(क) श्रोष्यामि तावत्, कि तातेन कुशलं सन्दिष्टमिति।
(ख) भर्तृदारिके! किं न कुप्यसीदानीम्?
(ग) हञ्जे! मा हस, किं विस्मृतं त एतस्यान्यहृदयत्वम्?

---

मित्रावसुरुत्तरयति—कुशलीति। तातसन्देशेन (हेतुतृतीयान्तमिदम्)। त्वत्सकाशं = तव समीपम्।

नायकः सन्देशवचनशुश्रूषया पृच्छति—किमाह तत्रभवानिति। तत्रभवान् पूज्य इत्यर्थः। अत्र तत्र भवान् पूज्ये इति दर्पणोक्तेः। (त्रिषु तत्रभवान् पूज्यस्तथैवात्रभवानपीत्यमरोक्तेश्च)। अत्र भवान् तत्रभवानिति द्वयं पूज्ये प्रयोक्तव्यमिति तदर्थः।

तातसन्देशमभिधातुमुद्यतोऽपि मित्रावसुः परिणयोत्तरभाविना भगिनीवियोगेन साश्रुमुखः सन् तं श्रावयति—इदमाह-तातेति। जीवितमिव = प्राण इव। सिद्धराजान्वयस्य = सिद्धराजवंशस्य। प्रतिपाद्यते = समर्प्यते। प्रतिगृह्यताम् = स्वीक्रियताम्।

(ख) नायिकामनोऽनुकूलवचनमाकर्ण्य परिहासपूर्वं चेटी नायिकामधिक्षिपति—भर्तृदारिके! किं न कुप्यसीदानीमिति। जीमूतवाहनाय स्वार्पणसूचकवचनश्रवणात्प्राक् यथा कोपं कृतवती तथा सम्प्रत्यपि कथं न कोपं करोषीत्यर्थः।

(ग) नायिका युक्त्यन्तरेणाऽधिक्षेपं परिहरति—हञ्जे! मा हसेत्यादिना। एतस्य=मित्रावसोः। अन्यहृदयत्वम्=हृदयस्याऽभिप्रायान्तरत्वम्।

नायकः—( अपवार्य्य ) वयस्य ! सङ्कटे पतिताः स्मः ।

विदूषकः—(अपवार्य्य ) (क) भो ! जाणामि, ण तं वज्जिअ दे अण्णेहिं चित्तं अहिरमदि जधा, तधा जं किम्पि भणिअ विसज्जीअदु एसो ।

नायिका—( सरोपमात्मगतम् ) (ख) हदास ! को वा एदं ण जाणादि ।

नायकः—क इह नेच्छेद् भवद्भिः सह श्लाघ्यमीदृशं सम्बन्धम् । किन्तु न शक्यते चित्तमन्यतः प्रवृत्तमन्यतः प्रवर्त्तयितुं, ततो नाहमेनां प्रतिग्रहीतुमुत्सहे ।

नायिका—( मूर्च्छां नाटयति ) ।

चेटी—(ग) समस्ससदु समस्ससदु भट्टिदारिआ ।

विदूषकः—(घ) भो ! पराधीणो क्खु एसो, किं एदिणा अब्भत्थिदेण । ता गुरुअणं से गदुअ अब्भट्टेहि ।

---

( क ) भोः ! जानामि, न तां वर्जयित्वा तेऽन्यत्र चित्तमभिरमते यथा, तथा यत् किमपि भणित्वा विसर्ज्यतामेषः ।

( ख ) हताश ! को वैतन्न जानाति ?

( ग ) समाश्वसितु समाश्वसितु भर्त्तृदारिका ।

( घ ) भोः ! पराधीनः खल्वेषः, किमनेनाभ्यर्थितेन ? तद् गुरुजनमस्य गत्वाऽभ्यर्थय ।

---

अपवार्य्य=परावृत्य, ( पराङ्मुखीभूय ) । सङ्कटे=क्लेशे, आपदीति यावत् ।

(क) ताम्=मलयवतीम् । अभिरमते=प्रसीदति । भणित्वा=उक्त्वा । विसृज्यताम्=प्रेष्यताम् ।

मित्रावसुम्प्रति सन्देशोत्तरमाह नायकः—क इहेति । श्लाघ्यम्=प्रशंसायोग्यम् । ईदृशं सम्बन्धम्=वैवाहिकमिति भावः । अन्यतः = अन्यस्मिन्विषये । अन्यतः प्रवर्तयितुम्=अन्यस्मिन् विषये योजयितुम् । एनाम्=मलयवतीम् । प्रतिग्रहीतुम्=स्वीकर्त्तुम् । उत्सहे=उत्साहयुक्तो भवामि ।

(घ) पराधीनः=परतन्त्रः । एषः=जीमूतवाहनः अभ्यर्थितेन=प्रार्थितेन । गुरुजनम्=पितरम् । अस्य=जीमूतवाहनस्य ।

मित्रावसुः—(आत्मगतम्) साधूक्तम्; नायं गुरुजनमतिक्रामति, एष गुरुरप्यस्मिन्नेव गौर्य्याश्रमे प्रतिवसति, तद् यावद्गत्वा अस्य पित्रा मलयवतीं ग्राहयामि।

नायिका—(समाश्वसिति)।

मित्रावसुः—एवं निवेदितात्मनोऽस्मान् प्रत्याचक्षाणः कुमार एव बहुतरं जानाति।

नायिका—(सरोषं विहस्य) (क) कहं पच्चाक्खाणलहू मित्रावसू पुणो वि मन्तेदि ?

मित्रावसुः—(निष्क्रान्तः)।

नायिका—(सास्रमात्मानं पश्यन्त्यात्मगतम्) (ख) किं मम एदिणा दोहग्गकलङ्कमइलेण अच्चंतदुक्खभाइणा अज्जवि सरीरेण धारिदेण ? ता इध ज्जेव्व असोअपाअवे इमाए अदिमुत्तलदाए उब्बंधिअ अत्ताणं बावादइस्सं, ता एदं एव्वं दाव। (प्रकाशं विलक्षस्मितेन) हञ्जे ! पेक्ख दाव मित्रावसू गदो ण वेत्ति, जेण अहम्पि इदो गमिस्सं।

---

(क) कथं प्रत्याख्यानलघुर्मित्रावसुः पुनरपि मन्त्रयते।

(ख) किं ममैतेन दौर्भाग्यकलङ्कमलिनेनात्यन्तदुःखभागिनाऽद्यापि शरीरेण धारितेन ? तदिहैवाऽशोकपादपेऽनयाऽतिमुक्तलतयोद्बध्याऽऽत्मानं व्यापादयिष्यामि, तदिदमेवन्तावत्। हञ्जे ! प्रेक्षस्व तावन्मित्रावसुर्गतो न वेति, येनाऽहमपीतो गमिष्यामि।

---

अयम् = जीमूतवाहनः। अतिक्रामति=उल्लङ्घयति। गौर्य्याश्रमे=गौर्य्याश्रमसमीपे। ग्राहयामि=पित्रा एनं जीमूतवाहनं मलयवतीं स्वीकारयामि।

निवेदितात्मनः=निवेदितो विज्ञापित आत्मा स्वरूपं यैस्ते तथोक्तास्तान्। प्रत्याचक्षाणः = निराकुर्वन्। प्रति × आङ् × चक्ष् × शानच्। (प्रत्याख्यानो निराकृतिरित्यमरः)।

(क) प्रत्याख्यानलघुः = प्रत्याख्यानेन तिरस्कारेण लघुरपमानित इत्यर्थः।

(ख) दौर्भाग्यकलङ्कमलिनेन = दौर्भाग्यं दुरदृष्टत्वम् ईप्सितप्रियस्नेहाऽविषयत्वमिति यावत् तदेव कलङ्को लाञ्छनं तेन मलिनं दूषितं तेन। अतिमुक्तलतया = माधवीलतया (अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लतेत्यमरः)। एतेन देहत्यागसौलभ्यं सूच्यते। उद्बध्य=ऊर्ध्वं बद्ध्वा। व्यापादयिष्यामि = विनाशयिष्यामि।

चेटी—( कतिचित् पदानि गत्वाऽवलोक्यात्मगतम् )। (क) अण्णारिसं से हिअअं पेक्खामि, ता ण गमिस्सं। इध ज्जेव्व ओवारिदा पेक्खामि, किं एसा पड़िवज्जदि त्ति।

नायिका—( दिशोऽवलोक्य पाशं गृहीत्वा सास्रम् ) ( ख ) भअवदि गोरिए! तुए इध ण किदो पसादो, ता जम्मन्तरे जधा ण ईरिसी दुक्खभाइणी होमि, तधा करेसि। ( इत्यभिधाय कण्ठे पाशमर्पयति )।

चेटी—( दृष्ट्वा ससम्भ्रममुपसृत्य ) ( ग ) पलित्ताअदु पलित्ताअदु अज्जो, एसा भट्टिदारिआ उब्बंधिअ अत्ताणअं बावादेदि।

---

( क ) अन्यादृशमस्या हृदयं प्रेक्षे, तन्न गमिष्यामि। इहैवापवारिता प्रेक्षे, किमेषा प्रतिपद्यत इति।

( ख ) भगवति गौरिके! त्वयेह न कृतः प्रसादः, तज्जन्मान्तरे यथा नेदृशी दुःखभागिनी भवामि, तथा करिष्यसि।

( ग ) परित्रायतां परित्रायतामार्य्यः, एषा भर्तृदारिकोद्बध्यात्मानं व्यापादयति।

---

(क) अन्यादृशम् = विकृतमित्यर्थः। अपवारिता = व्यवहिता। किं प्रतिपद्यते = किं करोतीत्यर्थः।

(ख) एवं रतिसागरमग्नेप्सितदयितसमागमलालसाऽपूर्त्तितो मदनाकुलमानसा कायविसर्जनोद्यता नायिका जन्मान्तरानुग्रहाय गौरीम्प्रार्थयति—भगवति गौरिके! इति। इह = अस्मिन् जन्मनि। प्रसादः = अनुग्रहः। जन्मान्तरे = अन्यस्मिन् जन्मनि। दुःखभागिनी = ईप्सितदयितवियोगजक्लेशभोक्त्रीत्यर्थः। कण्ठे = गले। पाशं = माधवीलतारूपं रज्जुम्। अर्पयति = योजयति। एतेन दशमी कामदशा सूच्यते। नेह मरणं वर्णितम् नाटके तद्वर्णनस्य निषिद्धत्वात्। तदुक्तम्—

रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते।
जातप्रायं तु तद्वाच्यं चेतसाऽऽकांक्षितं तथा॥

इति।

लतापाशेनात्मानमुद्बध्य मर्त्तुमुद्यतां नायिकां विलोक्य तन्निषेधाय ससम्भ्रमं चेटिकोच्चैर्वदति—परित्रायतामिति।

नायकः—( ससम्भ्रममुपसृत्य ) कासौ कासौ ।

चेटी—(क) इअं असोअपादवे ।

नायकः—( सहर्षमवलोक्य ) सैवेयमस्मन्मनोरथभूमिः । (नायिकां पाणौ गृहीत्वा लतापाशमाक्षिपति ) ।—

न खलु न खलु मुग्धे ! साहसं कार्य्यमीदृक्
व्यपनय करमेतं पल्लवाभं लतायाः ।
कुसुममपि विचेतुं यो न मन्ये समर्थः
कलयति स कथं ते पाशमुद्बन्धनाय ॥१०॥

---

( क ) इयमशोकपादपे ।

---

कासौ—कासौ । चेटीप्रलापाऽनुसारेणैव नायकस्यापि सम्भ्रमादेवमुक्तिः । ( एतेन तत्र कारुण्यातिशयो व्यज्यते ) ।

सैवेयमिति । अस्मन्मनोरथभूमिः = अस्माकं मनोरथोऽस्मन्मनोरथस्तस्य भूमिः स्थानम् मदीयेच्छाविषय इत्यर्थः । इयं = साक्षाद्दृश्यमानेत्यर्थः । सैव = पूर्वं गौर्य्याश्रमे दृष्टैवेत्यर्थः ।

नायिकापाणिमवलम्ब्य लतापाशमाक्षिपन् नायकस्तां निषेधति—न खल्विति । हे मुग्धे ! सुन्दरि ! ईदृक् कण्ठे पाशार्पणात्मकमित्यर्थः । साहसम् अविमृष्यकारित्वम् अकर्त्तव्याचरणात्मकमित्यर्थः । न खलु-न खलु कार्यं नैव कार्यमित्यर्थः ( एवार्थेऽत्र खलुशब्दः—सम्भ्रमे च द्विरुक्तिः ) । त्वयेति शेषः । पल्लव इव आभा यस्य स पल्लवाभस्तं पल्लवाभं पल्लवसदृशमित्यर्थः । एतं मया गृहीतमित्यर्थः करं हस्तं लताया माधवीलतासकाशादित्यर्थः । व्यपनय पृथक् कुरु । ते तव यः ( करः ) कुसुमं पुष्पमपि विचेतुमेकत्रीकर्तुं न समर्थो न क्षमः ( अस्तीति शेषः ) इति मन्ये उत्प्रेक्षे जानामीति यावत् । स ते तव करः उद्बन्धनाय सम्बद्धुं पाशं रज्जुं कथं कलयति गृह्णाति, अपि तु नैव पाशग्रहणयोग्य इत्यर्थः । ( धातूनामनेकार्थत्वाद्ग्रहणार्थोऽत्र कलधातुरिति बोध्यम् ) । अत्र द्वितीयपादे पल्लवाभमित्यत्रोपमा । तृतीयपादे मन्येशब्दसद्भावात्करे कुसुमचयनाऽसामर्थ्यसम्भावनयोत्प्रेक्षा । तुर्यपादे स ते कर उद्बन्धनाय पाशं कथं कलयति गृह्णाति अपि तु नै तद्ग्रहणयोग्य इत्यर्थस्य काका व्यञ्जितत्वात् काकुवक्रोक्तिश्चेत्यलंकारत्रयस्य संसृष्टिः । मालिनीवृत्तम् । ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणम् ॥ १० ॥

नायिका—(ससाध्वसम्) (क) हञ्जे ! को उण एसो । ( निरूप्य सरोषं हस्तमाक्षेप्तुमिच्छति ) मुञ्च मुञ्च अग्गहत्थम्, को तुमं णिवारिदुं । मरणे वि किं तुमं ज्जेव्व अब्भत्थणीओ ।

नायकः—नाहं मुञ्चामि ।

कण्ठे हारलतायोग्ये येन पाशस्त्वयाऽर्पितः ।
गृहीतः सापराधोऽयं कथं ते मुच्यते करः ॥११॥

विदूषकः—( ख ) भोदु, किं उण से इमस्स मरणव्ववसायस्स कारणं ।

चेटी—(ग) णं एसो एव्व दे पिअवअस्सो ।

---

( क ) हञ्जे ! कः पुनरेषः ? मुञ्च मुञ्चाग्रहस्तं, कस्त्वं निवारयितुम् ? मरणेऽपि किं त्वमेवाभ्यर्थनीयः ?

( ख ) भवतु, किं पुनरस्या अस्य मरणव्यवसायस्य कारणम् ?

( ग ) नन्वेष एव ते प्रियवयस्यः ।

---

(क) एवं नायकवचो निशम्य भीता नायिका तन्निषेधाय चेटीमुद्दिश्यैवाह—हञ्जे ! कः पुनरेष इति । निवारयितुम् = निषेद्धुम् अवरोद्धुमिति यावत् । मरणेऽपि = जीवनत्यागेऽपि । अभ्यर्थनीयः = प्रार्थनीयः । जीवन एव त्वमभ्यर्थनीयो न तु मरणेऽपि निष्प्रयोजनत्वादिति भावः ।

इत्थं नायिकावचनमाकर्ण्य नायको युक्त्या तामप्रत्याश्वासनवाक्यमाह—कण्ठ इति । ( पूर्वश्लोकतः सम्बोधनपदं योजनीयम् ) हे मुग्धे ! त्वया भवत्या येन ( करेणेति शेषः ) हारलतायोग्ये मौक्तिकोचिते कण्ठे गले पाशो रज्जुः अर्पितो योजितः । सापराधः कृतमहादोषो (गलेपाशयोजनादिति भावः) । अत एव गृहीतो धृतो ( मयेति शेषः ) अयं ते तव करो हस्तः कथं मुच्यते त्यज्यते नैव मोक्तुं योग्य इत्यर्थः । अपराधिनो हि दण्डनीया भवन्तीति तव करपीडनमवश्यं करिष्यामीति भावः । (एतेन विवाहस्वीकारः सूच्यते) । करस्य दण्डदाने हेतुभूतस्य कण्ठे पाशार्पणस्य वाक्यार्थगतत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् । अयं ते करः कथं मुच्यते नैव कथमपि मोक्तुं योग्य इत्यर्थस्य प्रतीतेरर्थापत्तिरपि प्रतिभाति । अनुष्टुप् वृत्तम् ॥ ११ ॥

(ख) मरणव्यवसायस्य = मरणोद्यमस्य । कारणम् = हेतुः ।

(ग) प्रियवयस्यः = हृदयवल्लभः ।

नायकः—कथमहमेवास्या मरणकारणम् ? न खल्ववगच्छामि।

विदूषकः—(क) भोदि ! कहं विश्र ।

चेटी—(साकूतम्) (ख) जा सा पिअवअस्सेण दे कावि हिअअवल्लहा सिलाअले आलिहिदा, ताए पक्खवादिणा एदेण पड़िवादअंतस्सवि मित्तावसुणो णाहं पड़िच्छिदे त्ति जादणिव्वेदाए इमाए एव्वं व्ववसिदं ।

नायकः—(सहर्षमात्मगतम्) कथमियमेवासौ विश्वावसोर्दुहिता मलयवती !! अथवा रत्नाकरादृते कुतश्चन्द्रलेखायाः प्रसूतिः हा ! कथं वञ्चितोऽस्म्यनया ।

---

(क) भवति ! कथमिव ?

(ख) या सा प्रियवयस्येन ते काऽपि हृदयवल्लभा शिलातले आलिखिता, तस्याः पक्षपातिना एतेन प्रतिपादयतोऽपि मित्रावसोर्नाहं प्रतीष्टेति जातनिर्वेदया अनयैवं व्यवसितम् ।

---

अस्याः = नायिकायाः (मलयवत्याः) । मरणकारणम् = प्राणत्यागहेतुः । न खल्ववगच्छामि = नैव जानामीत्यर्थः ।

(ख) साकूतम् = साऽभिप्रायम् । प्रियवयस्येन = प्रियमित्रेण जीमूतवाहनेनेति यावत् । हृदयवल्लभा = प्रिया । शिलातले = चन्द्रकान्तपाषाणे । आलिखिता = चित्रिता । तस्याः = हृदयवल्लभायाः । पक्षपातिना = अभिलाषिणा । एतेन = जीमूतवाहनेन । प्रतिपादयतोऽपि = ददतोऽपि । (अत्राऽनादरे षष्ठी) प्रतिपादयन्तमपि मित्रावसुमनादृत्येत्यर्थः । अहम् = मलयवती । न प्रतीष्टा = नाभिलषिता । इति = अस्माद्धेतोः । जातनिर्वेदया = जातो निर्वेदो वैराग्यं यस्यास्तया उदासीनयेत्यर्थः । अनया = मलयवत्या । एवम् = कण्ठे पाशार्पणम् । व्यवसितम् = कृतम् ।

सहर्षमिति । ज्ञातपूर्वाया अन्यप्रतीतेरपगमेन हर्षः । रत्नाकरात् = समुद्रात् । कौस्तुभाद्युत्पत्तिस्थानादित्यर्थः प्रसूतिः = जन्म । कुतः = नान्यतो भवितुमर्हतीति भावः । (रत्नाकर-विश्वावस्वोश्चन्द्रलेखा-मलयवत्योश्च बिम्ब-प्रतिबिम्बभावप्रतीत्याऽत्र प्रतिभासितया निदर्शनया कन्या-तत्पितुश्चोत्कृष्टता व्यज्यते)। वञ्चितः = प्रतारितः । अनया = मलयवत्या ।

विदूषकः—( क ) भोदि ! जई एव्वं, ता अणवरद्धो दाणीं पिअ-बअस्सो। अहवा जइ मम ण पत्तिआअदि, तदा अअं जेव्व सिलाअलं गदुअ पेक्खदु भोदी।

नायिका—( सहर्षं सलज्जञ्च नायकं पश्यन्ती हस्तमाकर्षति )।

नायकः—( सस्मितम् ) न तावन्मुञ्चामि यावन्मम हृदयवल्लभां शिलायामालेख्यगतां न पश्यसि।

( सर्वे परिक्रामन्ति )

विदूषकः—(कदलीपत्रमपनीय ) ( ख ) भोदि ! पेक्ख पेक्ख एदं से हिअअवल्लहं जणं।

नायिका—(निरूप्यापवार्य्य सस्मितम् ) ( ग ) चदुरिए ! अहं विअ आलिहिदा।

---

( क ) भवति ! यद्येवं तदनपराद्ध इदानीं प्रियवयस्यः। अथवा यदि मम न प्रत्येति, तदा स्वयमेव शिलातलं गत्वा प्रेक्षतां भवती।

( ख ) भवति ! प्रेक्षस्व प्रेक्षस्व एतमस्य हृदयवल्लभं जनम्।

( ग ) चतुरिके ! अहमिवालिखिता।

---

(क) दयितवियोगहेतुकं नायिकाजीवत्यागोद्यमं चेटीद्वारा निशम्य विदूषकः प्राह—भवति ! यद्येवमिति। यद्येवम् = मत्प्रियमित्रस्यैवैतन्मरणहेतुत्वे। तत् = तदा। अनपराद्धः = साहसनिवारणद्वारा परिहृतदोष इत्यर्थः। प्रत्येति = विश्वसिति। प्रेक्षताम् = पश्यतु।

नायिकाऽऽशयमवेत्य कृतस्याऽऽगसोऽपनयनाय युक्त्यन्तरमाह—नायकः = न तावन्मुञ्चामीति। आलेख्यगताम् = चित्रलिखिताम्।

(ख) कदलीपत्रमपनीयेति। मित्रावसुदर्शनभिया प्रतिकृतेराच्छादितत्वात्तद-पनयनमिति भावः। एतम् = चित्रगतम्। अस्य = प्रियवयस्यस्य। हृदयवल्लभं जनम् = मलयवतीरूपम्।

(ग) चित्रदर्शनान्निजसरूपतान्निर्णीय तदेव भाषयितुं चेटीम्प्रत्याह नायिका—चतुरिके ! अहमिवेति।

चेटी—( चित्राकृतिं नायिकाञ्च निर्वर्ण्य ) ( क ) भट्टिदारिए ! किं भणासि ? अहं बिअ आलिहिदे त्ति। ईरिसं सोसारिच्छं, जेण ण जाणीअदि, किं दाव इध ज्जेव्व सिलाअले भट्टिदारिआए पडिबिम्बं सङ्कंतं, उद तुमं आलिहिदे त्ति।

नायिका—( विहस्य ) (ख) हञ्जे ! दुज्जणीकिदम्हि इमिणा मं चित्तगदं दंसअंतेण।

विदूषकः—(ग) णिव्वुत्तो दाणीं दे गन्धव्वो बिआहो। ता मुञ्च दाव से अग्गहत्थं। एषा क्खु कावि तुरिदतुरिदा इध ज्जेव्व आअच्छदि।

नायकः—( मुञ्चति )।

---

( क ) भर्तृदारिके ! किं भणसि ? अहमिवालिखितेति। ईदृशं सौसादृश्यं, येन न ज्ञायते; किं तावदिहैव शिलातले भर्तृदारिकायाः प्रतिबिम्बं सङ्क्रान्तम्, उत त्वमालिखितेति।

( ख ) हञ्जे ! दुर्जनीकृताऽस्म्यनेन मां चित्रगतां दर्शयता।

( ग ) निर्वृत्त इदानीं ते गान्धर्वो विवाहः। तन्मुञ्च तावदस्या अग्रहस्तम्। एषा खलु काऽपि त्वरितत्वरिता इहैवागच्छति।

---

(क) ईदृशम् = इत्थम्भूतम्। सौसादृश्यम् = समानरूपत्वम्। येन = सादृश्येन। प्रतिबिम्बम् = प्रतिच्छायम्। संक्रान्तम् = सम्मिलितम्। चित्रितप्रतिकृतेः सौन्दर्यातिशयेन चित्रम्वा तव प्रतिबिम्बं वेति सन्देह उत्पद्यत इति भावः।

(ख) अनेन = नायकेन दयितेनेति यावत्। दुर्जनीकृताऽस्मि = असज्जनीकृताऽस्मि। मयि प्रेमाऽऽधिक्याच्चित्रितां मां विधाय निजात्मानमानन्दयन्नपि मयाऽन्यथा विचिन्तयन्त्या नितरां निराकृतो मयि दौर्जन्यं सम्पादितवानिति भावः।

(ग) निर्वृत्तः = सम्पन्नः। गान्धर्वः = मिथोरागोत्पन्नः। विवाहः = उद्वाहः। अन्योऽन्यस्नेहजन्यविवाह इत्यर्थः। उक्तञ्चैतल्लक्षणं यथा—

इच्छयाऽन्योऽन्यसंयोगः कन्यायाश्च वरस्य च।
गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः॥

इति। अष्टविधविवाहमध्ये गान्धर्वोऽप्येकः परिगणितो दृश्यते यथा—

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः।
गान्धर्व-राक्षसौ चान्यौ पैशाचश्चाष्टमः स्मृतः॥

इति।

द्वितीया चेटी—( प्रविश्य सहर्षम् ) ( क ) भट्टिदारिए ! दिट्ठिआ वड्ढसि । पड़िच्छिदा क्खु तुमं भट्टिणो जीमूदवाहणस्स गुरूहिं ।

विदूषकः—( नृत्यन् ) ( ख ) ही ही भोः ! सम्पुण्णा मणोरहा पिअवअस्सस्स । अहवा णहि णहि, भादीए मलअवदीए । अहवा ण एदाणं, ( भोजनमभिनयन् ) मम ज्जेव्व एक्कस्स बम्हणस्स ।

चेटी—( नायिकामुद्दिश्य ) (ग) आणत्तम्हि जुअराजमित्तावसुणा, जह,—"अज्ज ज्जेव्व मलअवदीए विआहो, ता लहुँ तं गेण्हिअ आअच्छ" त्ति । ता एहि गच्छम्ह ।

विदूषकः—(घ) गदा क्खु तुमं दासीए धीए ! एदं गेण्हिअ, वअस्सेण किं इध ज्जेव्व अवत्थिदव्वं ?

---

( क ) भर्तृदारिके ! दिष्ट्या वर्द्धसे । प्रतीष्टा खलु त्वं भर्त्तुर्जीमूतवाहनस्य गुरुभिः ।

( ख ) ही ही भोः ! सम्पूर्णा मनोरथाः प्रियवयस्यस्य । अथवा न हि न हि, भवत्या मलयवत्याः । अथवा नैएतयोः, ममैवैकस्य ब्राह्मणस्य ।

( ग ) आज्ञप्ताऽस्मि युवराजमित्रावसुना, यथा,—"अद्यैव मलयवत्या विवाहः, तल्लघु तां गृहीत्वा आगच्छ" इति । तदेहि गच्छावः ।

( घ ) गता खलु त्वं दास्याः पुत्रि ! इमां गृहीत्वा, वयस्येन किमिहैवाऽवस्थातव्यम् ?

---

(क) दिष्ट्या = भाग्येन, हर्षेण वा । प्रतीष्टा = आकांक्षिता स्वीकृतेति यावत् । गुरुभिः = पित्रादिभिः ।

(ख) चेटीवचनामृतश्रवणजातहर्षो विदूषकः सम्भोगश्रृङ्गारस्य भावितया तदङ्गभूतं हास्यं नृत्यन् प्रकाशयति—ही ही भो इत्यादिना । विदूषकेन हास्यातिशयार्थं ही ही शब्दः प्रयुक्तः । ममैवैतस्य ब्राह्मणस्य = (सम्पूर्णो मनोरथ इति शेषः) । भोजनाभिनयद्वारेव स्वमनोरथं प्रकाशयतीत्यर्थः ।

(घ) मलयवतीमाह्वातुमागताया मित्रावसुप्रेषितायाश्चेट्या वचनमाकर्ण्य जातात्पकोपो विदूषकोऽधिक्षेपवाक्यं परिहासगर्भमाह—गता त्वं दास्याः पुत्रीत्यादि । त्वया सह गतायामितो मलयवत्यामावयोर्विशेषतोऽस्मन्मित्रस्य च तददर्शने नैरा-

चेटी—(क) हदास ! मा तुवर तुवर। तुम्हाणं पि ण्हवणअं आअदं ज्जेव्व।

नायिका—( सानुरागं सलज्जञ्च नायकं पश्यन्ती सपरिवारा निष्क्रान्ता )।

वैतालिकः—( नेपथ्ये पठति )।

वृष्ट्या पिष्टातकस्य द्युतिमिह मलये मेरुतुल्यां दधानः
सद्यः सिन्दूरधूलीकृतदिवससमारम्भसन्ध्याऽऽतपश्रीः।

---

( क ) हताश ! मा त्वरस्व त्वरस्व। युष्माकमपि स्नपनकमागतमेव।

---

श्यादेवमुक्तिः। दास्याः पुत्रीत्यधिक्षेपवाक्यम्। ( अलुगत्र षष्ठया बोध्यः)। गतेत्यस्य गच्छसीत्यर्थः। वर्तमाने भूतकालिकव्यवहारेणाऽपि परिहासगर्भोऽनादरः प्रतीयते। त्वन्तु मलयवतीमादाय गच्छसि मम प्रियवयस्यस्त्विहैव तिष्ठति, यद्ययमिहैव तिष्ठेत् तदा विवाहः कथं सम्पद्येत द्वयायत्तकार्यस्यैकेन कर्तुमशक्यत्वादित्येवं परिहासो व्यज्यते।

(क) परिहासगर्भमाक्षेपवचो विदूषकभाषितमाकर्ण्य कुपिता चेटी तत्प्रत्याह—हताशेत्यादि। स्नपनकम् = स्नानोचितं द्रव्यम्। मया निरूपितेऽपि युष्माकमपि कार्ये विपरीतप्रतीतिसाधिकया त्वरयैव त्वयि हताशत्वं सूचयतीति भावः।

वैतालिकः। विविधेन तालेन माङ्गलिकस्तुत्यादिशब्देन व्यवहरतीति वैतालिकः। स्तुत्यादिना राज्ञां बोधयिता पुरुषविशेष इत्यर्थः। ( तेन व्यवहरतीत्यर्थे ताद्धितष्ठक् प्रत्ययः )।

एवमचिरयोगोत्पादकस्याऽपि वियोगस्याऽसहनशीलाया मलयवत्याः सव्रीडकटाक्षपातद्वारैव नायकमनो निजायत्तीकृत्य गमनोत्तरं सूचनीयमर्थं चूलिकारूपेण सूचयति—वृष्ट्येति। इह अस्मिन् मलये ( तन्नाम्नि पर्वते ) पिष्टातकस्य पटवासकस्य वसनवासनोत्पादकद्रव्यविशेषस्येत्यर्थः ( पिष्टशब्दोपपदादततेः कर्मण्यणन्तात्स्वार्थिककन्नन्तः पिष्टातकशब्दः )—( पिष्टातः पटवासक इत्यमरः )। वृष्ट्या वर्षणेन बाहुल्येनेति यावत्। मेरुतुल्यां सुमेरुसदृशीं द्युतिं कान्तिं दधानो बिभ्राणः ( धारयन् ) सर्वत्राऽरुणिमो ( लालिमो ) दयाद्विति भावः। सद्यस्तदानीमेव सिन्दूरधूलिभिः उपर्युपरिक्षिप्तैः सिन्दूरचूर्णैरित्यर्थः। कृता सम्पादिता दिवससमारम्भे प्रातःकालेऽपि सन्ध्यातपस्य सायंकालिकार्कमयूखस्य श्रीः शोभा येन तादृशः। ( अथवा ) सद्यः सिन्दूरधूलिभिः कृता दिवससमारम्भस्य सन्ध्या-

उद्गीतैरङ्गनानामरुणमणिरणन्नूपुराऽऽरावहृद्यै-
रुद्वाहस्नानवेलां कथयति भवतः सिद्धये सिद्धलोकः ॥१२॥

विदूषकः—( आकर्ण्य ) ( क ) भो वअस्स ! दिट्ठिआ आगदं ण्हवणअं ।

नायकः—( सहर्षम् ) यद्येवं किमिदानीमिह स्थितेन ? आगच्छ, तातं नमस्कृत्य स्नानभूमिमेव गच्छावः ।

---

( क ) भो वयस्य ! दिष्ट्या आगतं स्नपनकम् ।

---

तपस्य च श्रीः शोभा येन तादृशः । पिष्टातकोपरिसिन्दूरविक्षेपणान्मलयाद्रिप्रदेश एव प्रातस्तनार्क-सायन्तनार्ककरश्रियं सम्पादयन्नित्यर्थः । सिद्धलोको देवयोनिविशेषः । अङ्गनानां कल्याणाङ्गवतीनां स्त्रीणामित्यर्थः । अरुणा रक्ता मणयो येषु तेऽरुणमणयः, रणन्तो ध्वनन्तश्च ते नूपुराश्च रणन्नूपुराः, अरुणमणयश्च ते रणन्नूपुराश्च अरुणमणिरणन्नूपुरास्तेषामारावेण झणत्कारशब्देन हृद्यैर्मनोज्ञैः श्रोत्रसुखप्रदैरित्यर्थः । उद्गीतैर्महोत्सवसूचकैरुद्वाहाङ्गभूतैः*गान्धारस्वरेण गायनैरित्यर्थः । भवतस्तव ( जीमूतवाहनस्येति भावः ) सिद्धये शुभोद्वाहसम्पादनार्थम् ( अथवा ) भवतो राजपुत्र्या उभयसम्बन्धिनामस्माकञ्चाऽभीष्टसिद्ध्यर्थमित्यर्थः । उद्वाहस्नानवेलाम् उद्वाहार्थं विवाहार्थं यत् स्नानम् अभिषवस्तस्य वेलां समयमित्यर्थः । कथयति बोधयति । अत्र हि यथावद्वस्तुवर्णनात्स्वभावोक्तिरलङ्कारः । पिष्टातकवर्षणद्वारा सुमेरुनिभकान्तिधारणस्य सिन्दूरधूलीकृतसायन्तनार्ककर-श्रीसम्पादनस्य च सर्वथाऽसम्भवेऽपि सम्भवप्रतिपादनान्निदर्शनालङ्कारश्चेत्यनयोः संसृष्टिः । ( एतेन पिष्टातकवर्षणसिन्दूरधूलीविक्षेपणयोर्बाहुल्यातिशयोऽभिव्यज्यत इत्यलङ्कारेण द्वितीयेन वस्तुध्वनिः । स्रग्धरा वृत्तम् । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम् ॥१२॥

( क ) इत्थमाह्वानसूचनादतिमुदितमना विदूषको नायकम्प्रत्याह—भो वयस्य ! आगतं स्नपनकमिति । स्नपनकम् = स्नानानुगुणं द्रव्यम् । आगतम् = उपस्थितमिव एतद्वचनसूचनादिति भावः ।

हृदयानन्दवर्द्धिनीं विदूषकोक्तिमाकर्ण्य नायको निजात्मानं कृतार्थतास्पदं मन्यमानस्तम्प्रत्याह—सखे ! यद्येवमिति । इदानीम् = साम्प्रतम् । इह =

---

* देवयोनिनां गान्धारस्वरेणैव गानप्रसिद्धिस्तदुक्तं सङ्गीतशास्त्रे—

षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः ।
न तु गान्धारनामानं स लभ्यो देवयोनिभिः ॥ इति ।

अन्योन्यदर्शनकृतः समानरूपानुरागकुलवयसाम् ।
केषाञ्चिदेव मन्ये समागमो भवति पुण्यवताम् ॥१३॥

( इति निष्क्रान्तौ )

इति द्वितीयोऽङ्कः ।

---

अत्र स्थाने । किम् = किमर्थम् । स्थीयते = आस्यते । अस्माभिरिति शेषः। सिद्धेऽभिप्रेतकार्ये नोचितेह स्थितिरस्माकमिति भावः ।

एवमभिलषितपूर्त्याऽतिमोदमानहृदयो नायको निजपरिणयं श्लाघमानः पुनरप्याह—अन्योऽन्यदर्शनेति । रूपञ्च अनुरागश्च कुलञ्च वयश्च रूपानुरागकुलवयांसि तानि समानानि येषां तेषां समानरूपानुरागकुलवयसाम् तुल्याकृतिप्रीतिवंश-दशानामित्यर्थः । केषाञ्चिदेव नतु सर्वेषामित्यर्थः । पुण्यवतां पुरातनैहिकोभयसुकृतिशालिनाम् अन्योऽन्यदर्शनेन परस्परावलोकनेन कृतः सम्पादितः समागमः सम्बन्धो भवति जायते (इति) मन्ये उत्प्रेक्षे (अहमिति शेषः) । एतेनोक्तविधसमागमस्य विरलत्वम्-अपेक्षणीयत्वम् तद्भागित्वेनात्मनोऽतिप्रशंसार्हत्वञ्च सूच्यते । मन्येशब्दसद्भावादुत्प्रेक्षाऽलङ्कारः ।

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः ।

इति दर्पणोक्तेः । आर्यावृत्तम् ॥१३॥

इति निष्क्रान्तौ । एवमात्मनः परिणयार्थं नायकस्तत्सहचरत्वेन विदूषकश्च रङ्गस्थानान्निर्गताविव्यर्थः ।

इति नागानन्दव्याख्यायां पीयूषवर्षिण्यां द्वितीयोऽङ्कः ।

# अथ तृतीयोऽङ्कः ।



( ततः प्रविशति मत्तो विचित्रविह्वलवेशश्चषकहस्तो विटः स्कन्धारोपितसुराभाण्डश्चेटश्च ।

---

अथ नायिकोद्वन्धनावधेर्विप्रलम्भश्रृंगारस्याऽभिधानोत्तरमुद्वाहारम्भकथामात्रेण द्वितीयाऽङ्कम्परिसमाप्याऽवसरप्राप्तसम्भोगश्रृंगारवर्णनाय तृतीयाऽङ्के तदङ्गभूतहास्यरसप्रतिपादनाय विट-चेटयोरनुत्तमपात्रयोः प्रवेशं सूचयति—ततः प्रविशतीत्यादिना । उक्तञ्च हास्यरसलक्षणं यथा—

*विकृताऽऽचारैर्वाक्यैरङ्गविकारैश्च विकृतवेशकृतैः ।
हासयति जनं यस्मात्तस्माज्ज्ञेयो रसो हास्यः ॥
स्त्रीनीचप्रकृतिष्वेष भूयिष्ठं दृश्यते रसः ।

इति । ततस्तदनन्तरं विवाहार्थं नायिका-नायकादिनिखिलपात्रनिष्क्रमणोत्तरमित्यर्थः । मत्तो = मदोन्मत्तः मद्यपानाऽधिक्यादिति भावः, विचित्रः = अनेकवर्णरञ्जितः कौतुकोत्पादक इत्यर्थः, विह्वलः = व्याकुलः—मदाधिक्यादितस्ततो विक्षिप्त इत्यर्थः, वेशः = परिच्छदो यस्य तथाभूतः । तथा चषकं=पानपात्रम् । हस्ते = पाणौ यस्य तादृशः (चषकोऽस्त्री पानपात्रमित्यमरः) । विटो वक्ष्यमाणलक्षणः श्रृंगाररससहायः पात्रविशेषः । स्कन्धारोपितसुराभाण्डः स्कन्धे आरोपितं स्थापितं सुराभाण्डं मद्याधारपात्रं येन यस्य वा तथोक्तः । चेटो वक्ष्यमाणलक्षणलक्षितो नायकस्य श्रृंगारे सहायभूतोऽधमपात्रविशेष इत्यर्थः । प्रविशति ( रंगस्थानमिति शेषः ) ।

उक्तञ्च दर्पणकृता विटस्य लक्षणं यथा—

सम्भोगहीनसम्पद् विटस्तु धूर्तः कलैकदेशज्ञः ।
वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम् ।

---

* विकृताचारैः = दुर्व्यवहारैरित्यर्थः । अङ्गविकारैः अङ्ग विकृतं खञ्ज-कुब्जादिवद्विधायेत्यर्थः ।

विटः—(क)

णिच्चं जो पिवइ सुरं जणस्स पिअसंगमञ्च जो कुणइ ।
अध दे दो अवि देआ वलदेओ कामदेओ अ ॥ १ ॥

( घूर्णन् ) । (ख) सफलं क्खु मे सेहरअस्स जीविदं ।

---

( क ) नित्यं यः पिवति सुरां जनस्य प्रियसङ्गमञ्च यः करोति ।
अथ तौ द्वावपि देवौ बलदेवः कामदेवश्च ॥

( ख ) सफलं खलु मे शेखरकस्य जीवितम् ।

वक्षःस्थले दयिता नीलोत्पलवासिता मुखे मदिरा ।
शीर्षे च शेखरको नित्यमिव चेटिका यस्य ॥

---

इति । तत्रोक्तं चेटस्य लक्षणं यथा—

शृङ्गारेऽस्य सहाया विट-चेट-विदूषकाद्याः स्युः ।
भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ॥

इति ।

तथा शकार-चेटाद्या अधमाः परिकीर्त्तिताः ।

इति च ।

( क ) शृङ्गाररसोद्भवस्याऽपि हास्यरसस्य तत्राऽतिशोभाऽऽधायकत्वा-दङ्गादौ तदाधिक्यं साधयितुकामनया रङ्गस्थानं प्रविष्टयोर्विट-चेटयोरेको विटो हास्यात्मिकां निजविशेषज्ञतां प्रतिपादयितुमाह—नित्यमिति । यः ( पुरुषः ) नित्यं प्रत्यहं सुरां मद्यं पिवति सेवते, अथाऽनन्तरं यश्च ( पुरुषः ) जनस्य लोकस्य ( प्रियस्य—प्रियायाश्चेत्यर्थः ) प्रियसङ्गमं प्रियेण ( जनेन ) सङ्गमं सम्मिलनं करोति साधयति ( अन्तर्भावितण्यर्थोऽत्र करोतिः ) प्रियेण प्रियायाः—प्रियया प्रियस्य च सङ्गमं सम्पादयतीत्यर्थः । तौ पूर्वोक्तौ द्वावपि सुरापि-प्रियसङ्गमकारिणा-वपीत्यर्थः । देवौ देवपदवाच्यौ तदन्ये सामान्या इत्यर्थः । देवपदं विवृणोति—बल-देवः—कामदेवश्चेति । सुराप्रियत्वाद्बलदेवत्वं प्रियसङ्गमकारित्वात्कामदेवत्वं च तयोरस्तीति भावः । तयोर्बलदेवत्व-कामदेवत्वयोर्हेतुभूतयोः सुरापानकर्तृत्व—प्रिय-सङ्गमकारित्वयोर्वाक्यार्थगतत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् ।

हेतोर्वाक्य-पदार्थत्वे काव्यलिङ्गमुदाहृतम् ।

इति दर्पणोक्तवचनात् । कचित् ( पुस्तके ) तृतीयपादे मम तौ द्वावेवेति पाठे मम द्वावेव देवौ मतौ नान्य इत्यर्थस्याऽऽपातत: प्रतीत्याऽर्थापत्तिरलङ्कारः । आर्यावृत्तम् ॥ १ ॥

(ख) सफलं खल्विति । एवार्थकस्याऽत्र खलुशब्दस्य ममेत्यत्राऽन्वयात्

वच्छत्थलम्हि दइआ णीलुप्पलवासिआ मुहे मइरा।
सीसम्मि अ सेहरओ णिच्चं विअ चेड़िआ जस्स ॥ २ ॥

(प्रस्खलन्) (क) अरे! को मं चालेदि? (सहर्षम्) अवस्सं णोमालिआ मं परिहसदि।

चेटः—(ख) भट्टक! ण अ दाव सा अज्जवि इहागच्छदि।

विटः—(सरोषम्) (ग) पढ़मपहरे ज्जेव्व मलअवदीए विआह-

---

(क) अरे! को मां चालयति? अवश्यं नवमालिका मां परिहसति।

(ख) भर्त्तः! न च तावत् साऽद्यापीहागच्छति।

(ग) प्रथमप्रहर एव मलयवत्या विवाहमङ्गलं निर्वृत्तम्। तत् कथं सेदानीं प्रभातेऽपि नागच्छति? अथवा विवाहमहोत्सवे सर्व एव प्रियप्रणयिनी-

---

ममैव नान्यस्येत्यर्थः। शेखरकस्य = तन्नामधेयस्य। जीवितम् = जीवनम्। सफलम् = सार्थकम्। शेखरकनाम्नो मम एव जीवनं सफलं नान्यस्येति भावः। (अथवा) सन्दर्भगतशेखरकस्येति पदस्यौद्धत्यगर्भवचनत्वेन शेखरकस्य सर्वेषां शिरोभूषण-भूतस्य मम एव जीवितं सफलमित्यर्थः।

जीवितस्य साफल्ये हेतुमाह—वक्षःस्थल इति। यस्य (पुरुषस्य) (शेखर-कस्येत्यन्तराशयः)। वक्षःस्थले हृदयप्रदेशे दयिता प्रिया नित्यं प्रतिदिनं (सन्नि-हितेति शेषः)। च पुनः यस्य (पुरुषस्य) मुखे नीलोत्पलवासिता नीलोत्पलेन नीलकमलेन वासिता वासनायुक्ता मदिरा मद्यं च नित्यं चेटिकेव (सन्निहिता) स शेखरकः शीर्षे शिरशि (सर्वेषामिति शेषः)—(वर्तत इति क्रियाशेषः)। शेखर-कनामाऽहं सकललोकाऽपेक्षयोत्कृष्टः सुखी चाऽस्मीति सारार्थः। शेखरकस्य सर्वा-पेक्षयोत्कृष्टत्वे सुखित्वे च पूर्वार्द्धोपात्तस्य हेतोर्वाक्यार्थगतत्वाद्वाक्यार्थहेतुकं काव्य-लिङ्गमलङ्कारः। आर्या वृत्तम् ॥२॥

(क) प्रस्खलन्निति। प्रस्खलन् = स्वस्थानादपसरन्। मदावेगादिति भावः। (प्रपूर्वात् स्खल सञ्चलनेऽस्माच्छत्रन्तः प्रस्खलन् शब्दः)। अरे = नीचार्थबोधकमिदं सम्बोधनम्। चालयति = कम्पयति। (हेतुमण्ण्यन्तस्य चल सञ्चलनेऽस्य धातो रूपम्)। नवमालिका = तन्नाम्नी काचिच्चेटिका। परिहसति = हास्यं करोतीत्यर्थः।

(ख) मदविकृतचेतसो विटस्य वचनमाकर्ण्य चेटस्तम्प्रत्याह—भर्त्त इति। तावच्छब्दोऽत्र वाक्यालङ्कारे। सा = नवमालिका। अद्यापि = इदानीमपि।

(ग) चेटप्रतिपादितं नवमालिकाऽनागमनसूचकं वचो निशम्य रुष्टो विटः आह—प्रथमप्रहर एवेति। प्रथमप्रहरे = अनन्तरातीतयामे निशारम्भ एवेति यावत्।

मङ्गलं णिव्वुत्तं। ता कीस सा दाणीं पभादे वि णागच्छदि ? ( विचिन्त्य सहर्षम् ) अहवा विआहमहोस्सवे सव्वो ज्जेव्व पिअपणइणीजणसणाहो सिद्धविज्जाहरलोओ कुसुमाअरुज्जाणे आपाणअसोक्खमणुभविस्सदित्ति तक्केमि, तहिं ज्जव्व णोमालिआ मं अवेक्खमाणा चिट्ठदि, ता तहिं ज्जेव्व गमिस्सं। कीरिसो णोमालिआए विणा सेहरओ।

( प्रस्खलन्निष्क्रमितुमीहते )।

चेटः—( क ) एदु एदु भट्टके। एदं कुसुमाअरुज्जाणं। ता पविसदु भट्टके। ( उभौ प्रवेशं नाटयतः )।

( ततः प्रविशति स्कन्धन्यस्तवस्त्रयुगलो विदूषकः )।

---

जनसनाथः सिद्धविद्याधरलोकः कुसुमाकरोद्याने आपानसौख्यमनुभविष्यतीति तर्कयामि, तत्रैव नवमालिका मामपेक्षमाणा तिष्ठति; तत्तत्रैव गमिष्यामि। कीदृशो नवमालिकया विना शेखरकः ?

(क) एतु एतु भर्त्ता। एतत् कुसुमाकरोद्यानम्। तत् प्रविशतु भर्त्ता।

---

विवाहमङ्गलम् = विवाहरूपमङ्गलकार्यमित्यर्थः। निर्वृत्तम् = सम्पन्नम्। प्रियप्रणयिजनसनाथः = प्रणयी चासौ जनः प्रणयिजनः प्रियश्चासौ प्रणयिजनः प्रियप्रणयिजनस्तेन सनाथः सहित इत्यर्थः। कुसुमाकरोद्याने = पुष्पवाटिकायाम्। आपानकसौख्यम् = मद्यपानजन्यसुखम्। अनुभविष्यति = लप्स्यते। तत्रैव = कुसुमाकरोद्यान एव। माम्-अपेक्षमाणा = मदागमनकांक्षिणी। कीदृशो नवमालिकया विना शेखरकः = नवमालिकां विना शेखरको नैव शोभत इत्यर्थः। नवमालिकानाम्नीं चेटीम्विना शेखरकोऽहं विटो नैव शोभां धारयामीति भावः। ( पक्षान्तरे ) नवमालिकाकुसुमविशेषः। शेखरको मस्तकालङ्करणमिति यावत्। तथा च नवमालिकाख्यकुसुमविशेषमन्तरा चूडा नोत्तमां शोभां धारयतीत्यर्थः।

प्रस्खलन् = स्थानाच्च्यवन्। निष्क्रमितुम् = निर्गन्तुम्। ईहते = चेष्टते वाञ्छतीति यावत्।

(क) एतत् = पुरोविद्यमानम्। कुसुमाकरोद्यानम् = पुष्पवाटिका। एतेनाऽतीतवृत्तान्तं सूचितम्।

स्कन्धन्यस्तवस्त्रयुगलः = स्कन्धे ग्रीवाधोभागे न्यस्तं धृतं स्थापितमिति यावत् वस्त्रयुगलं वासोयुगं येन यस्य वा सः।

विदूषकः—(क) संपुण्णा मणोरहा पिअवअस्सस्स। सुदं क्खु मए वि पिअवअस्सो कुसुमाअरुज्जाणं गमिस्सदि त्ति। ता जाव तहिं ज्जेव्व गमिस्सं। (परिक्रम्यावलोक्य च) इदं कुसुमाअरुज्जाणं, जाव पविशामि इदं। (प्रविश्य भ्रमरबाधां नाटयन्) अरे! कीस उण दुट्ठम-हुअरा मं ज्जेव्व अभिभवंति! (आत्मानमाघ्राय) भोदु जाणिदं, जं तं मलअवदीवंधुअणेण जामातुअस्स बअस्सो त्ति कदुअ सबहुमाणं वण्णकेहिं विचित्तिदोम्हि। संताणकुसुमसेहरअं च मम सीसे पिणद्धं। सो क्खु एसो अच्चाअरो अणत्थीभूदो। किं दाणिं एत्थ करइस्सं? अहवा एदेण

---

(क) सम्पूर्णा मनोरथाः प्रियवयस्यस्य। श्रुतं खलु मयाऽपि प्रियवयस्यः कुसुमाकरोद्यानं गमिष्यतीति। तद्यावत् तत्रैव गमिष्यामि। इदं कुसुमाकरोद्यानं, यावत् प्रविशामीदम्। अरे! कथं पुनर्दुष्टमधुकरा मामेवाभिभवन्ति। भवतु ज्ञातं, यत् तन्मलयवतीबन्धुजनेन जामातुर्वयस्य इति कृत्वा सबहुमानं वर्णकैर्विचित्रितो-ऽस्मि। सन्तानकुसुमशेखरकञ्च मम शीर्षे पिनद्धम्। स खलु एषोऽत्यादरोऽनर्थी-भूतः। किमिदानीमत्र करिष्यामि? अथवा एतेनैव मलयवतीसकाशाल्लब्धेन रक्तांशुकयुगलेन स्त्रीवेशं विधाय उत्तरीयकृतावगुण्ठनो गमिष्यामि। प्रेक्षे तावत् किं दास्याः पुत्रा मधुकराः करिष्यन्ति।

---

(क) सम्पूर्णाः = सिद्धाः। प्रियवयस्यस्य = प्रियमित्रस्य। मयाऽपि = अपिशब्दोऽत्र निश्चये। प्रियवयस्यः = प्रियमित्रम्। कुसुमाकरोद्यानम् = पुष्पवाटि-काम्। इदम् = पुरोविद्यमानम्। कुसुमाकरोद्यानम् = पुष्पवाटिका। इदं प्रवि-शामि = अस्मिन् प्रविशामीत्यर्थः। (इदमित्यस्य कर्तुरिति कर्मत्वम्)।

भ्रमरबाधाम् = भ्रमरकृतपीडाम्। नाटयन् = प्रदर्शयन् = अभिनयन्निति यावत्। (एतेन स्वावस्थाप्रकाश्यते)। अभिभवन्ति = तिरस्कुर्वन्ति। वयस्यः = मित्रम् तुल्यवयस्क इति यावत्। वर्णकैः = अङ्गरागैः—कुङ्कुमादिरञ्जनद्रव्यैरिति यावत्। (विलेपनाऽऽधिक्यद्योतनाय बहुवचनम्)। सन्तानः = कल्पवृक्षः—

पञ्चैते देवतरवो मन्दारः पारिजातकः।
सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्॥

इत्यमरः। तस्य कुसुमं पुष्पं तेन शेखरकं शिरोमाल्यम् शीर्षे मस्तके पिनद्धम् अवनद्धम्। (अपिपूर्वकान्नह्यतेः क्तः—भागुरिमतेऽकारलोपः)। तदुक्तम्—

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।

ज्जेव्व मलअवदीसआसादो लद्धेण रत्तंसुअजुअलेण इत्थिअवेसं विहिअ उत्तरीअकिदावगुण्ठणो गमिस्सं । पेक्खामि दाव किं दासीए पुत्ता महुअरा करइस्संति । ( तथा करोति ) ।

विटः—( निरूप्य सहर्षम् ) ( क ) अरे चेड़ा ! ( अङ्गुल्या निर्दिश्य सहासम् ) एसा क्खु णोमालिआ आअदा । मं पेक्खिअ चिरस्स आअदो त्ति कुविदा अवगुण्ठणं कदुअ अण्णदो गच्छदि । ता कण्ठे गेण्हिअ पसादेमि णं । ( सहसोपसृत्य कण्ठे गृहीत्वा मुखे ताम्बूलं दातुमिच्छति ) ।

विदूषकः—( मद्यगन्धं सूचयन् नासिकां गृहीत्वा पराङ्मुखः स्थित्वा ) (ख) कहं एक्काणं महुअराणं सआसादो परिब्भट्टो दाणिं अण्णस्स दुट्टमहुअरस्स मुहे पड़िदोम्हि ।

---

(क) अरे चेट ! एषा खलु नवमालिका आगता । मां प्रेक्ष्य चिरस्यागत इति कुपिताऽवगुण्ठनं कृत्वाऽन्यतो गच्छति । तत् कण्ठे गृहीत्वा प्रसादयाम्येनाम् ।

(ख) कथमेकेषां मधुकराणां सकाशात् परिभ्रष्ट इदानीमन्यस्य दुष्टमधुकरस्य मुखे पतितोऽस्मि ।

---

इति । एषोऽत्यादरः = अङ्गरागविलेपनात्मकः—सन्तानकुसुमकृतशिरोऽलङ्करणात्मकश्चेत्यर्थः । अनर्थीभूतः = भ्रमरबाधाहेतुभूतत्वादनिष्टरूपेण परिणत इत्यर्थः । रक्तांशुकयुगलेन = रक्ते लोहिते ये अंशुके सूक्ष्मवस्त्रे तयोर्युगलं युग्मं तेन, लोहितसूक्ष्मवस्त्रयुग्मेनेत्यर्थः । उत्तरीयकृतावगुण्ठनः = उत्तरीयेण प्रावरणवसनेन कृतं सम्पादितम् अवगुण्ठनं मुखावरणं येन तथाभूतः । ( एतद्धि विदूषकस्य स्त्रीव वस्त्रपरिधानं विटस्य भ्रान्तिसम्पादनार्थम्—वेशनर्मप्रकारश्च ) ।

(क) कुपिताऽवगुण्ठनं कृत्वा के अवगुण्ठनमित्यस्य मुखावरणमित्यर्थः । मां माऽसौ द्राक्षीदिति हेतोः कोपेनाऽवगुण्ठनं विधायेत्यर्थः । कण्ठे गृहीत्वा मुखे ताम्बूलं दातुमिच्छति = कण्ठे ग्रहणं मुखे ताम्बूलदानेच्छा च नीचाऽनुसरणमार्गः । ( चेष्टानर्मप्रकारश्चायम् ) ।

(ख) एकेषाम् = मुख्यानाम्—एकविधानां वा । मधुकराणाम् = सत्यभ्रमराणाम् । अन्यस्य = अन्यविधस्य । दुष्टमधुकरस्य = दुष्टस्य मद्यपाणेरित्यर्थः । मधु मद्यं करे यस्य स मधुकरः दुष्टश्चासौ मधुकरो दुष्टमधुकरस्तस्य तथोक्तस्य ! निरन्तरमद्यासक्ततया मधुकरेति विटस्य नाम ।

विटः—(क) कहं कोवेण परम्मुही भुदा ? ( प्रणामं कुर्वन् विदूषकस्य चरणमात्मनः शिरसि कृत्वा ) पसीद णोमालिए ! पसीद ।

( ततः प्रविशति चेटी ) ।

चेटी—(ख) आणत्तम्हि भट्टिदारिआए,—"हञ्जे णोमालिए ! कुसुमाअरुज्जाणं गदुअ उज्जाणपालिअं पल्लविअं भणाहि । अज्ज सविसेसं तमालवीहिअं सज्जीकरेहि । मलअवदीसहिदेण जामाउकेण तत्थ गन्तव्वं" त्ति । आणत्ता मए पल्लविआ । ता जाव रअणीविरहवड्ढिदुक्कण्ठं पिअवअस्सअं सेहरअं अण्णेसामि । ( दृष्ट्वा ) एसो सेहरओ । ( सरोषम् ) कहं अण्णं कम्पि इत्थिअं पसादेदि ! ता इह ट्ठिदा ज्जेव्व जाणामि का एसेत्ति ।

विटः—( सहर्षम् )

---

(क) कथं कोपेन पराङ्मुखीभूता ? प्रसीद नवमालिके ! प्रसीद ।

(ख) आज्ञप्ताऽस्मि भर्तृदारिकया,—"हञ्जे नवमालिके ! कुसुमाकरोद्यानं गत्वोद्यानपालिकां पल्लविकां भण । अद्य सविशेषं तमालवीथिकां सज्जीकुरु । मलयवतीसहितेन जामात्रा तत्र गन्तव्यम्" इति । आज्ञप्ता मया पल्लविका । तद् यावत् रजनीविरहवर्द्धितोत्कण्ठं प्रियवयस्यं शेखरकमन्विष्यामि । एष शेखरकः । कथमन्यां कामपि स्त्रियं प्रसादयति ! तदिह स्थितैव जानामि कैषेति ।

---

(क) पराङ्मुखीभूता = परावृत्तानना ।

(ख) कुसुमाकरोद्यानम् = पुष्पवाटिकाम् । उद्यानपालिकाम् = आरामरक्षिणीम् । सविशेषम् = विशेषेण बाहुल्येन सह वर्तमानं यथा तथेत्यर्थः । (पूर्वाऽपेक्षयेति शेषः) । तमालवीथिकाम् = तमालवृक्षाऽऽवेष्टितगृहविशेषम्—तमालवृक्षपङ्क्तिमध्यवर्तिमार्गविशेषम्वा । (वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरवर्त्मनोरिति मेदिनी) जामात्रा = जीमूतवाहनेन । रजनीविरहवर्द्धितोत्कण्ठम् = रजन्यां रात्रौ विरहेण मद्वियोगेन वर्द्धिता समृद्धा उत्कण्ठा वाञ्छा यस्य तमित्यर्थः । (एतेनाऽप्याऽऽसगमनोदन्तसूचनम् ) ।

(क) अथ—

सामभेदोऽथ दानं च नत्युपेक्षे रसान्तरम् ।
तद्भङ्गाय पतिः कुर्य्यात् षडुपायानिति क्रमात् ॥

इति दर्पणोक्त्या नत्यात्मक-चतुर्थमानभङ्गप्रकारद्वारा नवमालिकाबुद्ध्या विदूषकं स्त्रीरूपधारिणं विटः प्रसादयितुमाह—हरिहरेति । हे नवमालिके ! गर्वितः साभि-

(क) हरिहरपिदामहाणं पि गव्बिदो जो ण जाणइ णमिदुं ।
सो सेहरओ चलणेसु तुज्झ णोमालिए ! पड़इ ॥ ३ ॥

विदूषकः—(ख) दासीए पुत्ता ! मत्तबालआ ! कुदो एत्थ णोमालिआ ?

चेटी—( निरूप्य सस्मितम् ) (ग) कधं मं त्ति करिअ मदपरबसेण सेहरएण अज्जअत्तेओ पसादीअदि ? ता जाव अलीअं कोबं करिअ दुबेबि एदे परिहसिस्सं ।

---

(क) हरि-हर-पितामहानामपि गर्वितो यो न जानाति नन्तुम् ।
स शेखरकश्चरणेषु तव नवमालिके ! पतति ॥

(ख) दास्याः पुत्र ! मत्तबालक ! कुतोऽत्र नवमालिका ?

(ग) कथं मामिति कृत्वा मदपरवशेन शेखरकेण आर्य्यात्रेयः प्रसाद्यते ? तद् यावदलीकं कोपं कृत्वा द्वावप्येतौ परिहसिष्यामि ।

---

मानो यः शेखरकः (अहमिति भावः) हरि-हर-पितामहानाम् विष्णु-शिव-ब्रह्मणाम् (कर्मणः शेषत्वविवक्षायां षष्ठी) हरि-हर-पितामहानित्यर्थः । अपीति निश्चये। नन्तुम् नमस्कर्त्तुं न जानाति न ज्ञायते (तान् न नमतीति भावः) । स ( शेखरकः ) तव चरणेषु तव चरणावच्छेदेनेत्यर्थः ( अवच्छेदो हि सप्तम्यर्थो बहुत्वञ्चादरसूचकम् ) पतति ( अथवा ) तव चरणेषु पतति = स्वशिरस्तत्र संयोजयतीत्यर्थः हर्य्यादेरप्यनमनशीलोऽहं ततोऽधिकां त्वां मन्येऽतोऽचिरं प्रसन्नया त्वया भवितव्यमिति भावः । व्यतिरेकोऽत्राऽलङ्कारः । तदुक्तं दर्पणे—

आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा ।
व्यतिरेक एक, उक्ते हेतौ नोक्ते स च द्विधा ।

इति । आर्यावृत्तम् ॥३॥

(ख) आत्मप्रसादनपरं विटं विलोक्य परिहासगर्भमलीककोपं प्रदर्शयन् विदूषकस्तम्प्रत्याह—दास्याः पुत्र ! इत्यादि । मत्तबालक = मदान्धशिशो ! सम्बोधनमिदं कोपेन तिरस्कारोक्तिः ।

(ग) मदपरवशेन = मदपरतन्त्रेण मत्तेनेति यावत् । आत्रेयः = विदूषकः । अलीकम् = मिथ्या ।

चेटः—( चेटीं दृष्ट्वा शेखरकं हस्तेन चालयन् ) (क) भट्टका ! मुञ्च एदं । ण भोदि एसा णोमालिआ । एसा उण रोसारत्तेहिं लोअणेहिं पेक्खंती आअदा ।

चेटी—( उपसृत्य ) (ख) सेहरअ ! का उण एसा पसादीअदि ।

विदूषकः—( अवगुण्ठनमवतार्य्य ) ( ग ) भोदि ! कोवि वम्हणो अहं मन्दभाअधेअपउत्तो ।

विटः—( विदूषकं निरूप्य ) ( घ ) अरे कविलमंकड़ा ! तुमंपि सेहरअं पदारेसि । अरे चेड़ा ! गेण्ह एदं, जाव णोमालिअं पसादेमि ।

चेटः—(ङ) जं भट्टके आणवेदि ।

विटः—( विदूषकं विमुच्य चेट्याः पादयोः पतति ) (च) पसीद णोमालिए ! पसीद ।

---

(क) भर्त्तः ! मुञ्चैनम् । न भवत्येषा नवमालिका । एषा पुना रोषारक्ताभ्यां लोचनाभ्यां प्रेक्षमाणा आगता ।

(ख) शेखरक ! का पुनरेषा प्रसाद्यते ?

(ग) भवति ! कोऽपि ब्राह्मणोऽहं मन्दभागधेयप्रयुक्तः ।

(घ) अरे कपिलमर्कट ! त्वमपि शेखरकं प्रतारयसि ? अरे चेट ! गृहाणैतम्, यावत् नवमालिकां प्रसादयामि ।

(ङ) यत् भर्त्ता आज्ञापयति ।

(च) प्रसीद नवमालिके ! प्रसीद ।

---

(क) चालयन् = गन्तुं प्रेरयन् । एषा स्त्रीरूपधारिणी-पुरोविद्यमानेत्यर्थः । नवमालिका = तन्नाम्नी तव पत्नीत्यर्थः । न भवति नाऽस्तीत्यर्थः । एषा = नवमालिका । पुनः = किन्तु । रोषारक्ताभ्याम् = रोषेण क्रोधेन आरक्ताभ्यां लोहिताभ्यामित्यर्थः । प्रेक्षमाणा = पश्यन्ती । ( त्वामिति शेषः ) ।

(ग) विटम्प्रति चेट्युक्तिमाकर्ण्यावगुण्ठनापनयनपूर्वकमुत्तरयति विदूषकः— भवति ! कोऽपीति । अवगुण्ठनम् = मुखावरणवस्त्रम् । अवतार्य = अपनीय । भवतीति चेटीम्प्रति सम्बोधनम् । मन्दभागधेयप्रयुक्तः = मन्दं च तद्भागधेयं मन्दभागधेयं तेन प्रयुक्तः । मन्देन भाग्येन प्रेरित इत्यर्थः ।

(घ) चेटीकृतपूर्वपक्षमुत्तरयन्तं विदूषकं वचसा विज्ञाय सकोपो विटस्तमाक्षिपति—अरे कपिलमर्कट ! इति । सर्वगात्रेषु वर्णकद्रव्यविलेपनात्कपिलवर्णत्वस्य स्पष्टतया युक्तमेवोक्तसम्बोधनपदम् । प्रतारयसि = वञ्चयसि ।

विदूषकः—( आत्मगतम् ) ( क ) एसो मे अबक्कमिदुं अवसरो ( पलायितुमीहते )

चेटः—( विदूषकं यज्ञोपवीते गृह्णाति । यज्ञोपवीतं त्रुट्यति ) ( ख ) कहिं कहिं कबिलमंकड़ा ! पलाअसि ? (तदुत्तरीयेणैव गलके बद्ध्वा कर्षति)।

विदूषकः—( ग ) भोदि णोमालिए ! पसीद, मुञ्चावेहि मं ।

चेटी—( विहस्य ) ( घ ) जइ भूमीए सीसं णिवेसिअ पादेसु मे पड़सि ।

विदूषकः—( सरोषं सकम्पञ्च ) ( ङ ) भो ! गन्धव्वराअमित्तो बम्हणो भविअ दासीए धीआए पादेसु पड़इस्सं ?

चेटी—( अङ्गुल्या तर्जयन्ती सस्मितम् ) ( च ) दाणिं पाड़इस्सं ।

---

(क) एष मेऽपक्रमितुमवसरः ।

(ख) क्व क्व कपिलमर्कट ! पलायसे ?

(ग) भवति नवमालिके ! प्रसीद, मोचय माम् ।

(घ) यदि भूमौ शीर्षं निवेश्य पादयोः मे पतसि ।

(ङ) भोः ! गन्धर्वराजमित्रं ब्राह्मणो भूत्वा दास्याः पुत्र्याः पादयोः पतिष्यामि!

(च) इदानीं पातयिष्यामि । शेखरक ! उत्तिष्ठ । प्रसन्ना तेऽहम् । एष पुनः र्जामातुः प्रियवयस्यस्त्वया खलीकृतः । एवञ्च श्रुत्वा कदाऽपि भर्त्ता मित्रावसुस्तुभ्यं कुप्यति । तदादरेण सम्मानयैनम् ।

---

(क) अपक्रमितुमम् = पलायितुम् । अवसरः = समयः । ईहते = चेष्टते । यज्ञोपवीते = औपश्लेषिकाऽऽधारसप्तम्या तदेकदेश इत्यर्थः । त्रुट्यति = छिनत्ति । गलके = कण्ठे ।

(घ) चेटी विदूषकस्य कातरोक्तिमाकर्ण्य सञ्जातदयया मोचयितुमभिलषन्ती परिहासपूर्वकं तम्प्रत्याह—यदि भूमाविति । भूमौ = पृथिव्याम् । शीर्षम् = मस्तकम् । निवेश्य = संस्थाप्य ।

(ङ) प्रागल्भ्यातिशयसूचकं चेटिकावचो निशम्य जाताधिक-कोप-कम्पो विदूषकस्तामधिक्षिपति—भोः ! गन्धर्वराजमित्रमित्यादिना । (भोः पदाग्रे नवमालिके इति पदशेषः) । गन्धर्वराजमित्रम् = गन्धर्वाणां राजा गन्धर्वराजः ( राजाहः सखिभ्यष्टजिति टच् ) । तस्य मित्रम् जीमूतवाहनसुहृदित्यर्थः ।

(च) वैदूषिकीं सभर्त्सनाऽधिक्षेपोक्तिमाकर्ण्य तदपराधितया भर्तुरनिष्ट-

सेहरअ! उट्ठेहि, पसएणा दे अहं। (कण्ठे गृह्णाति) एसो उण जामाउकस्स पिअवअस्सो तुए खलीकिदो। एव्वश्च सुणिअ कदावि भट्टा मित्तावसू तव कुप्पइ। ता आदरेण सम्माणेहि णं।

विटः—(क) जं णोमालिआ आणवेदि। (विदूषकं कण्ठे गृहीत्वा) अज्ज! तुमं मए सम्बन्धिओ त्ति करिअ परिहसिदो। (घूर्णन्) किं सच्चकं ज्जेव्व सेहरओ! तुए किदो परिहासो? (उत्तरीयं वर्तुलीकृत्यासनं ददाति) इध उवविसदु सम्वन्धिओ।

विदूषकः—(स्वगतम्) (ख) दिट्ठिआ अवगदो विअ से मदावेगो (उपविशति)।

---

(क) यन्नवमालिका आज्ञापयति। आर्य्य! त्वं मया सम्बन्धीति कृत्वा परिहसितः। किं सत्यमेव शेखरक! त्वया कृतः परिहासः? इह उपविशतु सम्बन्धी।

(ख) दिष्ट्यापगत इवास्य मदावेगः।

---

माशङ्कमाना चेटी विदूषकाऽनुनयाय परिहासमिश्रितं वचस्तं प्रत्यङ्गुल्या तर्जयन्ती स्मितमुखी प्राह इदानीं पातयिष्यामीति। स्वामिनं च प्रत्याह—शेखरकेत्यादि। अङ्गुल्या = तर्जनीसमाख्ययेत्यर्थः। तर्जयन्ती = भर्त्सयन्ती। (हेतुमण्ण्यन्तात् तर्ज भर्त्सने धातोः शतृप्रत्यये ङीप् च)। एषः = पुरोविद्यमानः—आत्रेयनामा-विदूषक इत्यर्थः। जामातुः = जीमूतवाहनस्य। प्रियवयस्यः = प्रियमित्रम्। खलीकृतः = भर्त्सनादिना निराकृतः—अपकृत इति यावत्। एवञ्च = जामातुः प्रियवयस्याऽपकारञ्चेत्यर्थः तुभ्यं कुप्यति = त्वयि क्रुद्धो भविष्यतीत्यर्थः।

तत् = तस्माद्धेतोः। आदरेण = सत्कारेण। सम्मानय = जय। बहुशस्त्वयाऽपहसितो विदूषको मित्रावसवे तव दुर्व्यवहारं निवेद्य कदाचिदनिष्टं साधयेदतो बह्वादरेण सम्मानयेममिति भावः।

(क) सम्बन्धी = सम्बन्धिनो जामातुः प्रियमित्रम्। इति कृत्वा = इत्येवं बुद्ध्वा। घूर्णन् = मदावेगेनेति शेषः। किं सत्यमेव शेखरकेत्यादि। (एतेन मत्ततया स्वकृतपरिहासमपि न जानातीति विटस्य भ्रान्तिः सूच्यते)।

(ख) विटस्य परिहासोत्तरमादरातिशयमालोक्य विदूषको मनसि विचारयति—दिष्ट्येति। दिष्ट्या = भाग्येन। अपगत इव = दूरीभूत इव। मदावेगः = मदवृद्धिः।

विटः—(क) णोमालिए ! उबबिंस तुमंपि एदस्स पासे, जेण दुवेबि तुम्हे समं ज्जेव्व सम्माणइस्सं ।

चेटी—( विहस्योपविशति ) ।

विटः—( चपकमादाय ) ( ख ) अरे चेड़ा ! सुभरिदं क्खु एदं चसअं करेहि सुराए ।

चेटः—( नाट्येन चषकभरणं करोति ) ।

विटः–(स्वशिरः शेखरात् पुष्पाणि गृहीत्वा चषके विन्यस्य जानुभ्यां स्थित्वा नवमालिकाया उपनयति ) । (ग) णोमालिए ! चाक्खअ देहि एदं एदस्स ।

चेटी—( सस्मितम् ) (घ) जं सेहरओ भणादि । ( तथा कृत्वा विटस्यार्पयति । )

विटः—( विदूषकस्य चषकमर्पयति ) ( ङ ) एदं णोमालिआमुह-

---

(क) नवमालिके ! उपविश त्वमपि एतस्य पार्श्वे, येन द्वावपि युवाम् सममेव सम्मानयिष्यामि ।

(ख) अरे चेट ! सुभृतं (सुपूरितं) खल्वेतं चषकं कुरु सुरया ।

(ग) नवमालिके ! आस्वाद्य देह्येतमेतस्य ।

(घ) यत शेखरको भणति ।

(ङ) एतत नवमालिकामुखसंसर्गसविशेषवासितरसं शेखरकादन्येन केनापि नास्वादितपूर्वं, तत् पिबैतत् । किं ते अतोऽप्यपरं सम्मानं करिष्यामि ?

---

(क) सममेव = एकदैव । सम्मानयिष्यामि = बह्वादरेण पूजयिष्यामि ।

चषकम् = पानपात्रम् । सुरया = मद्येन ।

नाट्येन = नटोचितव्यापारेण—अभिनयेनेति यावत् । चषकभरणम् = पानपात्रपूरणम् ।

(ग) स्वशिरःशेखरात् = आत्मशिरोऽलङ्करणमाल्यात् । उपनयति = समर्पयति । आस्वाद्य = पीत्वा । एतम् = चषकम् । एतस्य = विदूषकस्य । (सम्बन्धत्वेन विवक्षायां षष्ठी ) । विदूषकायेत्यर्थः ।

(ङ) विदूषकस्य = विदूषकायेत्यर्थः । (इहापि सम्प्रदानस्य सम्बन्धत्वेन विवक्षायां षष्ठी) । चषकम् = सुरापूरितपानपात्रम् । अर्पयति = ददाति । एतत् = चषकस्थमद्यम् । नवमालिकामुखसंसर्गसविशेषवासितरसम् = नवमालिकायाश्चेटिकाया मुखसंसर्गेण वदनसम्पर्केण सविशेषं सातिशयं यथा तथा वासितः सुरभीकृतः रसः स्वादो यस्य तदित्यर्थः । शेखरकादन्येन = शेखरकातिरिक्तेन । अना-

संसग्गसविसेसबाधिअरसं सेहरआअण्णेण केणवि अणासादिदपुरुब्वं, ता पिवेहि एदं। किं दे अदोवि अवरं सम्माणं करइस्सं?

विदूषकः—( सवैलक्ष्यस्मितं कृत्वा ) (क) सेहरअ! वम्हणो क्खु अहं।

विटः—(ख) जदि तुमं बम्हणो, ता कहिं दे णवसुत्तं?

विदूषकः—(ग) तं क्खु मे इमिणा चेडेण कट्टीअमाणं छिण्णं।

चेटी—( विहस्य ) (घ) जइ एव्वं, ता वेदक्खरांइंपि दाव कतिवि उदाहर।

---

(क) शेखरक! ब्राह्मणः खल्वहम्।
(ख) यदि त्वं ब्राह्मणः, तत् क्व ते नवसूत्रम्?
(ग) तत् खलु मेऽनेन चेटेन कृष्यमाणं छिन्नम्।
(घ) यद्येवं, तद्वेदाक्षराण्यपि तावत् कत्यपि उदाहर।

---

स्वादितपूर्वम् = पूर्वमनास्वादितमित्यर्थः। अतोऽपि = अस्मादपि। अपरम् = अन्यत्। सम्मानम् = सत्कारम्-पूजामिति यावत्।

(क) चेटिकोच्छिष्टमद्यपानादपि निन्दनीयदुर्व्यापारं कर्तुमिच्छन्तं विटम्प्रति विदूषकः प्राह—शेखरक! ब्राह्मणः खल्वहमिति। ब्राह्मणः यज्ञसूत्रधारी।

आत्मानं ब्राह्मणं वदन्तं विदूषकम्प्रति विटः पृच्छति-यदि त्वमिति। नवसूत्रम् = नवगुणित-यज्ञसूत्रमित्यर्थः।

उक्तञ्च यज्ञसूत्रलक्षणं कालिकापुराणीयतुर्याध्याये यथा—

उद्ध्र्वन्तु त्रिवृतं सूत्रं सधवानिर्मितं शनैः।
तन्तुत्रयमधोवृत्तं यज्ञसूत्रं विदुर्बुधाः॥
त्रिगुणं तद्ग्रन्थियुक्तं वेदप्रवरसम्मितम्।
शिरोधरान्नाभिमध्यात् पृष्ठार्धपरिमाणकम्॥

इति। यज्ञसूत्रस्य नवतन्तुत्वे देवलवाक्यमपि प्रमाणं तद्यथा—

यज्ञोपवीतं कुर्वीत सूत्राणि नवतन्तुभिः।
एकेन ग्रन्थिना तन्तुर्द्विगुणस्त्रिगुणोऽथवा॥

इति। तन्तुषट्कस्यापि यज्ञसूत्रत्वमिति पैठीनसिः।

छिन्नम् = त्रुटितम्।

वेदाक्षराणि = वेदवाक्यानीत्यर्थः। कत्यपि = कियन्त्यपीत्यर्थः। उदाहर = ब्रूहि।

विदूषकः—(क) भोदि ! इमिणा सीहुगन्धेण कहिं वेदक्खराइं ? अहवा किं मम भोदीए समं बिबादेण ? एसो दे बम्हणो पादेसु पडदि। ( इति पादयोः पतितुमिच्छति )।

चेटी—( हस्ताभ्यां निवार्य्य ) (ख) मा क्खु एव्वं करेदु अज्जो। सेहरअ ! ओसर ओसर, बह्मणो क्खु एसो। ( विदूषकस्य पादयोः पतति )। अज्ज ! ण तुए कुविदव्वं, सम्बन्धिआनुरूबो क्खु एसो मए परिहासो किदो।

विटः—( ग ) अहंपि णं पसादेमि। ( पादयोर्निपत्य ) मरिसेदु मरिसेदु अज्जो, जं मए मदपरबसेण अबरद्धं, जेण अहं णोमालिआए सह आबाणअं गमिस्सं।

विदूषकः—( घ ) मरिसिदं मए, गच्छ तुमहे, अहंपि पिअवअस्सं पेक्खामि।

( निष्क्रान्तो विटश्चेव्या सह चेटश्च )

---

(क) भवति ! अनेन शीधुगन्धेन क्व वेदाक्षराणि ? अथवा किं मम भवत्याः समं विवादेन ? एष ते ब्राह्मणः पादयोः पतति।

(ख) मा खल्वेवं करोत्वार्य्यः। शेखरक ! अपसर अपसर, ब्राह्मणः खल्वेषः। आर्य्य ! न त्वया कोपितव्यं, सम्बन्ध्यनुरूपः खल्वेष मया परिहासः कृतः।

(ग) अहमप्येनं प्रसादयामि। मर्षयतु मर्षयत्वार्य्यः, यत् मया मदपरवशेनाऽपराद्धम्; येनाहं नवमालिकया सह आपानकं गमिष्यामि।

(घ) मर्षितं मया, गच्छतं युवाम्, अहमपि प्रियवयस्यं प्रेक्षे।

---

सीधुगन्धेन=सुरासौरभेण । क्व वेदाक्षराणि = विनष्टानीत्यर्थः। सुरापानरूपाऽनाचारस्थले कथमपि वेदाक्षराणि नोच्चारणीयानीति भावः। पक्षान्तरेण चेटीप्रश्नं समाधत्ते—अथवेति। विवादेन = मिथो निरर्थकवचनोपवचनविन्यासेन–कलहेनेति यावत्।

मर्षयतु मर्षयतु = क्षमताम् क्षमताम्। शैघ्र्ये द्विरुक्तिर्वीप्सायां वा। मदपरवशेन = मदपरतन्त्रेण। येन = प्रसादेनेति शेषः। भवत्प्रसादमन्तरा नोचितं गमनमस्माकमिति भावः। आपानकम् = सुरापानगोष्ठीम् ( मद्यपानभूमिं )।

अपराधक्षमापनोचितां विटोक्तिमाकर्ण्य संजातदयो विदूषकस्तमाह–मर्षितं मयेति। सोढस्त्वदीयापराध इत्यर्थः। नापराधस्त्वदीयोऽपराधरूपेण परिगणित इति भावः। प्रियवयस्यम् = जीमूतवाहनम्। प्रेक्षे = पश्यामि।

विदूषकः—( क ) अदिक्कंतो बम्हणस्स अकालमिच्चू, ता जाव अहंपि मत्तबालअसङ्गदूसिदो इध दिग्घिकाए ण्हाइस्सं । ( तथा करोति । नेपथ्याभिमुखमवलोक्य ) एसो पिअवअस्सो वि रुक्मिणीं विअ हरी मलअवदीं अवलम्बिअ इदो ज्जेव्व आअच्छदि, ता जाव पासपरिवत्ती होमि ।

(ततः प्रविशति गृहीतवरनेपथ्यो नायको मलयवती, विभवतश्च परिवारः)

नायकः—( मलयवतीमवलोकयन् सहर्षम् ) ।

दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिंगिता वेपते ।

---

(क) अतिक्रान्तो ब्राह्मणस्याकालमृत्युः तद्यावदहमपि मत्तबालकसङ्गदूषित इह दीर्घिकायां स्नास्यामि । एष प्रियवयस्योऽपि रुक्मिणीमिव हरिर्मलयवतीमवलम्ब्य इत एवागच्छति, तद् यावत् पार्श्वपरिवर्त्ती भवामि ।

---

( क ) इत्थं विट-विदूषकचेट-चेटीनां मिथोभाषणादिद्वारा कैशिकीवृत्त्यङ्गभूतं त्रिविधं हास्यनर्म प्रकाश्योद्यानगमनसूचनोत्तरं नायकप्रवेशं संघटयितुं वैदूषिकी प्रवृत्तिरभिधीयते—अतिक्रान्त इत्यादिना । अतिक्रान्तः = अपगतः—दूरीभूत इति यावत् । ( अतिक्राम्यतेः कर्त्तरि क्तः ) । अकालमृत्युः = सुरापानताडनादिजनिताऽसमयमरणभयमित्यर्थः । दुष्टसम्पर्कस्य मरणसादृश्यमिति भावः । मत्तो मदोन्मत्तः अत एव बालको बालकवत् कर्त्तव्याऽकर्त्तव्यविचारशून्य इत्यर्थः । तस्य सङ्गः सम्पर्कस्तेन दूषितः कालुष्यं प्रापित इत्यर्थः । दीर्घिकायाम् = सरोवरे । पार्श्ववर्त्ती = निकटस्थः ।

विभवतः = विभवोचित इत्यर्थः ।

अथ द्वितीयाऽङ्कावसानोक्तरीत्या समुचितनायिकाप्राप्तिप्रहृष्टमनसो नायकस्य सम्भोगशृङ्गारवर्णनोपक्रमे शृङ्गाररसपरिपुष्ट्याधायकस्योद्यानगमनादेर्नवोढाविश्रम्भोपायत्वेन प्रसिद्धतया कुसुमाकरोद्यानम्प्रति प्रियया सह गन्तुमुत्सुको नायकस्तदीयवयः क्रमोचित-रतिवैलोम्येन मोदमानो नवोढास्वरूपम्वर्णयति—दृष्टेति । नवोढा नवपरिणीता प्रिया कान्ता ( वधूरिति यावत् ) दृष्टा कौतुकाऽनुरागाभ्यां सह मया विलोकिता सती दृष्टिं लोचनद्वयम् अधो ददाति अवनमयति ( एतेन दृष्टेर्वस्त्वन्तरे प्रेरणाऽभावश्चिरकालमधोभ्रामणं च सूच्यते )—( ह्रीरेवाऽत्र हेतुरप्रत्यवलोकनञ्च वामता ) । तथा—आभाषिता—प्रिये ! किमिच्छसि—क तेऽभिलापो वस्तुनीत्यादि मधुरमालपिता सती आलापं प्रतिवचनं न कुरुते उत्तरं

निर्य्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
याता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढ़ा प्रिया ॥४॥

(मलयवतीं पश्यन् ।) प्रिये मलयवति !—

हुङ्कारं ददता मया प्रतिवचो यन्मौनमासेवितं
यद्दावानलदीप्तिभिस्तनुरियं चन्द्रातपैः स्नापिता ।

---

न ददातीत्यर्थः । (इहापि प्रतिवचनादाने लज्जैव हेतुः) तथा शय्यायां शयनीयास्तरणे (सखीभिरुपवेशितेति शेषः) सती परिवृत्य तिष्ठति अन्यतोऽभिमुखीभूय तिष्ठतीत्यर्थः। (अत्र विरुद्धाचरणे सत्यपि शय्यात्यागाभावे लज्जैव हेतुः)। तथा—बलात् यदृच्छया न तु हठादित्यर्थः। आलिङ्गिता शनैश्शनैराश्लिष्टा सती वेपते कम्पते न तु प्रत्यालिङ्गति—निषेधति वा। (अत्र हि प्रत्यालिङ्गन—निषेधयोरकरणे न तीव्रस्पर्शवत्वं हेतुरपि तु भीतिरेव)। सखीषु सहचरीषु नैसर्गिकत्रपयाऽवरुद्धेच्छाप्रसरेयं नाऽस्माभिर्वलादपनेया स्वयमेव रागेणाऽस्मभ्यमपनयिष्यत इति धिया मिथः स्मितनिरीक्षणकृतोद्यमास्वित्यर्थः। वासभवनात् यत्र स्वामिना सह तिष्ठति ततः स्थानादित्यर्थः। निर्यान्तीषु निर्गच्छन्तीषु सतीषु निर्गन्तुं वहिर्गन्तुमेव ईहते चेष्टते। इत्थं नामतयैव प्रतिकूलतयैव (सा) अद्य नवपरिणयमंगलकाले मे मम सुतराम् अतिशयेन प्रीत्यै मुदे याता प्रचुरानन्ददात्रीभूतेत्यर्थः। एवमधोदृष्टिप्रदानादिद्वारा प्रतिकूलवर्त्तिन्यपि नवपरिणीता वधूर्मे सुतरां प्रीतिसन्दोहजनिकेति भावः। एकस्यैव प्रियेतिकर्तृकारकस्याऽधोदृष्टिदानाद्यनेकक्रियास्वन्वयाद्दीपकाऽलङ्कारः। स च यथावद्वस्तुवर्णनाज्जायमानेन स्वभावोक्त्यलङ्कारेणाऽनुप्राणितः। शार्दूलविक्रीडितं वृत्तम् ॥४॥

एवं नायिकाविनयाऽनुरोधात्परिपुष्टां रतिमधिगच्छन्नायको (जीमूतवाहनः) नायिकायाः प्रयत्नवाहुल्याऽधिगमाऽभिधानद्वारा तां वशीकर्तुमुद्युक्ते मलयवतीं पश्यन्निति। प्रिये! प्रेमरसैकाऽऽधारभूत इत्यर्थः। एतेन सम्बोधनेन विश्रम्भस्याऽल्पत्वात्सम्बोध्यार्थाऽनभ्युपगमाऽऽशङ्कया सकलजनपरिगृहीतशुभनामधेयेन पुनः सम्बोधयति—मलयवतीति।

उक्तपदद्वयेन सम्बोध्य नायिकाम्प्रत्यभिधेयमर्थमभिधत्ते—हुङ्कारमिति। हे प्रिये! मलयवति! प्रतिवचः केनापि कृतस्य प्रश्नस्येत्यर्थः हुङ्कारं हुं हुमित्येवं रूपं प्रत्युत्तरशब्दं (हुमितिस्वीकारवाचकाव्ययस्याऽनुकरणं हुङ्कारशब्दः) ददता वचनाऽवशिष्टत्वेन कुर्वता मया (जीमूतवाहनेनेति भावः) यत् मौनं वाङ्नियमनम् आसेवितम् स्वीकृतम्। तथा दावानामनलो दावानलस्तस्यैव दीप्तिर्द्युति-

ध्यातं यत् सुबहून्यनन्यमनसा नक्तन्दिनानि प्रिये !
तस्यैतत् तपसः फलं मुखमिदं पश्यामि यत्तेऽधुना ॥५॥

नायिका—(अपवार्य्य) ( क ) हञ्जे चदुरिए! ण केवलं दंसणीओ, पिअंपि भणिदुं जाणादि ज्जेव्व ।

---

(क) हञ्जे चतुरिके ! न केवलं दर्शनीयः, प्रियमपि भणितुं जानात्येव ।

---

येषां तैः वनाग्निद्युतिभिरित्यर्थः । ( दावसम्बधेनाऽनलस्याऽधिकदेशव्यापित्वं तत्सादृश्याच्चन्द्रातपानामतिदुःसहत्वञ्च प्रतिपाद्यते )। चन्द्रातपैश्चन्द्रकिरणैः इयं तनुः इदं शरीरं तापिता उष्णीकृता मयेति शेषः ( एतेन त्वदङ्गामृतसङ्गमन्तरेदानीमपि तापाऽशान्त्या नायकस्याऽऽलिङ्गनौत्सुक्यं व्यज्यते )। ( तनुरित्युक्त्या शब्दमहिम्ना कार्श्याऽतिस्फुटता व्यज्यते ) । तथा—नाऽन्यस्यां मनो यस्य तादृशेन अनन्यमनसा एकाग्रचित्तेनेत्यर्थः । (मया) सुबहूनि अपरिगणितानि नक्तन्दिनानि रात्रिन्दिवानि ( व्याप्येति शेषः )—अत्यन्तसंयोगे द्वितीया ) ।—(अचतुर-विचतुर-सुचतुरेति सूत्रेण निपातनात् नक्तन्दिनेति साधुः ) यत् ध्यानं चिन्तितं ( ध्यायतेर्भावे क्तः । तस्य पूर्वोक्तस्य तपसो मौनाद्यवलम्बनात्मकस्येत्यर्थः । इत्थं विप्रलम्भशृङ्गारोद्भूतप्रयासस्य तपोरूपत्वमभिधाय तत्फलत्वेन सम्भोगशृङ्गारमापादयति—एतदिति । एतत् साक्षादनुभूयमानं फलं सिद्धिः यत् ते तव इदं पूर्णेन्दुनिभं गृहीतोद्वाहनेपथ्यम् मुखं पश्यामि । नोत्कृष्टतपश्चरणमन्तरा स्त्रीरत्नलाभ इति भावः । एकस्यैव मयेतिकर्तृकारकस्य दुष्काराद्यनेकक्रियास्वन्वयाद्दीपकालङ्कारः । कामजनितस्य नायकोक्तविधतपसो यथार्थतपसो भेदेऽप्यभेदाऽभिधानादतिशयोक्तिरलङ्कारश्चेत्युभयोः साङ्कर्य्यम् । वृत्तञ्चात्र शार्दूलविक्रीडितं नाम ॥५॥

(क) एवं नायकस्य प्रियोक्तिमाकर्ण्य चेतसि परमाह्लादसन्दोहसम्भृततया स्वयं तत्प्रत्यभिधातुकामाऽपि नवपरिणयजातलज्जया तथा कर्तुमशक्नुवती नायिका पार्श्ववर्त्तिनीं चेटीम्प्रत्यपवारणपूर्वकमाह—हञ्जे । चतुरिके ! इति । अपवार्य्य = अन्यतोऽभिमुखीभूय । दर्शनीयः = द्रष्टुं योग्यः । (सुरूपवानित्यर्थः ) । प्रियम् = प्रियोक्तिम् । अपि = गुणान्तरसमुच्चायकोऽत्राऽपिशब्दस्तथा च प्रियभाषणादन्यदपि कर्तुं जानातीत्यर्थो लभ्यते । ( एतेन प्रियमित्यस्य न प्रियोक्तिरियमपि तु वस्तुकथनमित्यर्थादात्मगुणश्रवणे नायिकाया विनयः प्रकाशितः ) । भणितुम् = वक्तुम् । ( एतेन सौन्दर्याधिक्येऽपि गुणान्तराधिक्यमपीति द्योत्यते ) ।

७

चेटी—(विहस्य) (क) अदिपक्खवादिणि ! सच्चकं ज्जेव्व एदं। किं एत्थ पिअवअणं ?

नायकः—चतुरिके ! आदेशय मार्गं कुसुमाकरोद्यानस्य।

चेटी—(ख) एदु एदु भट्टा। (४३)

नायकः—(परिक्रम्य नायिकां निर्दिश्य) स्वैरं स्वैरम् आगच्छतु भवती।—

---

(क) अतिपक्षपातिनी ! सत्यकमेवैतत्। किमत्र प्रियवचनम् ?

(ख) एतु एतु भर्त्तः।

---

(क) उक्तवचसा नायिकास्नेहबाहुल्यं नायके विज्ञाय चेटी परिहासपूर्वकं ताम्प्रत्याह—अतिपक्षपातिनीति। अतिशयमतिशयेन वा पक्षे स्वामिनो वचसि पतितुं विश्वसितुं शीलमस्या अतिपक्षपातिनी तत्सम्बुद्धौ अतिपक्षपातिनि! अतिपक्षशब्दपूर्वकात् पतधातोः (सुप्यजाताविति ताच्छीलिको णिनिः)। अधिकानुरागवतीत्यर्थः। एतत् = नायकोक्तम् (हुङ्कारं ददता मयेत्यादिरूपम्) सत्यकमेव = अधिकसत्यमेवेत्यर्थः (अधिकार्थकोऽत्र कप्रत्ययः)। किमत्र प्रतिवचनम् = नेदं प्रियावशीकरणसाधनरूपं प्रियभाषणमपि तु वस्तुकथनमेवेति भावः। तदुक्तम्—

नाऽस्त्यल्पतपसा लभ्यः सुन्दरस्त्रीसमागमः।

इति। क्वचित् (अयि प्रतिपक्षवादिनीति पाठः)। उक्तस्य प्रतिकूलाशयाभिधानं ते शीलमिति तदर्थः। नैतदस्मान्विहायाऽन्यत्र शोभते प्रियजनोक्तावनुमोदनमेव शोभामधिगच्छतीति भावः। (एतेन नायकोक्तौ नायिकाया विश्रम्भे चेटीकर्तृकप्रोत्साहनाभिव्यक्तिः)।

नायकश्चेटिकावचनमाकर्ण्य ताम्प्रत्याह—चतुरिके ! आदेशय मार्गमिति। आदेशय = दर्शय। मार्गम् = पन्थानम्।

(ख) नायकादेशमादाय मार्गम्प्रदर्शयति चेटी—एतु एतु भर्त्त इति। (आदरार्थे द्विरुक्तिः)। अमुना मार्गेणेति शेषः। स्वामेवाऽनुसरति नायिकेयमिति द्योतयितुं भर्त्त इत्युक्तिः।

श्रृङ्गारं सूचयेत्तत्र सौभाग्यगुणसंस्तवैः।

इत्युक्तिमवलम्ब्य—चेटिकोपदर्शितमार्गो विस्मय-प्रीति-करुणा-नन्द सुभगो मधुरस्मितविकसितवदनो नायकोऽनुसरन्तीं नायिकामीक्षमाणस्तदीयमन्दगतिमनुरुध्य युक्त्या सौन्दर्यातिशयं प्रतिपादयति—निर्दिश्येत्यादिना। निर्दिश्य = अभिमुखीकृत्य। सामीप्यादन्याश्राव्यं यथा तथेत्यर्थः। (वदतीति क्रियाशेषः)।

खेदाय स्तनभार एव किमु ते मध्यस्य हारोऽपरः ?
श्राम्यत्यूरुयुगं नितम्बभरतः काञ्च्याऽनया किं पुनः ?।
शक्तिः पादयुगस्य नोरुयुगलं वोढुं, कुतो नूपुरौ ?
स्वाङ्गैरेव विभूषिताऽसि वहसि क्लेशाय किं मण्डनम् ? ॥६॥

चेटी—(क) एदं क्खु तं कुसुमाअरुज्जाणं, ता पविसदु भट्टा।

(सर्वे प्रविशन्ति)।

---

(ख) एतत् खलु तत् कुसुमाकरोद्यानं, तत् प्रविशतु भर्ता।

---

स्वैरं स्वैरम् = मन्दमन्दमित्यर्थः। नतु मदनुरोधात् सत्वरं त्वयाऽऽगन्तव्यमिति भावः। (मन्द-स्वच्छन्दयोः स्वैर इत्यमरः)। (अत्राऽप्यादरार्थे वीप्सा)। आगच्छतु = मदभिमुखमिति शेषः। भवतीति = उचिताऽनेकगुणवर्णनद्वाराऽऽदरातिशयपूर्वकं भवतीशब्देन नायिकानिर्देशः। प्रागाचारार्थं त्वद्गमनमेवोचितं नास्मद्गमनमिति ममैव त्वदनुसरणं कर्तुमुचितं न मदनुसरणं तव तथेति भावः। (एतेन नेतुर्नायिकानुवर्तनं सूच्यते)।

स्तन-जघनादिगौरवाद् गतिवैषम्यमीक्षमाणो नायको मन्दगतिमापादयन् शरीरसौन्दर्यप्रशंसयाऽलङ्करणधारणवैयर्थ्यमभिधत्ते—खेदायेति। कस्याऽप्यत्र सम्बोधनपदस्याऽनुक्तत्वात्तस्येहाऽऽवश्यकत्वाच्च हे मुग्धे! इति सम्बोधनपदमध्याहृतम्बोध्यम्। (हे मुग्धे!) स्तनभारः स्तनयोर्गुरुत्वमेवेत्यर्थः। ते तव मध्यस्य शरीरमध्यभागस्य वक्षःस्थलस्येत्यर्थः। खेदाय परिश्रमाय (भवतीति शेषः)। अपरोऽन्यः स्तनातिरिक्त इति भावः। हारो मौक्तिकलता (तदुपरीति शेषः) किमु नितान्तखेदाय भवतीति भावः। ऊरुयुगं सक्थिद्वयं जानूपरिभागद्वयमिति यावत् (सक्थि क्लीवे पुमानूरुरित्यमरः) नितम्बभरतो नितम्बभारादित्यर्थः (पञ्चम्यन्तात्तसिल्) श्राम्यति खिद्यति (श्रमु तपसि खेदे चेति धातोर्दैवादिकस्य लटि रूपम्)—(श्राम्यतीत्युक्त्या नितम्बस्य गुरुत्वाधिक्यं द्योत्यते)। अनया गुरुतररत्नमाल्यघटितयेत्यर्थः काञ्च्या रसनया किं पुनः श्रमाधिक्यमन्तरा नान्यदस्ति किमपि फलमिति भावः। तथा—पादयुगस्य चरणद्वयस्य ऊरुयुगलम् ऊरुद्वयभारमित्यर्थः। वोढुं धारयितुं न शक्तिः नास्ति सामर्थ्यम्। नूपुरौ पादांगुलिभूषणभूतावित्यर्थः कुतः (धारयितुं शक्तिरिति शेषः) ऊरुद्वयभारग्रस्तस्य त्वदीयपादद्वयस्य नूपुरधारणं क्लेशाधिक्यसाधकमेवेति भावः उपलक्षणमेतत् अन्येषां कर्णाद्यवयवानाम्, तत्रापि नैसर्गिकसौन्दर्यादेव शोभातिशयसम्पादनात्कुण्डलादिधारणस्य क्लेशाधायकत्वमेवेत्यवधेयम्। (एवं) स्वाङ्गैरेव नैसर्गिकमनोज्ञताश्रयै-

नायकः—( विलोक्य ) अहो नु कुसुमाकरोद्यानस्य परा श्रीः !

इह हि,—

निष्यन्दश्चन्दनानां शिशिरयति लतामण्डपे कुट्टिमान्तान्
तारं धारागृहाणां ध्वनिमनु तनुते ताण्डवं नीलकण्ठः ।

---

निंजावयवैरेवेत्यर्थः ( त्वम् ) विभूषिताऽसि मण्डनाद्यनपेक्षयैव विशेषेण शोभि-ताऽसीत्यर्थः । ( विभूषितेत्युक्त्याऽङ्गानामुत्पत्तिक्षणादेव सकलशोभास्पदत्वमिति द्योतितम् ) । ( तदा ) मण्डनं हाराद्यलङ्करणं क्लेशाय दुःखाय किं किमर्थं वहसि धारयसि नैव धारणयोग्यन्तदित्यर्थः । (एतेन निसर्गमधुराकृतेर्भवत्या लाभादिसिद्धं बः समीहितमिति कृतार्थताऽभिव्यज्यते ) । हाराद्यलङ्करणधारणात् दर्शितविधरवेदा-ऽसम्बन्धेऽपि तत्सम्बन्धोक्त्याऽतिशयोक्तिरलङ्कारः । मण्डनधारणनैष्फल्ये हेतुभूत-स्याऽङ्गसौन्दर्यस्य वाक्यार्थगतत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारश्चेत्युभयोः सा-र्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

विलोक्य = सम्यक्वीक्ष्य । ( कुसुमाकरोद्यानमिति शेषः ) अहो = आ-श्चर्यभूता । कुसुमाकरोद्यानस्य = कुसुमाकरनाम्नो राज्ञः क्रीडार्थं कृत्रिमवनस्येत्यर्थः। परा = महती । श्रीः = शोभा । ( वर्तत इति क्रियाशेषः )

उद्यानश्रियं वर्णयति—निष्यन्द इति । ( इह हि ) अस्मिन् कुसुमाकरो-द्याने हीत्यर्थः । चन्दनानां चन्दनतरूणां शाखासंघट्टनादिद्वारा मिथो घृष्टानामित्यर्थः। निष्यन्दो रसः चन्दनतरुभ्यः क्षरितो रस इत्यर्थः । लतामण्डपे चन्दनलतागृहे कुट्टिमान्तान् रत्नादिबद्धभूप्रदेशान् शिशिरयति शीतलयति शैत्यगुणायोगादिति भावः ( शिशिरं करोतीत्यर्थे तत्करोति तदाचष्टे इति णिच् ) । ( अनेन स्वैरासिका-योग्यता सूच्यते ) । तथा—नीलकण्ठो मयूरः ( मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् इत्यमरः ) । धारागृहाणां जलयन्त्रगृहाणाम् ( अन्तः सञ्चरज्जलसम्पात-लवकणपातशिशिरोपचितानामाननादिषु शैत्योपचाराय कल्पितानामिति भावः ) । अनु तारं महान्तं ध्वनिम् अनु लक्षीकृत्येत्यर्थः ( मेघध्वनिं विज्ञायेति भावः ) । अनु लक्षणे इत्यनोः कर्मप्रवचनीयत्वात्तद्योगे द्वितीया ) । ताण्डवं नृत्यं ( ताण्डवं नटनं नाट्यं लास्यं नृत्यञ्च नर्त्तने इत्यमरः ) । तनुते विस्तारयति । तथा—यन्त्रो-न्मुक्तः यन्त्रात् तरुसेचनार्थमास्थितात् धारायन्त्रादित्यर्थः । उन्मुक्तः बालतरुसेचनार्थ-निस्सरणमार्गेण प्रवृत्त इत्यर्थः । अयं पुरोदृश्यमानः जलौघो जलराशिर्वेगात् रभसात् ( हेतोः ) आपातेन निपतनेन य उत्पीड आघातस्तेन हेलयाऽनायासे-हतानां पातितानां कुसुमानां रजोभिः परागैः पिञ्जरः पीतवर्णेन रञ्जितः ( पिञ्जरो

यन्त्रोन्मुक्तश्च वेगाद् गलति विटपिनां पूरयन्नालवालान्
आपातोत्पीड़हेलाहतकुसुमरजःपिञ्जरोऽयं जलौघः ॥७॥

अपि च,—

अमी गीतारम्भैर्मुखरितलतामण्डपभुवः
परागैः पुष्पाणां प्रकटपटवासव्यतिकराः ।

---

ऽर्थान्तरे पीते क्लीवं स्वर्णे कपीतने इति मेदिनी ) सन् विटपिनां शाखिनाम् आलवालान् मूलस्थितचत्तुलाकारजलाधारवेष्टनानीत्यर्थः पूरयन् व्याप्नुवन् गलति पतति । धारागृहध्वनिश्रवणान्मेघध्वनिभ्रान्त्या नीलकण्ठानां ताण्डवकरणात् पूर्वार्द्धे भ्रान्तिमान् नामाऽलङ्कारः । तदुक्तं दर्पणे—

साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितः ।

इति । जलौघस्य स्वीयशौक्ल्यगुणत्यागपूर्वक-परागसम्बन्धिपिञ्जरत्वगुण-ग्रहणात्तद्गुणालङ्कारश्च । उक्तञ्च दर्पणकृता—

तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः ।

इति । उभयोरेकत्र समावेशात् संसृष्टिनामाऽलङ्कारः । लक्षणं यथा—

मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते ।

इति । स्रग्धरावृत्तम् ॥७॥

श्लोकेनैकेन कुसुमाकरोद्यानश्रीवर्णनस्याऽपर्याप्त्या द्वितीय-श्लोकेन पुन-र्वर्णयति— अमीति । गीतारम्भैर्मधुरगुञ्जनशब्दैः ( करणैः ) मुखरिताः शब्दिताः लतामण्डपान्येव भुवः स्थानानि यैस्तथाभूताः । ( पृथिव्यां स्थानमात्रेऽपि भूर्भूमिरिति दृश्यते इत्यभिधानम् )—( एतेन स्वयं गायन्तो मण्डपभुवमपि गायन्तीवेत्युत्प्रेक्षा व्यज्यते ) । तथा—पुष्पाणां परागै रजोभिः ( करणैः ) प्रकटो व्यक्तः पटवासानां पिष्टातानां वसनसौरभोत्पादक-कुंकुमादिचूर्णानामित्यर्थः । व्यतिकरः सम्पर्को येषां तथाभूताः । ( पटवासरञ्जिता इवेत्युत्प्रेक्षा ) । तथा—सहचरीभिर्मधुकरीभिः सह ( मिलित्वेत्यर्थः ) पर्य्याप्तम् यथेच्छं मधुरसं पुष्परसं ( मधु मद्ये पुष्परसे क्षौद्रे चेत्यमरः ) । पिबन्त आस्वादयन्तः, अमी पुरोदृश्यमाना इत्यर्थः । मधुपा भ्रमराः समन्तात् सर्वत्र आपानोत्सवं कुसुमरसस्यास्वादनमहोत्सवम् अनुभवन्तीव प्राप्नुवन्तीव ( दृश्यन्त इति शेषः ) ।

( पक्षान्तरे ) गीतारम्भैर्मद्यपानोन्मत्ततया प्रारब्धगीतैरित्यर्थः । मुखरितलता-मण्डपभुवः गीतस्योच्चैःस्वरेण गीयमानत्वाल्लतागृहं सशब्दं कुर्वाणा इत्यर्थः ।

पिबन्तः पर्य्याप्तं सह सहचरीभिर्मधुरसं
समन्तादापानोत्सवमनुभवन्तीव मधुपाः ॥८॥

विदूषकः—( उपसृत्य ) (क) जेदु जेदु भवं। सोत्थि भोदीए।

नायकः—वयस्य ! चिराद्दृष्टोऽसि।

विदूषकः—( ख ) भो वअस्स ! लहुं ज्जेव्व आअदोम्हि। किं

---

(क) जयति जयति भवान्। स्वस्ति भवत्यै।

(ख) भो वयस्य। लघु एवागतोऽस्मि किं। पुनर्विवाहमहोत्सवमिलितसिद्धविद्याधराणामापानदर्शनकौतूहलेन परिभ्रमन्नेतावतीं वेलां स्थितोऽस्मि। तत् त्वमपि तावत् प्रेक्षस्व।

---

पुष्पाणां परागैः कुसुमरजोभिः प्रकटपटवासव्यतिकराः प्रकटः पटवासस्य वसनदेशपाशादिषु हरिद्रातण्डुलचूर्णकृतस्योद्धूलनविधेरित्यर्थः व्यतिकरः सम्पर्को येषान्तादृशाः। सहचरीभिः स्वप्नेऽपि वियोगमजानानाभिर्निजप्रियाभिरित्यर्थः। मधुरसं मद्यरसम्। मधुपाः मधु मद्यं पिबन्तीति तथोक्ताः सिद्धा देवयोनय इत्यर्थः। आपानोत्सवं मद्यपानगोष्ठीमहोत्सवम् पानगोष्ठीषु मद्यपानजन्यानन्दमित्यर्थः। अनुभवन्ति अनुभवविषयत्वेन साक्षात्कुर्वन्तीत्यर्थः। अन्यत्पूर्ववत्। वर्णनीयस्य शृङ्गारस्य तिर्यग्विषयत्वेन वर्णितत्वादनौचितप्रवृत्तेः स्पष्टतया रसाभासः। तदुक्तं दर्पणकृता—

अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः।

इति कश्चित्तन्न चारु, तिर्यग्वर्णनच्छद्मना (श्लेषेण) सिद्ध-विद्याधराणामेव शृङ्गारवर्णनप्रतीतेः। अलङ्कारश्चेहोत्प्रेक्षा नाम। शिखरिणी वृत्तम् ॥८॥

उद्यानशोभावर्णनक्रमे भ्रमरवर्णनच्छलेनाऽऽपानोत्सवमनुभवतः सिद्धविद्याधरगणान् वर्णयन्तं नायकम्प्रति विदूषककृताशीर्वचनम्—जयति भवानिति। जयति = सर्वोत्कर्षेण वर्ततामित्यर्थः। (जयतेरुत्वं नेत्युक्तेरुत्वाभावः)। नायकसहचरीं नायिकाञ्चाशिषा योजयति—स्वस्ति भवत्यै इति। स्वस्ति = कल्याणं भूयादित्यर्थः। ( कल्याणार्थकस्वस्तिशब्दयोगे भवतीशब्दाच्चतुर्थी )।

स्वं प्रियासनाथमाशिषा योजयन्तं विदूषकं वीक्ष्य नायकः साधिक्षेपमाह—वयस्य ! चिरादागतोऽसीति। ( नेदानीम्भवत्कृतो विलम्ब एतादृशो युज्यत इति नर्माऽधिक्षेपः )।

नायकोक्तमधिक्षेपवचः समाकर्ण्य विदूषकस्तत्परिहरति—भो वयस्य ! लघ्वेवागत इति। शीघ्रमेवागतोऽहमित्यर्थः। द्रुतागमनेऽपि तव कुतो न यावदिय-

उण विआहमहूसवमिलिदसिद्धविज्जाहराणं आपाणदंसणकोदूहलेण परिब्भमंतो एत्तिअं बेलं चिट्ठिदोम्हि । ता तुमंपि दाव पेक्ख ।

नायकः—एवं यथाऽऽह भवान् । (समन्तादवलोकयन्) वयस्य ! पश्य पश्य,—

स्निग्धाङ्गा हरिचन्दनेन दधतः सन्तानकानां स्रजो
माणिक्याभरणप्रभाव्यतिकरैश्चित्रीकृताच्छांशुकाः ।

---

स्कालं दर्शनमित्यत्र हेतुं प्रदर्शयति—किन्त्वित्यादिना । विवाहार्थं यो मङ्गलमहोत्सवस्तत्र मिलिता ये सिद्धविद्याधरास्तेषामापानं पानगोष्ठी तद्दर्शने यत्कौतूहलं तेन ।

प्रागिव तदानीमपि नायको विदूषकवचोऽनुसारेणात्मप्रवृत्तिं प्रकाशयति—यदाह भवानिति ।

विदूषकोक्त्याऽतिरमणीयां पानगोष्ठीमवेत्य नायकस्तां वर्णयति—स्निग्धाङ्गा इति । * हरिचन्दनेन छेद-कषयोः रक्तपीतेन चन्दनेनेत्यर्थः । गोशीर्षाख्यचन्दनविशेषेण वा (तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियामित्यमरः) । स्निग्धानि लिप्तानि अङ्गानि सकलशरीराणि येषां तादृशाः । तथा—सन्तान एव सन्तानकस्तस्येमानि सन्तानकानि (पुष्पमूलेषु बहुलमिति तद्धितलुक्) तेषां सन्तानकानां कल्पतरुकुसुमानामित्यर्थः, स्रजो माल्यानि (सृजेः क्विन्-अमागमश्च निपात्यते) दधतः केशादिषु शोभार्थं धारयन्तः । तथा—माणिक्यप्रधानान्याभरणानि माणिक्याभरणानि काञ्चीप्रभृतीनीत्यर्थः तेषां प्रभाव्यतिकरैः परस्परमिलितकान्तिपुञ्जैः (प्रभासम्पर्कैरित्यर्थो वा) चित्रीकृतानि शबलीकृतानि अच्छांशुकानि निर्मलवस्त्राणि येषां तथोक्ताः । रत्नप्रधानालङ्करणकान्तिपुञ्जैश्चित्रितनिर्मलवसना इत्यर्थः । अमी

---

* एतल्लक्षणं यथा—

छेदे रक्तं कषे पीतं हरिचन्दनमुच्यते ।

इति ।

† प्राधान्यात् हरिचन्दनशब्देन गोशीर्षाख्यचन्दनविशेष एव गृह्यते तदुक्तं मेदिनीकोशे—

हरिचन्दनमस्त्री स्यात् देवतानां महीरुहे ।
नपुंसकं तु गोशीर्षे ज्योत्स्नाकुङ्कुमयोरपि ॥

इति ।

‡ इदमस्तु सन्निकृष्टे समीपतरवर्त्ति चैतदो रूपम् ।
अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् ॥

इत्युक्तेः ।

साद्धं सिद्धजनैर्मधूनि दयितापीतावशिष्टान्यमी
मिश्रीभूय पिबन्ति चन्दनतरुच्छायासु विद्याधराः ॥९॥

तदेहि वयमपि तमालवीथिकां गच्छामः । ( परिक्रामति ) ।

विदूषकः—( क ) एसा क्खु तमालबीहिआ । एदं संचरंती दाव परिखेदिदा विअ भोदी दीसइ । ता इध ज्जेव्व फटिअमणिसिलाअले उव-विसिअ वीसमम्ह ।

६२ नायकः—वयस्य ! सम्यगुपलक्षितम् ;—

(क) एषा खलु तमालवीथिका । एतां सञ्चरन्ती तावत् परिखेदितेव भवती दृश्यते । तदिहैव स्फटिकमणिशिलातले उपविश्य विश्राम्यामः ।

दूरवर्त्तिन इत्यर्थः । विद्याधरास्तदाख्यदेवयोनिविशेषाः । चन्दनतरुच्छायासु चन्दनमहीरुहा( नातप ) धःप्रदेशेष्वित्यर्थः । ( उपविष्टाः सन्त इति शेषः ) सिद्धजनैः सार्धम् । ( एतेनोद्वाहोत्सवे सिद्धानामेव प्राधान्यं विद्याधराणामप्राधान्यात्तदनुसरणमिति विशेषः प्रतिपाद्यते ) । मिश्रीभूय मिलित्वा दयितापीतावशिष्टानि दयिताभिः प्रियाभिः पीतेभ्यः पानविषयीभूतेभ्योऽवशिष्टान्यवशेषीकृतानीत्यर्थः । प्रियामुखसंसर्गपवित्रीकृतानीति भावः । ( कामुकानां तथाविधाचारप्रसिद्धिः ) । मधूनि मद्यानि ( तेषां रतिवर्द्धकत्वेन प्रसिद्धत्वादिति भावः ) । पिबन्ति पानविषयत्वेन साक्षात्कुर्वन्तीत्यर्थः । एकस्यैव विद्याधरसमुदायात्मककर्तृकारकस्य दिह—धा—मिश्रीभवन—पाधातुवाच्यक्रियास्वन्वयाद्दीपकालङ्कारः । यथावद्वस्तुवर्णनात्स्वभावोक्तिश्चेत्युभयोः साङ्कर्यम् । शार्दूलविक्रीडितं वृत्तम् ॥९॥

इत्थं विदूषकवचोऽनुसारेण पानगोष्ठीं वर्णयित्वा नायको विश्रामार्थं सूचयति—तदेहीति । वयमपीति । ( एतेन समुचितमेवाऽस्माकमपि महोत्सवानुसरणमिति स्वाभिप्रायः सूच्यते ) तमालवीथिकाम् = तन्नाम्नीं वृक्षवाटिकामित्यर्थः ।

( क ) नायकवचोऽनुमोदमानो विदूषको ब्रूते—एषा खल्विति । एषा= पुरोदृश्यमाना । एताम् = तमालवीथिकाम् । सञ्चरन्ती = परिभ्रमन्ती । परिखेदिता = परिश्रान्ता ।

विदूषकोक्तिमतिप्रशंसन्नायक आह—वयस्य ! सम्यगुपलक्षितमिति । सुचिन्हेन सम्यक्बोधितमित्यर्थः ।

एतन्मुखं प्रियायाः शशिनं क्षिप्त्वा कपोलयोः कान्त्या ।
तापानुरक्तमधुना कमलं ध्रुवमीहते जेतुम् ॥ १० ॥

( नायिकां हस्ते गृहीत्वा ) प्रिये ! इहोपविशामः ।

नायिका—(क) जं अज्जउत्तो आणवेदि । ( सर्वे उपविशन्ति ) ।

नायकः—( नायिकाया मुखमुन्नमय्य पश्यन् ) प्रिये ! वृथैव त्वमस्माभिः कुसुमाकरोद्यानकुतूहलिभिः खेदिता । कुतः ?—

एतत्ते भ्रूलतोल्लासि पाटलाधरपल्लवम् ।
मुखं नन्दनमुद्यानमतोऽन्यत् केवलं वनम् ॥११॥

---

(क) यदार्यपुत्र आज्ञापयति ।

---

विदूषकोक्तिमनुसृत्यैव नायकः प्रियामुखं वर्णयति—एतन्मुखमिति । एतत् व्यक्तपरिश्रमवत्त्वेन दृश्यमानमित्यर्थः प्रियायाः कान्तायाः मुखं वदनं कपोलयोर्गण्डस्थलयोः कान्त्या दीप्त्या शशिनं चन्द्रं जित्वा पराभाव्य ( वदनावयवमात्रेणैव चन्द्रजयः सुकरो न तु तत्समुदायेनेति कपोलशब्दो द्योतयति ) । अधुना इदानीं तापेन औष्ण्येन सूर्यातपेनेति यावत् । अनुरक्तम् अनुरञ्जितं लोहितमिति यावत् । सत् ( रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु इति मेदिनी ) । कमलं पद्मं जेतुं पराभावयितुम् ईहते चेष्टते ध्रुवं मन्ये । प्रतिद्वन्द्विनोश्चन्द्रपद्मयोः पराजयेन निश्शङ्कमास्यमेतत् सौन्दर्यसाम्राज्यमनुभवतीति भावः । उपमानभूतचन्द्र-पद्मोभयाऽपेक्षया मुखस्योपमेयस्याऽऽधिक्यवर्णनाद्व्यतिरेकालङ्कारः । ध्रुवशब्दस्योत्प्रेक्षार्थकत्वादुत्प्रेक्षाऽलंकारश्चेत्युभयोः सांकर्यम् । उक्तालंकारद्वयेनाऽतिशयोक्तिरलंकारो ध्वन्यते । वृत्तञ्चेदमार्या नाम ॥१०॥

हस्ते गृहीत्वा = ( एतेन विश्रम्भक्रमः प्रदर्श्यते ) । इहोपविशामः = ( एकासनोपवेशनाल्लज्जाऽपनयः प्रदर्शितः ) ।

मुखम् = आननम् । उन्नमय्य = उत्तोल्य । ( उत्पूर्वकाण्णयन्तान्नमधातोर्ल्यप् ) । कुसुमाकरोद्यानकुतूहलिभिः = कुसुमाकरोद्याने कुसुमाकरोद्यानदर्शने कुतूहलमस्त्येषामिति कुसुमाकरोद्यानकुतूहलिनस्तैः । कुसुमाकरोद्यानदर्शनाकांक्षिभिरित्यर्थः । खेदिता = खेदं प्रापितेत्यर्थः ।

अनेकसाम्यदर्शनात्प्रियामुखमेवोद्यानरूपेण नायको वर्णयति—एतदिति । ( हे प्रिये ! ) भ्रुवावेव लते भ्रुवौ लते इव वा भ्रूलते ताभ्यामुल्लासितुं शीलमस्येति भ्रूलतोल्लासि भ्रूवल्लीशोभमानमित्यर्थः । तथा—पाटलः श्वेतरक्तः अधर एव पल्लवः

चेटी—( सस्मितं विदूषकं निर्दिश्य ) (क) सुदं तुए, भट्टिदारिअं कहं बरिणदेति ।

विदूषकः—( सस्मितम् ) (ख) चउरिए ! मा एव्वं गव्वं उव्वह। अह्माणं पि मज्झे दंसणीओ जणो अत्थि एव्व । केवलं मच्छरेण कोऽपि ण बण्णेदि ।

चेटी—(ग) अज्ज उण अहं तुमं बण्णेमि ।

---

(क) श्रुतं त्वया, भर्तृदारिकां कथं वर्णितेति ।

(ख) चतुरिके ! मैवं गर्वमुद्वह । अस्माकमपि मध्ये दर्शनीयो जनोऽस्त्येव। केवलं मत्सरेण कोऽपि न वर्णयति ।

(ग) आर्य ! पुनरहं त्वां वर्णयामि ।

---

किसलयो यस्मिन् तादृशम् । एतत् पुरोदृश्यमानमित्यर्थः । ते तव मुखम् आननं नन्दनम् आह्लादजनकं ( नन्दनसंज्ञकं वा ) उद्यानम् वाटिका । अतोऽस्मात् त्वन्मुखोद्यानादित्यर्थः । अन्यत् अतिरिक्तम् ( उद्यानमिति शेषः ) केवलं वनम् अरण्यमेवेत्यर्थः, आह्लादजनकत्वाभावादिति भावः । ( भ्रूलता—अधरपल्लव ) इत्युभयत्र कर्मधारयोपमितसमासाभ्यां रूपक-लुप्तोपमयोः सन्देहसङ्करः—सङ्करो वा । नन्दनमित्यत्र—इन्द्रोद्यान—आनन्दजनकरूपाऽर्थाभ्यां श्लेषाऽलङ्कारः । प्रियामुखमेव नन्दनमुद्यानम् अन्यदुद्यानं केवलं वनमित्युक्त्याऽन्यत्पदेनेन्द्रोद्यानस्याऽप्यभिधानात्तस्य चोपमानत्वौचित्यात् तदपेक्षया मुखरूपोद्यानस्यैवाऽऽधिक्यप्रतिपादनेन व्यतिरेकालङ्कारः। उपमानभूत—नन्दनोद्यानस्याऽऽह्लादजनकत्वाभावात्मकनैष्फल्योक्त्या प्रतीपालङ्कारश्च । उक्तञ्च प्रतीपालङ्कारस्य लक्षणं दर्पणकृता—

प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम् ।
निष्फलत्वाऽभिधानं वा प्रतीपमिति कथ्यते ॥

इति । एवञ्चाऽलङ्कारषट्कस्याऽत्र समुच्चयो बोध्यः ॥ अनुष्टुप्वृत्तम् ॥११॥

(क) चेटी विदूषकम्प्रति परिहासगर्भमाह—श्रुतं त्वया कथं वर्णितेति। वर्णनञ्चात्र वचोद्वारा सौन्दर्यप्रशंसनरूपमबोध्यम् ।

(ग) साक्षेप-धृष्टतासूचिकां विदूषकोक्तिमाकर्ण्य चेटीपरिहासमन्तर्निधाय प्राह—आर्य पुनरहं त्वां वर्णयामीति । वर्णयामि = भवदीयस्वरूपवर्णनं करोमीत्यर्थः । ( पक्षान्तरे ) वर्णनस्य नेपथ्यविरचनात्मकत्वाद्वर्णयामीत्यस्य वर्णवन्तं ( रञ्जितं ) करोमीत्यर्थः । ( तत्करोति तदाचष्टे इति णिच् मतुपो लुक् च )।

विदूषकः—( सहर्षम् ) (क) भोदि ! जीविदोम्हि । ता करेदु भोदी पसादं, जेण एसो मं पुणोवि ण भणादि, जहा तुमं ईरिसो तारिसो कविलमंकडाआरो त्ति ।

चेटी—(ख) अज्ज ! तुमं मए विआहजाअरणे णिद्दाअमाणणिमीलिअअच्छो सोहणो दिट्ठो । ता तह ज्जेव्व चिट्ठ, जेण वण्णेमि ।

विदूषकः—( तथा करोति ) ।

चेटी—( स्वगतम् ) (ग) जाव एसो णिमीलिअअच्छो चिट्ठदि, दाव णीलरसाणुआरिणा तमालपल्लवरसेण मुहं कालीकरइस्सं । ( उत्थाय तमालपल्लवं निष्पीड्य विदूषकस्य मुखं कालीकरोति । नायको नायिका च विदूषकं पश्यतः ) ।

---

(क) भवति ! जीवितोऽस्मि । तत् करोतु भवति प्रसादं, येनैष मां पुनरपि न भणति, यथा त्वमीदृशः तादृशः कपिलमर्कटाकार इति ।

(ख) आर्य्य ! त्वं मया विवाहजागरणे निद्रायमाणनिमीलिताक्षः शोभनो दृष्टः । तत्तथैव तिष्ठ, येन वर्णयामि ।

(ग) यावदेष निमीलिताक्षस्तिष्ठति, तावन्नीलरसानुकारिणा तमालपल्लवरसेन मुखं कालीकरिष्यामि ।

---

( घ ) चेटीमुखादात्मवर्णनस्याऽऽशुभावित्वमवेत्य मोदमानो विदूषकोऽपराधक्षमापनपूर्वकन्तामप्रत्याह—भवति ! जीवितोऽस्मीत्यादि । तत्करोतु भवती प्रसादम् = (वर्णनस्प्रतीति शेषः) । एषः = विटः । ईदृशस्तादृशः कपिलमर्कटाकारः = कपिलमर्कट इवाकारो यस्य सः । यथा न पुनरसौ मां परिहसेत् तथा वर्णयत्विति भावः ।

( ख ) चेटी विनीतमपि विदूषकवचः श्रुत्वाऽपि पुनः सपरिहासमाह—आर्य ! त्वं मयेत्यादि । विवाहजागरणे = विवाहार्थं यज्जागरणमस्वापस्तस्मिन् । विवाहजागरणकाल इत्यर्थः । निद्रायमाणनिमीलिताक्षः = निद्रां करोति निद्रायते निद्रायत इति निद्रायमाणो निद्रित इत्यर्थः । ( अथवा ) अनिद्रावान् निद्रावान् भवन् निद्रायमाणः ( अभूततद्भावार्थे क्यङ्प्रत्ययः ) तस्येव निमीलितेऽक्षिणी यस्य तथोक्तः । । (बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ) । वर्णयामि=पूर्ववदिहापि श्लेषः ।

( ग ) एषः = विदूषकः ! निमीलिताक्षः = निमीलिते सङ्कुचितेऽक्षिणी नेत्रे यस्य सः । नीलरसानुकारिणा = नीलं च तद्रसं नीलरसं तमनुकरोति तच्छीलेन । कालीकरिष्यामि = कृष्णवर्णं करिष्यामीत्यर्थः ।

नायकः—वयस्य ! धन्यः खल्वसि, योऽस्मासु तिष्ठत्सु भवानेवं वर्ण्यते ।

नायिका—नायकस्य मुखं दृष्ट्वा स्मितं करोति ।

नायकः—( नायिकामुखं दृष्ट्वा )।—

स्मितपुष्पोद्गमोऽयं ते दृश्यतेऽधरपल्लवे ।
फलं त्वन्यत्र मुग्धाक्षि ! चक्षुषोर्मम पश्यतः ॥१२॥

विदूषकः—(क) भोदि ! किं तुए किदं ?

चेटी—(ख) णं वण्णिदोसि ।

विदूषकः—( हस्तेन मुखं प्रमृज्य दृष्ट्वा सरोषं दण्डकाष्ठमुद्यम्य )।

---

(क) भवति ! किं त्वया कृतम् ?

(ख) ननु वर्णितोऽसि ।

---

अस्मासु तिष्ठत्सु = तिष्ठतोऽस्माननादृत्येत्यर्थः । ( षष्ठी चानादरे इति कर्मणि षष्ठी—सप्तम्योर्विधानादिह सप्तमी ) ।

नायिका नायकमुखावलोकनपूर्वकं स्मितमुखी भवतीत्यर्थः । ( एतेनाभिमुख्यात्मकं फलं प्रकाश्यते ) ।

एवं विदूषकं विलोक्य प्रियं विलोकयन्त्या नायिकायाश्चित्तावर्जनस्याऽऽभिमुख्येन साफल्यमवगच्छन्नायकस्तत्स्मितं प्रशंसति—स्मितेति । मुग्धे सुन्दरेऽक्षिणी नेत्रे यस्यास्तत्सम्बुद्धौ हे मुग्धाक्षि ! चारुनेत्रे ! ते तव अधरपल्लवे अधरकिसलये अयं साक्षाद् दृश्यमान इत्यर्थः । स्मितमेव पुष्पं तस्योद्गमः प्रादुर्भावो दृश्यते भाग्येन दृष्टिगोचरतां प्राप्नोति । तु किन्तु फलं ( स्मितपुष्पोद्गमस्येति शेषः ) । अन्यत्र पल्लवातिरिक्तस्थान इत्यर्थः । पश्यतो मम चक्षुषोर्नेत्रयोरेव दृश्यते । पुष्पोद्गमस्थाने फलोत्पत्तेः प्रसिद्धावपि अधरे स्मितपुष्पोद्गमस्य मन्नेत्रयोः फलस्य च दर्शनाद्वैपरीत्येनाऽऽश्चर्यजनकमिति भावः । कार्यकारणयोर्भिन्नदेशत्वादिहाऽसङ्गति नामाऽलङ्कारः । तदुक्तं दर्पणे

कार्यकारणयोर्भिन्नदेशतायामसङ्गतिः ।

इति । स च स्मिताधरयोः पुष्पत्व—पल्लवत्वयोरारोपाद्रूपकेणाऽनुजीवितः । अनुष्टुप् वृत्तम् ॥ १२ ॥

(क) खलीकृतः=अखलः खलः सम्पादितः खलीकृतः (अभूततद्भावे च्विः) अधमीकृतः । अपकृत इत्यर्थः । ( अहमित्यादिः ) । दास्याः पुत्र्या चेटिकया ममापकारः कृत इति भावः । (खलं भू—स्थान—कल्केषु नीचक्राधमे त्रिष्विति मेदिनी) ।

(क) आः दासीए धीए! राअउलं क्खु एदं। किं तव करइस्सं? (नायकं निर्दिश्य) भो! तुम्हाणं पुरदो अहं दासीए धीआए खलीकिदो! ता किं मम इध ट्ठिदेण? अण्णदो गमिस्सं। (निष्क्रामति)।

चेटी—(ख) कुविदो मे अज्ज अत्तेओ, जाव णं गदुअ पसादइस्सं।

नायिका—(ग) हञ्जे चदुरिए! किं मं एआइणीं उज्झिअ गच्छसि?

चेटी—(नायकं निर्दिश्य सस्मितम्) (घ) एव्वं एआइणी चिरं होहि। (इति निष्क्रान्ता)।

नायकः—(नायिकाया मुखं पश्यन्)।—

दिनकरकरैर्मृष्टं बिभ्रत् द्युतिं परिपाटलां
दशनकिरणैः संसर्पद्भिः स्फुटीकृतकेसरम्।

---

(क) आः दास्याः पुत्रि! राजकुलं खल्वेतत्। किं तव करिष्यामि? भोः! युवयोः पुरतोऽहं दास्याः पुत्र्या खलीकृतः। तद् किं ममेह स्थितेन? अन्यतो गमिष्यामि।

(ख) कुपितो मे आर्य्यं आत्रेयः, यावदेनं गत्वा प्रसादयिष्यामि?

(ग) हञ्जे चतुरिके! किं मामेकाकिनीम् उज्झित्वा गच्छसि?

(घ) एवमेकाकिनी चिरं भव।

---

(ग) एकाकिनीम्=असहायाम्। उज्झित्वा=परित्यज्य। (उज्झ त्यागेऽस्माद्धातोर्ल्यप्)।

(घ) नायकं निर्दिश्येति। नायकेन सहाऽवस्थानमवेत्य सस्मितायाश्चेटिकाया नायिकाम्प्रति वक्रोक्तिः—एवमेकाकिनी चिरम्भवेति। (दयितमनोरथसिद्ध्यर्थं नायिकाया एकान्तस्थितिरेव समुचितेति भावः। (अथवा) पतिनिकटावस्थितिरेव स्त्रीणाम्प्रधानतयाऽभ्यर्थ्यते तामेवाशीरूपेण चेटी प्रतिपादयति—एवमित्यादि। सर्वदा पतिसमीपवर्त्तिनी भवेति तदर्थः।

अथानेकविश्रम्भोपायद्वारा श्रृङ्गारं समर्थ्य विदूषकस्य तदनुनयाय चेटिकायाश्च गमनोत्तरं नायको रहःस्थितां नायिकाम्प्रति वक्त्रसंयोगमभ्यर्थयते—दिनकरकरैरिति। हे मुग्धे! मनोज्ञरूपे? दिनकरस्य सूर्यस्य करैः किरणैः मृष्टं स्पृष्टम्, अत एव परिपाटलां परितः सर्वतः (सौकुमार्यातिशयेनेति भावः) रक्तां द्युतिं कान्तिं विभ्रत् दधत्। तथा—संसर्पद्भिः प्रसरद्भिः दशनकिरणैः दशनानां दन्तानां किरणानि मयूखानि तैः। स्मितप्रकाशितैर्दशनमौक्तिकद्युतिपुञ्जैरित्यर्थः। अस्फुटाः

यदि मुखमिदं मुग्धे ! सत्यं समं कमलेन ते
मधु मधुलिहः किन्नैतस्मिन् पिबन् प्रविभाव्यते?॥१२॥

नायिका—(विहस्य मुखमन्यतो नयति)।

नायकः—(तदेव पठति)।

चेटी—(पटाक्षेपेण प्रविश्य उपसृत्य)। (क) एसो क्खु अज्जमित्तावसू कज्जेण केणावि कुमारअं पेक्खिदुमिच्छदि।

नायकः—प्रिये ! गच्छ त्वमात्मनो गृहम्, अहमपि मित्रावसुं दृष्ट्वा त्वरितमागत एव।

नायिका—(चेट्या सह निष्क्रान्ता)।

(ततः प्रविशति मित्रावसुः)

---

(क) एष खल्वार्य्यमित्रावसुः कार्य्येण केनापि कुमारं प्रेक्षितुमिच्छति।

---

स्फुटाः सम्पादिताः स्फुटीकृताः स्पष्टीकृता इत्यर्थः (अभूततद्भावे च्विः) केसराः किञ्जल्का यस्मिन् तत् (किञ्जल्कः केसरोऽस्त्रियामित्यमरः)। इदं मल्लोचनगोचरीभूतमित्यर्थः। ते तव मुखम् आननं यदि यदा सत्यं यथार्थतः कमलेन समं तुल्यम्। (तदा) एतस्मिन् तव मुखकमले इत्यर्थः। मधुकरो भ्रमरो मधु पुष्परसं पिबन् पानविषयत्वेन साक्षात्कुर्वन् (नात्र मधुनो वैकल्यमपि तु पानकर्तुरेवेति पिबन् पदं द्योतयति) किं कथं न प्रविभाव्यते दृश्यते (अस्माभिरिति शेषः)। युक्तञ्चात्र मधुकरस्य मधुपानमिति भावः। दशनकिरणेषु केसरत्वारोपाद्रूपकालङ्कारः। तदनुप्राणितः कमलेन सममित्युपमालङ्कारः। प्रियास्यकमले मदास्यभ्रमरस्यैव मधुपानौचित्यान्मयैव चुम्बनद्वारा तद्विधेयमिति रसवदुक्त्या रसवदलंकारः। अलङ्कारत्रयस्यात्र संसृष्टिः। हरिणीवृत्तम्॥ १२॥

पटाक्षेपेण=पटस्य जवनिकाया आक्षेपेण अपसारणेन, जवनिकामपसार्य्येत्यर्थः। प्रविश्य=प्रवेशं कृत्वा।

चुम्बनं लोकधर्मं च तथा गुह्यं न कारयेत्।
केनचिद्वचनार्थेन तस्य भेदं प्रयोजयेत्॥

इत्युक्त्या यावत्सम्भोगवर्णनस्य प्रतिषिद्धत्वात्तन्निरोधाय चेटिकाप्रवेश इति भावः।

(क) परिपोषमुपगते शृङ्गारे मग्नस्य नायकस्य तदङ्गिनि वीरे प्रवेशाय प्रियाभर्तुर्मित्रावसोः प्रवेशमभिधत्ते—एष खल्विति।

मित्रावसुः—

अनिहत्य तं सपत्नं कथमिव जीमूतवाहनस्याहम्।
कथयिष्यामि हृतं तव राज्यं रिपुणेति निर्लज्जः॥१४॥

अनिवेद्य च न युक्तं गन्तुमिति निवेद्य गच्छामि। कुमार! मित्रावसुः प्रणमति।

नायकः—( मित्रावसुं दृष्ट्वा ) मित्रावसो! इत आस्यताम्।

मित्रावसुः—( निरूप्य उपविशति )।

नायकः—( निरूप्य ) मित्रावसो! ससंरम्भ इव लक्ष्यसे?

मित्रावसुः—कः खलु मतङ्गहतके संरम्भः?

नायकः—किं कृतं मतङ्गेन?

मित्रावसुः—स्वनाशाय किल युष्मदीयं राज्यमाक्रान्तम्।

---

नायकान्तिकमागतो मित्रावसुः सिद्धं मतङ्गवृत्तं हृदि निधाय स्वगतमाह—अनिहत्येति। अहम् मित्रावसुः जीमूतवाहनस्य वीराग्रगण्यस्य मत्सम्बन्धिन इत्यर्थः तं प्रसिद्धं सपत्नं शत्रुं ( रिपुवैरिसपत्नारिरित्यमरः ) अनिहत्य अविनाश्य रिपुणा शत्रुणा ( मतङ्गेनेति शेषः ) तव राज्यं जनपदाधिपत्यं हृतम् स्वायत्तीकृतम् इतीत्येवं रूपं निर्लज्जः त्यक्तव्रीडः ( निर्गता लज्जा यस्य सः। लज्जाया निष्क्रान्तो निर्लज्जः इत्युभयथा विग्रहः सम्भवति )। सन् कथमिव केन प्रकारेणेत्यर्थः। कथयिष्यामि निवेदयिष्यामि नैव लज्जावशात्कथितुं समर्थोऽस्मीत्यर्थः। नायकम्प्रति शत्रुकृतराज्याक्रमणोदन्ताऽनिवेदने लज्जारूपहेतोः पदार्थगतत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। आर्या वृत्तम्॥ १४॥

मित्रावसुचित्तावर्जनप्रकारमाह नायकः—मित्रवसो इत आस्यतामिति। ( संरम्भाविज्ञानान्नायकस्यैवमुक्तिः )।

अथाऽवधानात्संरम्भं विज्ञाय नायकोक्तिः—ससंरम्भ इव लक्ष्यसे इति। संरम्भः कोपावेगस्तेन सहित इत्यर्थः। लक्ष्यसे=प्रतीयसे (मुखरागादिभिरिति शेषः)

कः खलु मतङ्गहतके संरम्भः। मतङ्गस्यातितुच्छत्वात्संरम्भाविषयत्वेन नात्र संरम्भ इति वक्तुमुचितमित्यर्थः। (अथवा) निन्दितं मतङ्गं हन्तुं कः खलु संरम्भः, संरम्भमन्तरैव तद्विनाशसम्भव इति भावः।

मित्रावसुना सिद्धवत्प्रतिपादिते नायकः पुनः पृच्छति—किं कृतं मतङ्गेनेति। किं कृतं किमपकृतमित्यर्थः।

शत्रुकृतराज्याक्रमणप्रतिपादनस्याऽनुचितत्वं विशङ्कमानो मित्रावसु र्भावि-

यदि मुखमिदं मुग्धे ! सत्यं समं कमलेन ते
मधु मधुलिहः किन्नैतस्मिन् पिबन् प्रविभाव्यते?॥१३॥

नायिका—(विहस्य मुखमन्यतो नयति)।

नायकः—(तदेव पठति)।

चेटी—(पटाक्षेपेण प्रविश्य उपसृत्य)। (क) एसो क्खु अज्जमित्तावसू कज्जेण केणावि कुमारअं पेक्खिदुमिच्छदि।

नायकः—प्रिये ! गच्छ त्वमात्मनो गृहम्, अहमपि मित्रावसुं दृष्टवा त्वरितमागत एव।

नायिका—(चेट्या सह निष्क्रान्ता)।

(ततः प्रविशति मित्रावसुः)

---

(क) एष खल्वार्य्यमित्रावसुः कार्य्येण केनापि कुमारं प्रेक्षितुमिच्छति।

---

स्फुटाः सम्पादिताः स्फुटीकृताः स्पष्टीकृता इत्यर्थः (अभूततद्भावे च्विः) केसराः किञ्जल्का यस्मिन् तत् (किञ्जल्कः केसरोऽस्त्रियामित्यमरः)। इदं मल्लोचनगोचरीभूतमित्यर्थः। ते तव मुखम् आननं यदि यदा सत्यं यथार्थतः कमलेन समं तुल्यम्। (तदा) एतस्मिन् तव मुखकमले इत्यर्थः। मधुकरो भ्रमरो मधु पुष्परसं पिबन् पानविषयत्वेन साक्षात्कुर्वन् (नात्र मधुनो वैकल्यमपि तु पानकर्तुरेवेति पिबन् पदं द्योतयति) किं कथं न प्रविभाव्यते दृश्यते (अस्माभिरिति शेषः)। युक्तञ्चात्र मधुकरस्य मधुपानमिति भावः। दशनकिरणेषु केसरत्वारोपाद्रूपकालङ्कारः। तदनुप्राणितः कमलेन सममित्युपमालङ्कारः। प्रियास्यकमले मदास्यभ्रमरस्यैव मधुपानौचित्यान्मयैव चुम्बनद्वारा तद्विधेयमिति रसवदुक्त्या रसवदलंकारः। अलङ्कारत्रयस्यात्र संसृष्टिः। हरिणीवृत्तम्॥ १३॥

पटाक्षेपेण=पटस्य जवनिकाया आक्षेपेण अपसारणेन, जवनिकामपसार्य्येत्यर्थः। प्रविश्य=प्रवेशं कृत्वा।

चुम्बनं लोकधर्मं च तथा गुह्यं न कारयेत्।
केनचिद्वचनार्थेन तस्य भेदं प्रयोजयेत्॥

इत्युक्त्या यावत्सम्भोगवर्णनस्य प्रतिषिद्धत्वात्तन्निरोधाय चेटिकाप्रवेश इति भावः।

(क) परिपोषमुपगते शृङ्गारे मग्नस्य नायकस्य तदङ्गिनि वीरे प्रवेशाय प्रियाभर्तुर्मित्रावसोः प्रवेशमभिधत्ते—एष खल्विति।

मित्रावसुः—

अनिहत्य तं सपत्नं कथमिव जीमूतवाहनस्याहम्।
कथयिष्यामि हृतं तव राज्यं रिपुणेति निर्लज्जः ॥१४॥

अनिवेद्य च न युक्तं गन्तुमिति निवेद्य गच्छामि। कुमार! मित्रावसुः प्रणमति।

नायकः—( मित्रावसुं दृष्ट्वा ) मित्रावसो! इत आस्यताम्।

मित्रावसुः—( निरूप्य उपविशति )।

नायकः—( निरूप्य ) मित्रावसो! ससंरम्भ इव लक्ष्यसे?

मित्रावसुः—कः खलु मतङ्गहतके संरम्भः?

नायकः—किं कृतं मतङ्गेन?

मित्रावसुः—स्वनाशाय किल युष्मदीयं राज्यमाक्रान्तम्।

---

नायकान्तिकमागतो मित्रावसुः सिद्धं मतङ्गवृत्तं हृदि निधाय स्वगतमाह—अनिहत्येति। अहम् मित्रावसुः जीमूतवाहनस्य वीराग्रगण्यस्य मत्सम्बन्धिन इत्यर्थः तं प्रसिद्धं सपत्नं शत्रुं ( रिपुवैरिसपत्नारिरित्यमरः ) अनिहत्य अविनाश्य रिपुणा शत्रुणा ( मतङ्गेनेति शेषः ) तव राज्यं जनपदाधिपत्यं हृतम् स्वायत्तीकृतम् इतीत्येवं वृत्तं निर्लज्जः त्यक्तव्रीडः ( निर्गता लज्जा यस्य सः। लज्जाया निष्क्रान्तो निर्लज्जः इत्युभयथा विग्रहः सम्भवति )। सन् कथमिव केन प्रकारेणेत्यर्थः। कथयिष्यामि निवेदयिष्यामि नैव लज्जावशात्कथितुं समर्थोऽस्मीत्यर्थः। नायकम्प्रति शत्रुकृतराज्याक्रमणोदन्ताऽनिवेदने लज्जारूपहेतोः पदार्थगतत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। आर्या वृत्तम् ॥ १४ ॥

मित्रावसुचित्तावर्जनप्रकारमाह नायकः—मित्रवसो इत आस्यतामिति। ( संरम्भाविज्ञानान्नायकस्यैवमुक्तिः )।

अथाऽवधानात्संरम्भं विज्ञाय नायकोक्तिः—ससंरम्भ इव लक्ष्यसे इति। संरम्भः कोपावेगस्तेन सहित इत्यर्थः। लक्ष्यसे=प्रतीयसे (मुखरागादिभिरिति शेषः)

कः खलु मतङ्गहतके संरम्भः। मतङ्गस्यातितुच्छत्वात्संरम्भाविषयत्वेन नात्र संरम्भ इति वक्तुमुचितमित्यर्थः। (अथवा) निन्दितं मतङ्गं हन्तुं कः खलु संरम्भः, संरम्भमन्तरैव तद्विनाशसम्भव इति भावः।

मित्रावसुना सिद्धवत्प्रतिपादिते नायकः पुनः पृच्छति—किं कृतं मतङ्गेनेति। किं कृतं किमपकृतमित्यर्थः।

शत्रुकृतराज्याक्रमणप्रतिपादनस्याऽनुचितत्वं विशङ्कमानो मित्रावसु र्भावि-

नायकः—( सहर्षमात्मगतम् ) अपि नाम सत्यमेतत् स्यात् ?

मित्रावसुः—अतस्तदुच्छित्तये आज्ञां दातुमर्हति कुमारः ।

किं बहुना ?—

संसर्पद्भिः समन्तात् कृतसकलवियन्मध्ययानैर्विमानैः
कुर्वाणाः प्रावृषीव स्थगितरविरुचः श्यामतां वासरस्य ।
एते याताश्च सद्यस्तव वचनमितः प्राप्य युद्धाय सिद्धाः
सिद्धश्चोद्वृत्तशत्रुक्षणभयविनमद्राजकं ते स्वराज्यम् ॥१५॥

---

शत्रुपराजयसूचनपूर्वकमाह—स्वनाशायेत्यादि । ( युष्मदीयमित्युक्त्या तस्य साहसिकत्वं प्रकाशितम् ) । ( राज्यमित्युक्त्या तदपराधस्याऽमर्षणीयत्वं द्योतितम् ) । किलशब्दोऽत्र वार्तायाम् वार्ताऽप्यसहनीयेति संरम्भः ।

मतङ्गकर्तृकात्मराज्याक्रमणोदन्तमाकर्ण्य प्रहृष्टो नायकः स्वयं तन्निरूपयति—अपि नाम सत्यमेतत् स्यादिति । एतद् शत्रुकृतराज्याक्रमणात्मकं वृत्तं सत्यमेवाऽस्त्वित्यर्थः । ( पितृसेवासक्तं मामवेत्य सहसाऽपहृतेऽस्मद्राज्येऽस्मन्मनोरथसिद्धिरेवेति हर्षः )

एवं नायकस्य चेतोऽभिप्रायमविज्ञाय संरम्भेण मित्रावसुराह—अतस्तदुच्छित्तय आज्ञां दातुमर्हति कुमार इति । अतः = राज्याक्रमणाद्धेतोः । तदुच्छित्तये = तस्य मतङ्गस्य विनाशायेत्यर्थः । केवलं चात्र त्वदादेश एवाऽपेक्षणीय इति भावः । किं बहुनेति—अलं साध्य-साधनाऽभिधानेनेत्यर्थः ।

साध्यस्य सिद्धत्वं प्रतिपादयति—संसर्पद्भिरिति । संसर्पद्भिः सम्भूय प्रसरद्भिः समन्तात् सर्वतः कृतं विहितं सकलस्य समग्रस्य वियतोऽन्तरीक्षस्य मध्येऽन्तराले यानं सञ्चारो यैस्तादृशैर्विमानैर्व्योमयानैः । प्रावृषि इव वर्षास्विव स्थगितास्तिरोहिताः रवेः सूर्यस्य रुचो दीप्तयो यस्मिन् तादृशस्य वासरस्य दिनस्य श्यामतां कृष्णवर्णतां कुर्वाणाः सम्पादयन्तः । एते सिद्धाः तदाख्यदेवयोनयः तव वचनमादेशं प्राप्य सद्यः सपदि इतोऽस्मात्स्थानात् युद्धाय युद्धं कर्तुं याता गन्तुमुत्सुकाः ( वर्तन्त इति शेषः ) असद्वृत्तेः उच्छृङ्खलस्य शत्रोर्मतङ्गस्य ( यत् ) क्षणभयं स्वल्पकालिकप्राणभयं तेन विनमत् विशेषेण नम्रीभवत् राजकं राजसमूहो यत्र तादृशं ते स्वराज्यं सिद्धं च । द्रुतमेव ते स्वराज्यं रिपुकरोद्धृतं भविष्यतीति भावः । भाविसैन्ययानस्य भाविराज्यसिद्धेश्च भूतवद्वर्णनात्कालविपर्ययात्मिकाऽतिशयोक्तिरलङ्कारः । यानक्रिया-सिद्धिक्रिययोर्युगपदभिधानात् समुच्चयालङ्कारश्चेति द्वयोः संसृष्टिः । स्रग्धरा वृत्तम् ॥१५॥

अथवा, किं बलौघैः ?—

एकाकिनाऽपि हि मया रभसावकृष्ट-
निस्त्रिंशदीधितिसटाभरभासुरेण ।
आरान्निपत्य हरिणेव मतङ्गजेन्द्रम्
आजौ मतङ्गहतकं हतमेव विद्धि ॥१६॥

नायकः—( कर्णौ पिधायाऽऽत्मगतम् ) अहह ! दारुणमभिहितम्, अथवा एवं तावत् । ( प्रकाशम् ) मित्रावसो ! कियदेतत् ? बहुतरमपि बाहुशालिनि त्वयि सम्भाव्यते । किन्तु,—

---

प्राक् शत्रूच्छेदाय सैन्यसाहाय्यमभिधाय साम्प्रतं संरम्भेण तत्साधकत्वं प्रतिपादयति—एकाकिनेति । रभसेन वेगेन अवकृष्टस्य कोशादुद्धृतस्य निस्त्रिंशस्य खड्गस्य दीधितीनां दीप्तीनामेव सटानां जटानां भरेण बाहुल्येन (करणेन) भासुरेण समुज्ज्वलेन एकाकिना असहायेनापि मया (साध्यनिष्प्रत्यूहत्वमात्मशौर्यञ्चाऽपिशब्दो द्योतयति) । हरिणा सिंहेन मतङ्गजेन्द्रं करिराजमिव आजौ संग्रामे आरात् समीपे द्रुतमेवेत्यर्थः निपत्य समेत्य मतङ्गहतकं कुत्सितं मतङ्गमित्यर्थः । हतमेव विनाशितमेव विद्धि जानीहि । अत्रोपमाऽलङ्कारः । छन्दश्चात्र वसन्ततिलकं नाम । ज्ञेयं वसन्ततिलकं तभजा जगौ गः । इति लक्षणात् ॥ १६ ॥

इत्थमरिदण्डसूचकवचोनिशम्य परमदयालुर्नायकः कर्णपिधानपूर्वकं चेतसि विचारयति—अहह दारुणमभिहितमित्यादि । कर्णौ=श्रोत्रे । पिधाय=आच्छाद्य । ( अपिपूर्वकाद् दधातेर्ल्यप् भागुरिमतेऽपेरकारलोपः ) अहह=( एष निपातसमुदायः परुषोक्तेर्दुःसहत्वद्योतकः ) । दारुणम्=रौद्रम्-कठिनमिति यावत् । अभिहितम्=उक्तम् । निग्रहोक्तेरेव दुःसहत्वं तत्क्रियायास्तु सुतरां तदिति भावः । परुषवचसोत्तरं निश्चित्यापि तत्रातिदोषाच्छान्तपक्षमाश्रित्याह—अथवा एवं तावदिति । ( कथयिष्यामीति शेषः ) । कियदेतत्=एतत् मतङ्गनिग्रहरूपमित्यर्थः । कियत् किं प्रमाणम्-अतितुच्छमित्यर्थः । मतङ्गनिग्रहादस्मद्राज्योद्धरणं भवत्कृतेऽतिसाधारणमिति भावः । बाहुशालिनि = भुजबलसम्पन्ने । त्वयि=भवति । बहुतरम्=अतिशयम् । ( वीर्यमिति शेषः ) । अपि सम्भाव्यते=सम्भावनार्हत्वेन कल्प्यते । भवादृशोऽतिवीरो मतङ्गनिग्रहापेक्षयाऽतिपरुषकार्यसम्पादनेऽपि समर्थ इति भावः । एवं तर्ह्यादेशविलम्बे को हेतुरित्याशङ्कां पक्षान्तरेणोत्तरयति—किन्त्विति । भवत्साध्यकार्यस्य प्रतिषेधः प्रतिपाद्यत इत्यर्थः ।

स्वशरीरमपि परार्थे यः खलु दद्यामयाचितः कृपया ।
राज्यस्य कृते स कथं प्राणिवधक्रौर्य्यमनुमन्ये ? ॥१७॥

अपि च—क्लेशान् विहाय मम शत्रुबुद्धिरेव नान्यत्र । यदि त्वमस्मत्प्रियं कर्त्तुमीहसे, तदनुकम्प्यतामसौ क्लेशदासीकृतो राज्यस्य कृते तपस्वी ।

मित्रावसुः—( सामर्षं सहासं च ) कथं नानुकम्पनीय ईदृशोऽस्माकमुपकारी कृपणश्च !!

---

साध्यनिषेधमपि प्रतिपादयति—स्वशरीरमपि । यः ( अहमिति शेषः ) खलु निश्चयेन ( निश्चयार्थकोऽत्र खलुशब्दः ) अयाचितोऽप्रार्थितः सन् दयया कारुण्येन परार्थे स्वातिरिक्तप्राणिमात्रजीवरक्षार्थमित्यर्थः । स्वशरीरम् अपि दद्याम् दातुं शक्नुयाम् । सः (अहमिति शेषः) । राज्यस्य कृते राज्यनिमित्तमित्यर्थः । प्राणिवधक्रौर्यं जीवहिंसात्मकं क्रूरकर्मेत्यर्थः । ( कर्तुमिति शेषः ) । कथं केन प्रकारेण अनुमन्ये आदिशामि । अनुमोदनं करोमीति यावत् । अपि तु नैवानुमोदनयोग्यं तदिति तदर्थः । परार्थमात्मकायविसर्जनक्षमस्य मे न राज्यकृते जीवविघातोऽनुमोदनीय इति भावः । कथं प्राणिवधक्रौर्यमनुमन्येऽपि तु नैवानुमन्ये इत्यर्थस्याऽऽपाततः प्रतीतेरर्थापत्तिरलङ्कारः । आर्यावृत्तम् ॥ १७ ॥

प्रकारान्तरेणाऽपि ततो व्यावर्त्तयितुमाह—अपि चेति । क्लेशान्=दुःखानि ( लोकानामिति शेषः ) । विहाय = वर्जयित्वा । अन्यत्र=पुरुषान्तरे । मम=विचारशीलस्येत्यर्थः । शत्रुबुद्धिरेव न=अयं शत्रुरिति धारणैव न भवतीत्यर्थः । लोकक्लेशातिरिक्तो नास्ति मे शत्रुरिति भावः । ईहसे=चेष्टसे । अनुकम्प्यताम्=दयाविषयीक्रियताम् । असौ=मतङ्गः । क्लेशदासीकृतः=क्लेशपरतन्त्रः । राज्यस्य कृते=राज्यलाभार्थम् । तपस्वी=वराकः । क्लेशपरतन्त्रः क्षुद्रो मतङ्गो राज्यार्थं दयाविषयीक्रियताम्भवद्भिरिति भावः ।

( पक्षान्तरे ) क्लेशान्=योगशास्त्रोक्तान् अविद्या-स्मित-राग-द्वेष-अभिनिवेशान् पञ्चविधानित्यर्थः । अविद्यादिपञ्चस्वेवात्मनो मूलोच्छेदहेतुत्वाच्छत्रुत्वं नान्यत्रेति भावः । विहाय=परित्यज्य । क्लेशदासीकृतः=क्लेशैरुक्तपञ्चविधैरस्मद्वैरिभिरित्यर्थः । दासीकृतः अविद्यातत्कार्येष्वेव परिभ्रमन्नित्यर्थः । वस्तुतस्तस्य मोहग्राहग्रस्ततयाऽपकर्षस्यैव सम्भवो नाऽस्मद्राज्यापहरणादभ्युदय इति भावः । ( तपस्वीत्युक्त्या तस्याऽविवेकित्वेन लाघवं लक्ष्यते ) । ( एतेन नेतुर्दयोत्साहानुबन्धः सूच्यते ) ।

नायकोक्तिमाकर्ण्य संरम्भेण तदाशयमनवगच्छन् मित्रावसुर्हासपूर्वकं तत्प्रत्याक्षिपति—कथं नानुकम्पनीय इति । अनुकम्पनीयः=अनुकम्पार्हः इत्यर्थः । उपकारी=उपकारशीलः । कृपणो=दीनः (क्षुद्रश्च) । अपकारशीलत्वादत्युद्धतत्वाच्च नायमनुकम्पार्हः इति विरुद्धलक्षणयाऽर्थो बोध्यः ।

नायकः—( स्वगतम् ) अनिवार्य्यसंरम्भः कोपाक्षिप्तचेता न तावदयं शक्यते निवर्त्तयितुम्; तदेवं तावत् । ( प्रकाशम् ) मित्रावसो ! उत्तिष्ठ, अभ्यन्तरमेव प्रविशावः, तत्रैव तावत् त्वां बोधयिष्यामि, सम्प्रति परिणतमहः । तथाहि—

निद्रामुद्राऽवबन्धव्यतिकरमनिशं पद्मकोषादपास्यन्
आशापूरैककर्मप्रवणनिजकरप्राणिताशेषविश्वः ।
दृष्टः सिद्धैः प्रसक्तस्तुतिमुखरमुखैरस्तमप्येष गच्छन्
एकः श्लाघ्यो विवस्वान् परहितकरणायैव यस्य प्रसादः ॥१८॥

( इति निष्क्रान्ताः सर्वे )

इति तृतीयोऽङ्कः ।

---

एवमुक्तवचसा मित्रावसोः प्रवृद्धं कोपं वीक्ष्य तत्सान्त्वनाय नायकः स्वगतमाह—अनिवार्यसंरम्भ इति । अनिवार्यो निवारणायोग्यः संरम्भः कोपावेगो यस्य तादृशः । दुर्निवारकोपावेग इत्यर्थः । कोपेन क्रोधेनाऽऽक्षिप्तं व्याप्तं व्याकुलीकृतमिति यावत् चेतो हृदयं यस्य तादृशः, अयम् = मित्रावसुः । निवर्तयितुम् = व्यावर्तयितुम् ( उक्तकार्यादिति शेषः ) । प्रकाशमाह—बोधयिष्यामि = विशेषेण ज्ञापयिष्यामीत्यर्थः । ( उक्तमर्थमिति शेषः ) । अङ्कावसानस्यैकदिवसप्रयोज्यत्वात्प्रस्तुतं सन्ध्यासमयं सूचयति—सम्प्रति परिणतमहः । परिणतम् = परिणामं प्राप्तम् अतीतप्रायमिति यावत् । अहः = दिनम् ।

परार्थसाधनत्वेनैवात्मदेहमाजीवं सफलयामीति विवेकं शिष्टदृष्टान्तद्वारा दृढीकरोति—निद्रेति । पद्मकोषात् कमलमुकुलात् ( कोषोऽस्त्री कुड्मले खड्गपिधाने इति विश्वः ) । अनिशं सर्वदा निद्रामुद्रावबन्धव्यतिकरम् निद्राऽविकास एव मुद्रावबन्धः संकोचाऽवस्थानं तस्य व्यतिकरं सम्पर्कम् अपास्यन् तिरस्कुर्वन् । तथा—आशानां दिशां पूरः स्वतेजसा पूरणमेव एकं मुख्यं कर्म तत्र प्रवणैस्तत्परैर्निजकरैरात्मकिरणैः प्राणितं जीवितम् अशेषं समस्तं विश्वं जगत् येन तादृशः । तथा—अस्तं गच्छन् अपि प्रसक्ताभिः प्रस्तुताभिः मुखराणि सशब्दानि मुखानि येषां तादृशैः । सिद्धैर्देवयोनिविशेषैर्दृष्टो वीक्षितः एकोऽद्वितीय एष विवस्वान् सूर्यः श्लाघ्यः प्रशंसनीयः । यस्य विवस्वत इत्यर्थः प्रसाद उदयः प्रसन्नता च, परेषामन्येषां हितकरणायैव शुभसम्पादनायैव (वर्तत इति क्रियाशेषः) । यथा विवस्वतो जगद्रक्षार्थमेवोदयस्तथाऽन्येषामप्युन्नतिर्लोकोपकारार्थमेव युक्तेति मतङ्गोऽनुग्राह्य इति भावः । श्लेष-समासोक्त्योः संसृष्टिः । स्रग्धरा वृत्तम् ॥१८॥

इति नागानन्दव्याख्यायां पीयूषवर्षिण्यां तृतीयोऽङ्कः ।

# अथ चतुर्थोऽङ्कः ।

—※—

( ततः प्रविशति कञ्चुकी गृहीतरक्तवस्त्रयुगलः प्रतीहारश्च )

कञ्चुकी ।—

अन्तः पुराणां विहितव्यवस्थः
पदे पदे संस्खलितानि पश्यन् ।
जरातुरः सम्प्रति दण्डनीत्या
सर्वां नृपस्यानुकरोमि वृत्तिम् ॥१॥

---

अथ नायकेनाऽऽत्मनः परार्थसाधकत्वमभिदर्शयिष्यमाणस्य भाविवृत्तस्य विष्कम्भकेणाऽभिसूचनाय कञ्चुकि-प्रतीहारयोः प्रवेशं सूचयति—ततः प्रविशतीत्यादिना । उक्तञ्च विष्कम्भकलक्षणं यथा—

वृत्त-वर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥

इति । कञ्चुकिलक्षणं यथा—

अन्तःपुरचरो विप्रो वृद्धो गुणगणान्वितः ।
सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥

इति । गृहीतवस्त्रयुगलः—गृहीतं वस्त्रयुगलं येन सः ।

उक्तलक्षणलक्षितः कञ्चुकी स्वोक्त्यैवात्मनो वार्धक्यं प्रकाशयति—अन्तःपुराणामिति । अन्तःपुराणां नृपावरोधानाम् (स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनमित्यमरः) विहिता नियोक्तृत्वेन निर्व्यूढा सम्पादिता इति यावत् व्यवस्था चेटी-मूक-वामनादीनां स्वकार्यानुरोधात् विषय-देश-क्रियादिभिर्लक्ष्यैर्येन तादृशः । तथा—पदे पदे एकैकस्य पदस्य विन्यासे इत्यर्थः । स्खलितानि अशक्तिपारवश्यान्निरूपितेतरस्थानं—प्राप्तानि गतिस्खलनानीत्यर्थः । रक्षन् ( पतनादिति शेषः ) स्खलनेऽपि दण्डबलेनाऽभ्यासेन च कथञ्चिदपतन्नित्यर्थः । तथा—जरया वार्द्धक्येन आतुरो व्याकुलीकृतः अहम् सम्प्रति अधुना विश्रान्तियोग्यकालेऽपीत्यर्थः । दण्डनीत्या यष्टिग्रहणेन नृपस्य राज्ञः सर्वां निरशेषां वृत्तिं व्यवहारम् आचारमिति

प्रतीहारः—आर्य्य वसुभद्र ! क नु खलु भवान् प्रस्थितः ?

कञ्चुकी—आदिष्टोऽस्मि देव्या मित्रावसुजनन्या, "कञ्चुकिन् ! दशरात्रं त्वया यावन्मलयवत्या जामातुश्च रक्तवासांसि नेतव्यानि"। कुत्र प्रथमं गच्छामि । राजदुहिता च श्वशुरकुले वर्त्तते । जीमूत-

---

यावत्। अनुकरोमि अनुसरामि । अन्तःपुरव्यवस्थादिविधानाद्राजेव वर्तेऽहमिति भावः ।

नृपपक्षेऽप्याद्यविशेषणद्वयं संघटते तथाहि—नृपोऽपि दण्डनीत्या दण्डविधायकनीतिशास्त्रग्रहणेन पुराणां राज्यानामन्तर्मध्ये विहिता सम्यग्विनियोजिता व्यवस्था वर्णाश्रमादिकृत्यमर्यादा येन तादृशः। विहितराज्यकृत्य इत्यर्थः। तथा—पदे पदे स्थाने स्थाने स्खलितानि दण्ड्य-दण्डनादिकृत्यविषयेष्वनवधानजनितविरुद्धाचरणक्रमलंघनादीनीत्यर्थः। रक्षन् रुन्धन् स्खलितस्य प्रसरं निरुन्धन्निति भावः। (तिष्ठतीति शेषः)। (उत्साहिनो नृपस्यात्मानं प्रत्युपमानत्वाऽभिधानात्स्वात्मनि सनिर्वेदोऽपहासो द्योत्यते)। पूर्वार्द्धोपात्तविशेषणद्वयस्य दण्डनीतिपदस्य च द्व्यर्थत्वादत्र श्लेषालंकारः। तदनुजीवित उपमालङ्कारश्च। उपजातिवृत्तम्। लक्षणञ्चास्य यथा—

स्यादिन्द्रवज्रा कथितौ जगौ गः।
उपेन्द्रवज्रा प्रथमे लघौ सा॥
अनन्तरोदीरितलक्ष्मभाजौ
पादौ यदीयावुपजातयस्ताः॥ इति ॥१॥

अथ कञ्चुकि-प्रतीहारयोर्मिथो भापगाय प्रतीहारः पृच्छति—आर्य्येत्यादि। (श्रेष्ठत्वसूचकमिदं सम्बोधनम्)। क्वनु खल्विति निपातसमुदायः प्रश्नर्वितर्कनिश्चयार्थकः। क्वनु खलु भवान् प्रस्थितः=प्राप्यत्वेन कं देशमभ्युपेत्य गन्तुमुपक्रान्तोऽस्तीत्यर्थः। (एतेन भिन्न-भिन्न सन्देशप्रवृत्तयोभयस्य यादृच्छिकः समागमः सूच्यते)।

प्रतीहारोक्तमाकर्ण्य तदुत्तरमाह कञ्चुकी—आदिष्टोऽस्मीत्यादि। आदिष्टोऽस्मि = आज्ञप्तोऽस्मीत्यर्थः। मित्रावसुजनन्या=मित्रावसुमात्रेत्यर्थः। (एतेन मित्रावसोरतिप्रसिद्धत्वात्तत्सम्बन्धेन मातुर्गौरवातिशयस्तदादेशस्याऽसामर्थ्येऽप्यवश्यकर्त्तव्यत्वञ्च द्योत्यते)। (कञ्चुकिन्नित्यादि-नेतव्यानीत्यन्तमादेशस्वरूपम्)। दशरात्रं यावत्=दशरात्रावधि। (ततोऽन्यत्रापि दृश्यत इत्युक्त्या यावच्छब्दयोगे द्वितीया)। रक्तवासांसि=प्रत्यहं कन्यावरयोः परिधानीयोत्तरार्थं देयानि रक्तवस्त्राणीत्यर्थः। (सम्पदर्थमिति शेषः)? तयोर्भिन्नदेशवर्तित्वम्वीक्ष्य पुनरभिधत्ते—कुत्र प्रथमं गच्छ-

वाहनोऽपि युवराजेन सह समुद्रवेलां द्रष्टुमद्य गत इति श्रूयते, तन्न जाने, किं राजपुत्र्याः सकाशं गच्छामि, अथवा जामातुरिति ।

प्रतीहारः—आर्य्य ! वरं राजपुत्र्याः समीपगमनम्; तत्र हि कदाचिदियत्या वेलया जामाता स्वयमेवागतो भविष्यति ।

कञ्चुकी—सुनन्द ? साधूक्तम् । अथ भवान् पुनः क्व प्रस्थितः ?

प्रतीहारः—अहमपि समादिष्टोऽस्मि महाराजविश्वावसुना, यथा—"भोः सुनन्द ! गच्छ, मित्रावसुं ब्रूहि, अस्मिन् दीपप्रतिपदुत्सवे मलयवत्या जामातुश्च यत् किञ्चित् प्रदीयते, तदुत्सवानुरूपं किञ्चिदागत्य

---

सीति । क्व मे वासोयुगेन सह निर्गमो भवेदित्यर्थः । सन्देहोत्तरं विचारयति—राजदुहिता च श्वशुरकुले वर्तत इति ( श्वशुरकुल इत्युक्त्या तस्या गुरुजनान्तिकस्थितिः सूच्यते)। जीमूतवाहनोऽपि=राज्ञो जामाताऽपीत्यर्थः । (भाविनमर्थं संघटयितुमिति शेषः ) । समुद्रवेलाम् = समुद्रजलस्योत्प्लवनम् । अद्य गतः = (अद्येत्युक्त्या प्रत्यागमनविलम्बः सूच्यते ) । तत् = तस्मात्-उभयोर्भिन्नदेशवर्त्तित्वाद्धेतोरित्यर्थः । न जाने = न निश्चेतुं शक्नोमि ( कुत्र प्रथमं गच्छसीति पूर्ववाक्यमनुवर्तनीयम् ) ।

एवं कञ्चुकिवचो निशम्य प्रतीहारः प्रतिवचनरूपेण तम्प्रत्याह—आर्य ! वरं राजपुत्र्याः समीपगमनमिति । तत्र = राजपुत्रीसमीपे । हि = यतः । कदाचित् = कथमपि । इयत्या वेलया = इयता कालेनेत्यर्थः । ( एतेन समयबाहुल्यात्प्रत्यागमनं सम्भाव्यते ) ।

एवं प्रतीहारोक्त्या लाघवम्विज्ञायाऽनुवदति कञ्चुकी—सुनन्दः ! साधूक्तमिति । सुनन्देति प्रतीहारसम्बोधनम् । साधूक्तम् = तत्र जामातुः प्रत्यागमनसम्भावनया राजपुत्रीसमीपगमनमेव युज्यत इत्यर्थः । भवान् पुनः क्व प्रस्थितः = कुत्र पुनर्भवतो गन्तुमुपक्रान्तिरित्यर्थः ।

कन्चुकिकृतां जिज्ञासां प्रतीहारः समाधत्ते—अहमपि समादिष्टोऽस्मीति । अहमपि = आवयोस्तुल्यादेशपालनप्रवृत्तिरूपमर्थमपिशब्दो जनयति । महाराजविश्वावसुना = (एतेनादेशस्य गौरवं लक्ष्यते) । दीपप्रतिपदुत्सवे = दीपप्रतिपन्नाम्नि कस्मिंश्चिन्महोत्सवे दीपमालिकमहोत्सवे वा । मलयवत्या-जामातुश्च = द्वयोः सम्बन्धीत्यर्थः । यत्किञ्चिद् = ( वस्त्रालङ्करणादि वस्त्विति शेषः ) । तदुत्सवानुरूपम्=

चिन्त्यताम्" इति । तद्गच्छतु राजपुत्र्याः सकाशमार्यः । अहमपि मित्रावसोराह्वानाय गच्छामि ।

( ततः प्रविशति जीमूतवाहनो मित्रावसुश्च ) ।

नायकः—

शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत् परार्थघटनाबन्ध्यैर्वृथा स्थीयते ॥२॥

---

तस्योत्सवस्य योग्यमित्यर्थः । आगत्य चिन्त्यताम्=(एतेन देयस्याऽऽवश्यकत्वं ध्वन्यते ) । तद् गच्छतु=आवयोः कर्तव्यस्य मिथोऽवगतत्वादिति भावः ।

एवमङ्कबहिर्भूतेन विष्कम्भकेण भाविनोऽर्थस्य सूचनोत्तरं तत्संघटनप्रकारमभिधातुं नायकस्य प्रवेशं सूचयति—ततः प्रविशतीत्यादिना ।

अथ परोपकारासक्तचेतास्तदवसराप्राप्त्या खिन्नमनास्तदुत्सुको नायकः स्वयमेव वनवासस्येप्सितसिद्धिप्रतिकूलतां समर्थयति—शय्येत्यादि । शाद्वलं हरिततृणं शय्या शयनीयम् आस्तरणमिति यावत् ( शाद्वलः शादहरिते इत्यमरः ) । तथा—सुचिशिला पवित्रपाषाणम् आसनम् । तथा-द्रुमाणां तरूणाम् अधः तलप्रदेशः सद्म गृहम् ( पत्राणामतिघनीभूतत्वादिति भावः ) । तथा—शीतं शैत्ययुक्तं निर्झरवारि गिरिनिस्सरज्जलम् पानं पेयम् तथा—कन्दाः मूलविशेषाः अशनम् भोजनम् । तथा—मृगा वन्यजन्तवः सहायाः सहवर्त्तिनः । इतीत्थम् अप्रार्थितोऽयाचितः लभ्यः प्राप्यः सर्वविभवः सकलसम्पद् यत्र तादृशे वनेऽरण्ये अयम् एको दोषः न्यूनतेत्यर्थः ( दृश्यते इति शेषः ) । यत् दुष्प्रापार्थिनि दुष्प्रापा दुर्लभा अर्थिनो याचका यस्मिन् तादृशे याचकरहित इत्यर्थः ( अस्मिन् वने ) परार्थघटनाबन्ध्यैः परेषां याचकानामर्थस्य प्रयोजनस्य घटनायां सम्पादने बन्ध्यैर्विफलैः याचकेप्सितसिद्धिमकुर्वद्भिरित्यर्थः । ( अस्माभिरिति शेषः ) । वृथा स्थीयते निष्फलं समयो नीयत इत्यर्थः । तुरीयपादोपात्तेन दुष्प्रापार्थिनि-परार्थघटनाबन्ध्यैरितिविशेषणद्वयेन याचकेप्सितसिद्धिसम्पादनादेव जीवनसाफल्यं नाऽन्यथेत्यभिप्रायसूचनादिह परिकरालङ्कारो बोध्यः । उक्तं च दर्पणकृता—

उक्तिर्विशेषणैः साऽभिप्रायैः परिकरो मतः ।

इति । वृत्तश्चेह शार्दूलविक्रीडितं नाम ॥ २ ॥

मित्रावसुः—(ऊर्द्ध्वमवलोक्य) कुमार । त्वर्य्यतां त्वर्य्यताम्, समयोऽयं चलितुमम्बुराशेः ।

नायकः—( आकर्ण्य ) सम्यगुपलक्षितम् ।—

उन्मज्जज्जलकुञ्जरेन्द्ररभसाऽऽस्फालानुबन्धोद्धतः
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानितः ।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथाऽयं तथा
प्रायः प्रेङ्खदसङ्ख्यशङ्खधवला वेलेयमागच्छति ॥३॥

---

एवं स्वावस्थां निरूप्य तिष्ठन्तं नायकम्प्रति समुद्रवेलावलोकनायोद्र्ध्वावलोकनपूर्वकं मित्रावसुरभिधत्ते—कुमार ! त्वर्य्यताम् त्वर्य्यतामिति । ऊर्द्ध्वमवलोक्य=समयज्ञानाय सूर्यम्वीक्ष्येत्यर्थः । त्वर्य्यताम् त्वर्य्यताम् = शैघ्र्यं कुर्वित्यर्थः । ( वीप्सायां द्विरुक्तिः ) । समयोऽयं चलितुमम्बुराशेः = जलधेरेष जलोत्प्लवनकाल इत्यर्थः ।

एवं मित्रावसूक्तिमाकर्ण्य तदनुसारादुदधिवेलामीक्षमाणो नायकस्तां वर्णयति—उन्मज्जदिति । उन्मज्जताम् मद—जलोत्प्लवनाभ्यामुच्चैरुत्पतताम् जलकुञ्जरेन्द्राणां मकरश्रेष्ठानाम् रभसेन वेगेन ( संरम्भेण वा ) य आस्फालः शुण्डादण्डेन जलोत्पीडनं तस्याऽनुबन्धेन नैरन्तर्येण उद्धतः प्रचण्डतां नीतः । तथा—सर्वाः समस्ताः पर्वतकन्दराणां गिरिगुहानाम् उदरभुवोऽभ्यन्तरभागान् प्रतिध्वानिताः प्रतिध्वनियुक्ताः प्रतिशब्दिता इति यावत् ( प्रतिध्वानं सञ्जातमासां ता इति विग्रहे तारकादित्वादितच् ) । कुर्वन् सम्पादयन् अत एव श्रुतिपथोन्माथी स्वस्य मांसलत्वादाक्रम्य कर्णविवरं निरुन्धन्नित्यर्थः । श्रुत्योः पन्थाः श्रुतिपथं ( ऋक्पूरब्धूःपथामानक्षे-इति समासान्तोऽच्प्रत्ययः ) । तदुन्मथितुं शीलमस्येति विग्रहे (सुप्यजातौ णिनिस्ताच्छील्ये इति ताच्छीलिको णिनिः) अयमेष उच्चैर्ध्वनिर्महान् कोलाहलो यथा यदा उच्चरति उद्गच्छति प्रसरतीति यावत् तथा तदा प्रायो बाहुल्येन प्रेङ्खन्तश्चलन्तोऽसंख्या अपरिगणिता ये शंखाः कम्बुग्रीवास्तैर्धवला श्वेतवर्णा इयं वेला समुद्रजलविकारः ( वेला काले च सीमायामब्धेः कूलविकारयोरिति मेदिनी ) (फेन इति प्रसिद्धः ) आगच्छति ( तटं प्रतीति शेषः ) । आगच्छतीत्यतः प्राक् प्रायश्शब्द सम्बन्धे तु प्राय आगच्छतीत्यस्य बाहुल्येनागच्छतीत्यर्थः । ( इति मन्ये इति शेषः ) । मन्येशब्दसद्भावादिहोत्प्रेक्षाऽलङ्कारः । छेकाऽनुप्रासश्च । शार्दूलविक्रीडितं वृत्तम् ॥३॥

मित्रावसुः—कुमार ! नन्वियमागतैव, पश्य।—

कवलितलवङ्गपल्लवकरिमकरोद्गारसुरभिणा पयसा।
एषा समुद्रवेला रत्नद्युतिरञ्जिता भाति ॥ ४ ॥

नायकः—मित्रावसो ! पश्य पश्य, शरत्समयपाण्डुभिः पयोदपटलैः प्रावृताः प्रालेयाचलशिखरश्रियमुद्वहन्त्येते मलयसानवः।

मित्रावसुः—नैवामी मलयसानवः, नागानामस्थिसंघाताः खल्वमी।

नायकः—( सोद्वेगम् ) कष्टम् ! किं निमित्तममी संघातमृत्यवो जाताः ?

---

नायकोक्तिमाकर्ण्य तामनुवदति मित्रावसुः—कुमार ? नन्वियमागतैवेति। आगतैव = प्राप्तैवेत्यर्थः। वर्तमाननिर्देशोऽत्र वेगादिनाऽऽदृत इति बोध्यम्। पश्य= ( आगताम्वेलामिति शेषः )।

तामेव वर्णयति मित्रावसुः—कवलितेति। कवलिता भक्षिता लवङ्गपल्लवा द्वीपान्तरोद्भवा इति भावः यैस्तादृशानां करिमकराणां जलहस्तिनाम् मकराणां च उद्गारेण वद्वमनेन सुरभिणा सुगन्धिना पयसा जलेन ( उपलक्षिता ) एषा समुद्रवेला समुद्रतटी ( वेला काले च जलधेस्तीर-नीरविकारयोरिति विश्वः )। रत्नानां मुक्तादीनां कान्तिभिर्द्युतिभिः रञ्जिता लिप्ता सती भाति शोभते। एकस्यैव समुद्रवेलारूपकर्तृकारकस्योपलक्षिता-रञ्जिता-भातीति क्रियात्रयेऽन्वयाद्दीपकालङ्कारः। वेलायाः शोभमानत्वे हेतुभूतस्य विशेषणद्वयस्य पदार्थगतत्वात्पदार्थहेतुकं काव्यलिङ्गञ्च। आर्यावृत्तम् ॥४॥

मित्रावसुकर्तृकं समुद्रवर्णनं निशम्य तदवलोकनप्रसङ्गादवलोकितस्याऽस्थिनिचयस्याऽतिधावल्यादचलसानुत्वेन जातामात्मनो भ्रान्तिं दृढीकरोति—मित्रावसो ! पश्य पश्येत्यादिना। शरत्समयेन शरदागमेन पाण्डुभिः स्वच्छैरित्यर्थः। पयोदपटलैः मेघसमूहैः प्रावृता व्याप्ताः प्रालेयाचलशिखरश्रियम् = हिमाद्रिशृङ्गशोभाम् उद्वहन्ति प्राप्नुवन्ति। एते=दृश्यमानाः। मलयाचलसानवः=मलयाद्रिशिखराणि।

नायकभ्रमं दूरीकर्तुमाह मित्रावसुः—कुमार ! नैवाऽमी मलयसानव इति। मलयसानवः = मलयाद्रिशिखराणीत्यर्थः। अमी = एते। नागानाम् = भोगिनाम्। अस्थिसंघाताः = अस्थिसमूहाः। ( उक्तार्थस्य प्रसिद्धिद्योतकोऽत्र खलुशब्दः )।

एवं मित्रावसुमुखादहिनिधनमवेत्य सञ्जातकरुणो नायकः खिन्नमनाः सन् पुनस्तं पृच्छति—कष्टं, किं निमित्तमिति। संघातमृत्यवः = युगपत्प्राप्तनिधनाः।

मित्रावसुः—कुमार ! नैवामी संघातमृत्यवः ।

नायकः—मित्रावसो ! किमन्यत् ।

मित्रावसुः—श्रूयतां । पुरा किल स्वपक्षपवनापास्तसमस्तसागरजल-पूरं रसातलादुद्धृत्य प्रतिदिनमेकैकं नागमाहारयति वैनतेयः ।

नायकः—( सोद्वेगम् ) कष्टम् ! अतिदुष्करं करोति, ततस्ततः ?

मित्रावसुः—ततः सकलनागविनाशाऽऽशङ्किना वासुकिना गरुत्मान् अभिहितः ।

नायकः—( सादरम् ) किं, मां प्रथमं भक्षयेति ?

मित्रावसुः—न हि न हि ।

---

मित्रावसुर्नायकक्कृतं प्रश्नमुत्तरयति—कुमार ! नैवामी संघातमृत्यव इत्यादि । नैतेषामस्ति युगपन्मरणमपि तु कारणान्तरमिहास्तीति भावः । ( हेत्वन्तरजिज्ञासोत्पादनार्थमेव नैवामीति निषेध उक्तः ) ।

पुनर्नायको मित्रावसुं पृच्छति—मित्रावसो ! किमन्यदिति । ( कारणमिति शेषः ) एवमस्थिनिचयेऽन्यत्किंकारणमित्यर्थः ।

मित्रावसुरितिहासमुखेन नायकप्रश्नमुत्तरयति—श्रूयतां पुरा किलेत्यादिना । ( पुराशब्दोऽत्र चिरकालारब्धत्वमस्य सूचयति ) । किलशब्दोऽत्र वार्त्तायाम् । स्वस्य आत्मनः ( गरुडस्येत्यर्थः ) । पक्षयोः पवनेन बहुवेगापातोद्भवेन वायुनाऽपास्तस्ताडितः समस्तसागरजलस्य पूरः प्रवाहो यत्र तद्यथा तथा रसातलात्= नागलोकात् । उद्धृत्य = समानीय । आहारयति = खादति । ( आहारं करोतीत्यर्थे तत्करोतीति णिच्—स्वार्थिकणिजन्तस्य हरतेर्वा रूपम् ) । वैनतेयः = गरुडः । ( विनताया अपत्यं पुमानिति विग्रहे तद्धितो ढक्प्रत्यः ) ।

नायकोऽस्थिनिचयनिमित्तमाकर्ण्य पुनराह—कष्टमिति । एतेन तत्प्रवृत्तावयोग्यता सूच्यते ) । अयोग्यत्वात्कष्टेन विधीयमानमेतत्कार्यमयुक्तमित्यर्थः । ततस्ततः = अतः परमपि तस्यायुक्ताचरणमस्ति किमिति तदर्थः ।

सकलनागविनाशशङ्किना = ( सकलानां समस्तानां नागानां सकलान् नागान् वा विनाशयितुं शीलमस्येति विग्रहे ताच्छीलिको णिनिः) तेन ।

मित्रावसुर्नायकोक्तिवैपरीत्यमाश्रित्याह—नहि नहीति । ( वीप्सया वैपरीत्याधिक्यं द्योत्यते ) ।

नायकः—किमन्यत् ?

मित्रावसुः—इदमुक्तम् ,—"त्वदभिपातसन्त्रासात् सहस्रशः स्रवन्ति भुजङ्गमानां गर्भाः, शिशवश्च पञ्चत्वमुपयान्ति, एवञ्च सन्ततिविच्छेदोऽस्माकं, तव चैवं स्वार्थहानिः, तत् यदर्थमभिपतति भवान् नागलोकं, तमिह नागमेकैकमनुदिनं समुद्रतटस्थितस्याऽहमेव प्रेषयिष्यामि ।"

नायकः—कथं रक्षिता नागराजेन पन्नगाः ?—

जिह्वासहस्रद्वितयस्य मध्ये
नैकाऽपि सा तस्य किमस्ति जिह्वा ।
एकाहिरक्षार्थमहिद्विषेऽद्य
दत्तो मयात्मेति यया ब्रवीति ॥५॥

---

अनौचित्यकलङ्कमलिनस्य पक्षान्तरस्याऽप्रतिभानादाह नायकः—किमन्यदिति।

नायककृतां जिज्ञासां समाधत्ते मित्रावसुः—इदमुक्तमित्यादिना । इदमुक्तम् = ( वैनतेयं प्रतीति शेषः ) । त्वदभिपातसन्त्रात् = त्वदभिपातेन त्वदभिपतनेन यस्सन्त्रासो भयं तस्मादित्यर्थः । सहस्रशः = सहस्राणि सहस्राणीत्यर्थः । ( संख्यैकवचनाच्च वीप्सायामिति वीप्सायां शस् ) । स्रवन्ति = पतन्ति । भुजङ्गनानाम् = नागीनाम् । ( जानपदेति सूत्रेण नागशब्दात्स्थौल्येऽर्थे विधीयमानस्य ङीपोऽत्राग्राह्यता-जातेरस्त्रीति ङीप्बोध्यः ) । शिशवः=बालकाः । पञ्चत्वमुपयान्ति = म्रियन्ते । एवं च = एवं सति । सन्ततिविच्छेदः = वंशलोपः । (सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ । वंश—इत्यमरः ) एवं = सन्ततिविच्छेदे सतीत्यर्थः । स्वार्थहानिः = स्वाहारविघात इत्यर्थः । अनुदिनम् = दिने दिने ( वीप्सायामव्ययीभावः ) । प्रेषयिष्यामि = ( नात्रागन्तव्यं त्वयेति शेषः ) ।

मित्रावसूक्तिमाकर्ण्य तम्प्रति नागराजमुद्दिश्य साऽधिक्षेपमाह नायकः—कथं रक्षिता नागराजेनेत्यादि । नागराजेन = वासुकिना । पन्नगाः = नागाः । कथं रक्षिता = नैव रक्षिता इत्यर्थः ।

तदेव ( अरक्षणमेव ) दर्शयति—जिह्वासहस्रेत्यादिना । तस्य नागराजस्य जिह्वासहस्रद्वितयस्य सहस्रद्वयजिह्वाया इत्यर्थः । ( सहस्रशिरस्कस्य तस्य द्विजिह्वत्वाद् द्विसहस्रजिह्वत्वं बोध्यम् ) । मध्ये सा प्रसिद्धा एकाऽपि जिह्वा किं नास्ति यया जिह्वया एकस्य अहेः रक्षार्थम् अद्य द्वेष्टीति द्विट् ( क्विप् ) अहेर्द्विट्

मित्रावसुः—प्रतिपन्नं तत् पक्षिराजेन ।—

इत्येष भोगिपतिना विहितव्यवस्थो
यान् भक्षयत्यहिपतीन् पतगाधिराजः ।
यास्यन्ति यान्ति च गताश्च दिनैर्विवृद्धिं
तेषाममी तुहिनशैलरुचोऽस्थिकूटाः ॥ ६ ॥

नायकः—आश्चर्य्यम् ।

---

अहिद्विट् तस्मै अहिद्विषे गरुडाय मया आत्मा देहो दत्त उत्सृष्ट इति ब्रवीति कथयति ( नागराज इति शेषः )। द्विसहस्रजिह्वोऽप्यहिराजो नैकाहिरक्षार्थमात्मदानमुक्तवान् परमेकजिह्वोऽप्यहं तथा करोमीति गम्यार्थस्य युक्त्याऽभिधानादिह पर्यायोक्तनामाऽलङ्कारः तदुक्तं दर्पणे—

पर्यायोक्तं यदा भङ्ग्या गम्यमेवाऽभिधीयते ।

इति । इंद्रवज्रावृत्तम् । स्यादिन्द्रवज्रा कथितौ जगौ ग इति लक्षणात् ॥५॥

मित्रावसुराह—प्रतिपन्नमिति । प्रतिपन्नम्—अंगीकृतम् । तत् = नागराजवचनम् । पक्षिराजेन=गरुडेन ।

एवमभिधाय पुनरस्थिनिचयहेतुमुपसंहरति मित्रावसुः—इतीति । भोगिपतिना=भोगः फणोऽस्त्येषामिति भोगिनो नागाः (अत इनूठनाविति तद्धित इन् प्रत्ययः) । (भोगः सुखे धने चाहेः शरीरफणयोर्मत इति मेदिनी)। (उरगः पन्नगो भोगीत्यमरश्च) तेषाम्पतिस्तथोक्तेन वासुकिनेत्यर्थः। इत्युक्तप्रकारेण विहिता कृता व्यवस्था कर्तव्यमर्यादा यस्य तादृशः। कृतकर्तव्यमर्याद इत्यर्थः। एष पतगानां पक्षिणामधिराजा पतगाधिराजो गरुडः (राजाहः सखिभ्यष्टच् )। यान् अहिपतीन् नागमुख्यान् भक्षयति तेषाम् भक्षिताहिमुख्यानाम् अमी पुरोदृश्यमानाः तुहिनशैलरुचो हिमाद्रिकान्तयः अस्थिकूटा अस्थिसमूहा दिनैर्भूत—वर्तमान-भाविभिर्वासरैरित्यर्थः। (अपवर्गे तृतीया)। विवृद्धिं विशेषेण वृद्धिं गता यान्ति यास्यन्ति च। तुहिनशैल इव रुक् येषामिति विग्रहप्रदर्शनादिहोपमाऽलङ्कारः । छेकाऽनुप्रासश्च प्रतिभाति । वसन्ततिलकं वृत्तम् ॥६॥

इत्थमितिहासरूपेण विनतात्मजहिंसानिर्बन्धमाकर्ण्य तदपनयाय वस्तुनो विरागमूलकनित्यानित्यत्वविवेकमाश्रित्य नायको मूढप्रवृत्तिं निन्दति—आश्चर्यमित्यनेन ।

सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥७॥

अहो ! अनवसानेयं विपत्तिर्नागानाम् । ( आत्मगतम् ) अपि नाम शक्नुयामहं स्वशरीरसमर्पणादेकस्यापि नागस्य प्राणपरिरक्षां कर्त्तुम् ।

( ततः प्रविशति प्रतीहारः ) ।

प्रतीहारः—आरूढोऽस्मि गिरिशिखरं, यावन्मित्रावसुमन्विष्यामि । ( परिक्रम्य ) अयं मित्रावसुर्जामातुः समीपे तिष्ठति । ( उपसृत्य ) विजयेतां कुमारौ ।

मित्रावसुः—सुनन्द ! किं निमित्तमिहागमनम् ?

प्रतीहारः—( कर्णे कथयति ) ।

मित्रावसुः—कुमार ! तातो मामाह्वयति ।

---

मूढप्रवृत्तावाश्चर्यत्वं साधयति—सर्वेति । मूढाः प्रतिपत्तिशून्याः (प्राणिन इति शेषः) । सर्वेषाम् अशुचीनाम् । अपवित्रभूतानां विण्मूत्रमांसादीनामित्यर्थः । निधानस्य आश्रयस्य । कृतघ्नस्य मुक्तिविरोधिभोगाश्रयत्वात्प्रत्युपकारमकुर्वाणस्येत्यर्थः । विनाशिनो विध्वंसिनः शरीरकस्यापि कुत्सितशरीरस्यापीत्यर्थः (कुत्सार्थकोऽत्र कन्प्रत्ययः) कृते निमित्तं पापानि शरीरहेतोर्जीवहिंसात्मकानीत्यर्थः । कुर्वते आचरन्ति । पूर्वार्द्धोपात्तविशेषणत्रयद्वारा कदाऽप्यनित्यशरीरहेतोर्जीवहिंसात्मकं पापं नाचरणीयमित्यभिप्रायसूचनादिह परिकराऽलंकारः । उक्तञ्च दर्पणकृता—

उक्तिर्विशेषणैः साऽभिप्रायैः परिकरो मतः । इति अनुष्टुप्वृत्तम् ॥७॥

एवं विनतात्मजस्य हिंसाऽऽग्रहं विनिन्द्य नायकस्तमनुशोचति—अहो इत्यादिना । ( अहो इत्यव्ययं खेदसूचकम् ) । वैनतेयस्यैष व्यापारोऽस्माकमपि खेदं जनयतीति भावः अनवसाना=नास्त्यवसानं यस्यास्तादृशी वैरमूलत्वात्कल्पान्तस्थायिनीत्यर्थः । विपत्तिः=दुःखम् । अपि=प्रश्ने । शक्नुयाम्=(शकि लिङ् चेति लिङ्) । (एतेन नेतुर्दयोत्साहातिशयः सूच्यते) ।

एवं नायकाध्यवसितकार्यसम्पादनाय तत्प्रवृत्तिद्वारमुद्घाटयति प्रतीहारः—आरूढोऽस्मीत्यादिना । जामातुः=भगिनीपतेः । विजयेताम्=सर्वोत्कर्षेण वर्तताम् । (विपराभ्यां जेरित्यात्मनेपदम् ) ।

किं निमित्तम् = कस्मै प्रयोजनायेत्यर्थः । इह = क्रीडाप्रदेशे । (आगमनेऽस्याऽवश्यकत्वाऽऽशंकया प्रश्नः) ।

नायकः—गम्यताम् ।

मित्रावसुः—कुमारेणापि बहुप्रत्यवायेऽस्मिन् प्रदेशे न चिरं स्थातव्यम् । ( इति निष्क्रान्तः ) ।

नायकः—यावदहमप्यस्माद्गिरिशिखरादवतीर्य्य समुद्रतटमवलोकयामि । ( परिक्रामति ) ।

( नेपथ्ये ) । ( क ) हा पुत्तअ संखचूड़ ! कहं बावादिअमाणो अज्ज किल तुमं मए पेक्खितव्यः ?

नायकः—( आकर्ण्य ) अये ! योषित इवार्त्तप्रलापः । केयम्, कुतो वाऽस्या भयमिति स्फुटीकरिष्ये । ( परिक्रामति ) ।

( ततः प्रविशति रुदत्या वृद्धयाऽनुगम्यमानः शङ्खचूडो गोपायितवस्त्रयुगलश्च किङ्करः ) ।

---

( क ) हा पुत्रक शङ्खचूड ! कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः ?

---

गम्यतामिति नायकोक्तिमाकर्ण्य नायकस्य सहगमननिषेधमवेत्य तन्मनोऽनुकूलवचोद्वारा प्रत्यवायं परिहर्तुमाह मित्रावसुः—कुमारेणाऽपीति । बहुप्रत्यवाये= बहुलानर्थसाधके—पापाधिक्योत्पादके वा ।

गते मित्रावसावतिहृष्टो नायकः स्वविचाराऽनुकूलमाह—यावदित्यादि ।

( क ) चूलिकाद्वारा पात्रप्रवेशं सूचयति—हा पुत्रकेत्यादि । व्यापाद्यमानः = बध्यमानः । प्रेक्षितव्यः = द्रष्टव्यः । उक्तञ्च चूलिकालक्षणं नाट्यशास्त्रे—

अन्तर्यवनिकासंस्थैरुत्तमाधममध्यमैः ।
अर्थोपक्षेपणं यत्र क्रियते सा हि चूलिका ॥

इत्थमार्तनादश्रवणान्नायको विचारयति—अये इत्यादिना । सहसार्तनादश्रवणभ्रान्त्या तदन्वेषणसूचकमये इत्यव्ययम् । ( अये क्रोधे विषादे च संभ्रमे स्मरणेऽपि चेति कोशः ) । योषितः स्त्रियः । आर्त्तप्रलापः=कातरशब्दः । अस्याः= स्त्रियः । स्फुटीकरिष्ये=अनुसन्धानद्वारा व्यक्तीकरिष्ये ।

अनुगम्यमानः = अनुस्त्रियमाणः । ( अनुपूर्वकाद्गमेः कर्मणि यगन्ताच्छानच ) । गोपायितवस्त्रयुगलः=गोपायितं प्रच्छन्नतया गृहीतं वस्त्रयुगलं येन सः किंकरः=नागराजसेवकः ।

वृद्धा—( सास्रम् ) (क) हा पुत्तअ संखचूड़ ! कहं वावादिअमाणो अज्ज किल तुमं मए पेक्खिदव्वो ? ( चिबुकं गृहीत्वा ) इमिणा सुहचंदेण विरहिअं दाणीं अंधआरीभविस्सदि पाआलं ।

शङ्खचूड़ः—अम्ब ! किमिति वैक्लव्येन सुतरां नः पीड़यसि ?

वृद्धा—( निर्वर्ण्य पुत्रस्याङ्गानि स्पृशन्ती ) (ख) हा पुत्त ! कहं दे अदिट्ठसूरकिरणं सुउमारसरीरं णिग्घिणो गलुड़ो आहालइस्सदि ? ( कण्ठे गृहीत्वा रोदिति ) ।

शङ्खचूड़ः—अम्ब ! अलं परिदेवितेन, पश्य ।—

क्रोड़ीकरोति प्रथमं यदा जातमनित्यता ।
धात्रीव जननी पश्चात् तदा शोकस्य कः क्रमः ? ॥८॥

( गन्तुमिच्छति ) ।

---

( क ) हा पुत्रक शङ्खचूड़ ! कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः ? अनेन मुखचन्द्रेण विरहितमिदानीमन्धकारीभविष्यति पातालम् ।

( ख ) हा पुत्र ! कथं ते अदृष्टसूर्य्यकिरणं सुकुमारशरीरं निर्घृणो गरुड़ अहारयिष्यति ?

---

चिबुकम्=अधराधोभागम् । ( ओष्ठाधरौ तु रदनच्छदौ दशनवाससी । अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परा हनुरित्यमरः) ।

शोचन्ती मातरं सान्त्वयति शंखचूड़ः—अम्ब ! किमिति । वैक्लव्येन = कातर्येण । सुतराम्=अतिशयेन । नः = अस्मान् ।

(ख) अदृष्टसूर्यकिरणम् = अदृष्टा अनवलोकिताः सूर्यकिरणा भानुरश्मयो येन तत् । सूर्यातपासहसनशीलमित्यर्थः । सुकुमारशरीरम् = कोमलदेहम् । निर्घृणः=घृणाया निष्क्रान्तो निर्घृणः । निर्गता घृणा यस्येति वा विग्रहः । कारुण्यं करुणा घृणेत्यमरः ।

शंखचूड़ो मातुः शोकभारमालोक्य वस्तुविचारद्वारा तं शमयति—अलं परिदेवितेनेति । परिदेवितेन=विलापेन । (विलापः परिदेवनमित्यर्थः ) । वैयर्थ्यादयोग्यत्वाच्च विलापो व्यर्थं इति भावः ।

विलापस्य वैयर्थ्यमयोग्यत्वञ्च समर्थयति शंखचूडः—क्रोडीकरोतीति । यदा अनित्यता विनश्वरत्वम् धात्रीव उपमातेव (धात्री जनन्यामलकी वसुमत्युपमा-

वृद्धा—(क) पुत्तअ ! चिट्ठ मुहुत्तअं, जाव दे बअणं पेक्खामि ।

किङ्करः—(ख) एहि कुमार संखचूड ! किं ते एदाए भणंतीए ? पुत्तसिणेहमोहिदा क्खु एसा, ण जाणेदि लाअकज्जं ।

शङ्खचूडः—अयमागच्छामि ।

किङ्करः—( अग्रतोऽवलोक्यात्मगतम् ) (ग) आणीदो क्खु एसो मए वज्झसिलासमीवं, ता वज्झचिण्हं दाइस्सं ।

नायकः—इयमसौ योषित् । ( शङ्खचूडं दृष्ट्वा ) नूनमनेन अस्याः सुतेन भवितव्यम्; तत् किमाक्रन्दति ? ( समन्तादवलोक्य ) न खल्वस्या भयकारणं किञ्चित् पश्यामि, कुतोऽस्या भयमिति ? यावदुपसर्पामि ।

---

( क ) पुत्र ! तिष्ठ मुहूर्त्तं, यावत् ते वदनं प्रेक्षे ।

(ख) एहि कुमार शङ्खचूड ! किं ते एतया भणन्त्या ? पुत्रस्नेहमोहिता खल्वेषा, न जानाति राजकार्य्यम् ।

(ग) आनीतः खल्वेष मया वध्यशिलासमीपे, तद् वध्यचिह्नं दास्यामि ।

---

तृष्विव्यमरः )। जातं गर्भाशयान्निष्क्रान्तं (शिशुमिति शेषः) । प्रथमं प्राक् (मातुरपेक्षयेति शेषः) । क्रोडी करोति क्रोडे (अंके) धारयति । जननी माता पश्चात् क्रोडीकरोति (जातं शिशुमिति शेषः) । तदा शोकस्य विलापकस्य कः क्रमः का परिपाटी । अपि तु नैव शोको विधेय इत्यर्थः । यथा प्रसवशूलतो मूर्छितायां मातरि प्रागुपमाता जातं शिशुं गर्भक्लेदाद्यपनयनपर्वकं मातुर्ज्ञानं यावत् निजांके धारयति पश्चान्माता निजांके धारयति तथाऽनित्यताऽपि * जातमेव शिशुमाक्रामतीति भावः। अनित्यताकर्तृकस्य क्रोडीकरणस्याऽसम्बन्धेऽपि तत्सम्बन्धाऽभिधानादतिशयोक्तिरलंकारः—धात्रीवेत्युपमयाऽनुजीवितः । अनुष्टुप्वृत्तम् ॥८॥

वध्यशिलासमीपम् = यस्यां शिलायां गरुडेन वध्यो भवति तत्समीपमित्यर्थः । वध्यचिन्हम् = रक्तांशुकयुगलरूपमिति भावः ।

प्रसक्त एव—निरन्तरं प्रवृत्त एवेत्यर्थः । अत एव = अस्मादालापादेवेत्यर्थः । अस्य = आलापभयहेतोरित्यर्थः । अभिव्यक्तिः = प्राकट्यम् । विटपान्तरितः वृक्षव्यवहितः ।

---

* प्रमाणञ्चात्र श्रीभगवद्गीतावाक्यमेव तथाहि—

मृत्युर्जन्मवतां वीर ! देहेन सह जायते ।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवम् ॥

असक्त एवायमेतेषामालापः, कदाचिदत एवास्याभिव्यक्तिर्भविष्यति, तद्विटपान्तरितस्तावच्छृणोमि ।

किङ्करः—(सास्रं कृताञ्जलिः) (क) कुमाल संखचूड़! एसो सामिणो आदेसो त्ति करिअ ईरिसं णिट्ठुरं मन्तीअदि ।

शङ्खचूड़ः—भद्र ! कथय ।

किङ्करः—(ख) नागलाओ बासुई आणवेदि ।

शङ्खचूड़ः—( शिरस्यञ्जलिं बद्ध्वा सादरम् ) किमाज्ञापयति देवः ?

किङ्करः—(ग) "एदं लत्तंसुअजुअलं परिहिअ आलुह वज्झसिलं, जेण लत्तंसुअं उवलक्खिअ गलुड़ो आहालइस्सदि" त्ति ।

नायकः—( श्रुत्वा ) कथमसौ वासुकिना परित्यक्तः ?

किङ्करः—(घ) कुमाल ! गेण्ह एदं बसणजुअलं ।

(इत्यर्पयति) ।

शङ्खचूड़ः—(सादरम्) उपनय । ( गृहीत्वा ) शिरसि स्वाम्यादेशः ।

वृद्धा—(पुत्रस्य हस्ते वाससी दृष्ट्वा सोरस्ताड़म् ) (ङ) हा बच्छ ! एदं क्खु वज्जपाड़सरिणमं संभावीअदि ।

(मोहं गता)

---

(क) कुमार शङ्खचूड़! एष स्वामिन आदेश इति कृत्वा ईदृशं निष्ठुरं मन्त्र्यते ।

(ख) नागराजो वासुकिराज्ञापयति,—।

(ग) "इदं रक्तांशुकयुगलं परिधाय आरोह वध्यशिलां, येन रक्तांशुकमुपलक्ष्य गरुड़ आहारयिष्यति" इति ।

(घ) कुमार ! गृहाणैतत् वसनयुगलम् ।

(ङ) हा वत्स ? इदं खलु वज्रपातसन्निभं सम्भाव्यते ।

---

स्वामिनः—भुजगराजस्य वासुकेरित्यर्थः । आदेशः = आज्ञा । निष्ठुरम् = (रक्तांशुकयुगलं परिधायाऽरोहवध्यशिलामित्येवं रूपं परुषवचनमित्यर्थः । मन्त्र्यते = कथ्यते (मयेति शेषः) । (मन्त्रि गुप्तभाषणेऽस्माच्चौरादिकाद्धातोः कर्मणि प्रत्ययः) ।

परित्यक्तः = प्रेपितः ।

सोरस्ताडम् = उरस्ताडेन वक्षस्थलाघातेन सह वर्तमानं यथा तथेत्यर्थः । वक्षस्थलाघातपूर्वकमिति भावः । (क्रियाविशेषणमेतत्) । (विलपतीति शेषः) ।

किङ्करः—(क) आसण्णा गलुडस्स आअमणवेला, ता लहुं गच्छामि ।

(इति निष्क्रान्तः) ।

शङ्खचूडः—अम्ब । समाश्वसिहि ।

वृद्धा—(समाश्वस्य सास्रम्) (ख) हा पुत्तअ ! हा मणोरहसदलद्ध ! कहिं पुणो तुमं पेक्खिस्स ? (कण्ठे गृह्णाति) ।

नायकः—अहो नैर्घृण्यं गरुडस्य ! अपि च,—

मूढाया मुहुरश्रुसन्ततिमुचः कृत्वा प्रलापान् बहून्
कस्त्राता तव पुत्रकेति कृपणं दिक्षु क्षिपन्त्या दृशम् ।
अङ्के मातुरवस्थितं शिशुमिमं त्यक्त्वा घृणामश्नतः
चंच्वग्रेण खगाधिपस्य हृदयं वज्रेण मन्ये कृतम् ॥९॥

---

(क) आसन्ना गरुडस्यागमनवेला, तल्लघु गच्छामि ।

(ख) हा पुत्रक ! हा मनोरथशतलब्ध ! क्व पुनस्त्वां प्रेक्षिष्ये ?

---

वज्रपातसन्निभम् = वज्रपतनसदृशम् । असह्यमिति भावः । सम्भाव्यते = ज्ञायते ।

(क) आसन्ना = निकटवर्तिनी । आगमनवेला = आगमनकाल इत्यर्थः ।

अहो = क्रौर्येणाऽऽश्चर्यावहमित्यर्थः । नैर्घृण्यम् = निर्दयत्वम् ।

नैर्घृण्यमेव वर्णयति नायकः—मूढाया इति ! मूढायाः पुत्रप्रेम्णा भ्रान्तचित्तायाः । तथा मुहुः पुनः पुन र्बहून् अधिकान् प्रलापान् विलापान् कृत्वा विधाय अश्रुसन्ततिमुचः वाष्पजलसमूहं मुंचन्त्यः । तथा—हे पुत्रक ! तव त्राता रक्षिता क इति (उक्त्वेति शेषः) । कृपणं दीनं यथा तथा दिक्षु सर्वासु दिशास्वित्यर्थः । दृशं नेत्रं क्षिपन्त्या ददत्याः मातुर्जनन्या अंके क्रोडे अवस्थितं तिष्ठन्तम् इमं पुरोदृश्यमानं शिशुमत्यल्पवयस्कम् घृणां दयां त्यक्त्वा चंच्वग्रेण चंचुपुरोभागेन अश्नतः मिष्टान्नमिव भक्षयतः खगाधिपस्य गरुडस्य हृदयं चित्तं वज्रेण कुलिशेन कृतं निर्मितं मन्ये जानामि । गरुडहृदयस्य वज्रनिर्मितत्वाऽभिधाने हेतुभूतानामाद्यपादत्रयोक्तानां वाक्यार्थत्वाद्वाक्यार्थहेतुकं काव्यलिंगमलङ्कारः । मन्ये पदोक्त्योत्प्रेक्षा च । शार्दूलविक्रीडितम्वृत्तम् ॥९॥

शङ्खचूडः—( मातुरश्रूणि निवारयन् )। अम्ब! किमतिवैक्लव्येन ? ननु समाश्वसिहि।

वृद्धा—( सास्रम् ) ( क ) कहं समस्ससिस्सं ? किं एक्कपुत्तओ त्ति कदुअ साणुकंपेण णाअराएण पेसिदोसि ? हा ! कहं अविच्छिण्णे जीअलोए मम पुत्तओ सुमरिदो ? सव्वधा अहं म्हि मंदभग्गा। (मूर्च्छति)।

नायकः—( सकरुणम् )—

आर्त्तं कण्ठगतप्राणं परित्यक्तं स्वबन्धुभिः।
त्राये नैनं यदि ततः कः शरीरेण मे गुणः ? ॥१०॥

तद् यावदुपसर्पामि।

---

( क ) कथं समाश्वसिष्यामि ? किमेकपुत्रक इति कृत्वा सानुकम्पेन नागराजेन प्रेषितोऽसि ? हा ! कथमविच्छिन्ने जीवलोके मम पुत्रकः स्मृतः ? सर्वथाऽहमस्मि मन्दभाग्या।

---

* शङ्खचूड इत्यस्याग्रे पाठान्तरमुपलभ्यते तच्च टिप्पण्यां प्रदर्शितमिति तत एवाऽवसेयम्। अतिवैक्लव्येन = कातर्यातिशयेन।

(क) किमेकपुत्रक इति। त्वं ममैक एव पुत्र इति विचार्य सानुकम्पेन दयाशीलेन नागराजेन वासुकिना किं प्रेषितोऽसीति, तादृशस्य नागराजस्य तव प्रेषणं सर्वथाऽयुक्तमेवेति भावः। अविच्छिन्ने = विच्छेदरहितेऽतिवितत इति यावत्। जीवलोके = संसारे।

एवं तदीयमूर्च्छां यावत् कारुण्यातिशयं दयोद्दीपकत्वेनाश्रित्य नायको व्यतिरेकमुखेनात्मविचारितं समर्थयति—आर्त्तमिति। यदि आर्त्तं दुःखपीडितम् (आङ् × ऋ × क्तः। उपसर्गादृतीति वृद्धिः)। कण्ठगतप्राणं कण्ठं गता बहिर्गमनोत्सुकाः प्राणा यस्य तादृशम् आसन्नमरणमित्यर्थः। (द्वितीयाश्रितातीतेति समासः)। स्वबन्धुभिः सम्बन्धिभिः वियोगाऽसहनशीलैरित्यर्थः। (स्वशब्दो हि परित्यागस्याति-

---

* शंखचूडः—(दुःखातिशयान्मातुर्हृदयस्फोटं शङ्कमानो मातरं प्रति)

यैरत्यन्तदयापरैर्नविहिता वन्ध्यार्थिनां प्रार्थना
यैः कारुण्यपरिग्रहान्नगणितः स्वार्थः परार्थं प्रति॥
ये नित्यं परदुःखदुःखितधियस्ते साधवोऽस्तं गता।
मातः। संहर वाष्पवेगमधुना कस्याग्रतो रुद्यते॥

(हस्तेन मातुरश्रूणि परिमार्जयन्)

शङ्खचूडः—अम्ब ! संस्तम्भयात्मानम् ।

वृद्धा—(क) हा पुत्तअ ! जदा णाअलोअपरिरक्खएण वासुइणा परिच्चत्तोसि, तदा को दे अवरो परित्ताणं करिस्सदि ? ।

नायकः—( उपसृत्य ) । नन्वहमहम् ।

वृद्धा—( नायकं दृष्ट्वा ससम्भ्रममुत्तरीयेण पुत्रकमाच्छाद्य नायकमुपसृत्य जानुभ्यां स्थित्वा ) । (ख) विणदाणंदण ! बावादेहि मं । अहं दे णाअराएण आहारणिमित्तं परिकप्पिदा ।

नायकः—( सास्रम् ) । अहो ! पुत्रवात्सल्यम् ।

अस्या विलोक्य मन्ये पुत्रस्नेहेन विक्लवत्वमिदम् ।
अकरुणहृदयः करुणां करिष्यति भुजङ्गशत्रुरपि ॥११॥

शङ्खचूडः—अम्ब ! अलं त्रासेन ? न खल्वयं नागशत्रुः । पश्य,—

---

( क ) हा पुत्रक ! यदा नागलोकपरिरक्षकेण वासुकिना परित्यक्तोऽसि, तदा कस्ते अपरः परित्राणं करिष्यसि ।

( ख ) विनतानन्दन ! व्यापादय माम्, अहं ते नागराजेनाहारनिमित्तं परिकल्पिता ।

---

शयायुक्तत्वं द्योतयति) । परित्यक्तं निरस्तम् नतु स्वेच्छयाऽत्रागतमिति भावः । एनं निकटवर्तिनं नतु दूरस्थमिति भावः । न त्राये न रक्षामि ततस्तदा मे मम शरीरेण को गुणः किम्प्रयोजनं न कोऽपीत्यर्थः (वर्तमाननिर्देशेनोद्योगातिशयो द्योत्यते) परदुःखपीडितः प्रजारक्षको राजपुत्रोऽहमित्यवश्यमेव रक्षामीत्यभिप्रायस्य विशेषणद्वारा सूचनात्परिकरालंकारः । अनुष्टुप्वृत्तम् ॥१०॥

संस्तम्भय—स्थिरं कुरु ।

नागमातुः पुत्रवात्सल्यातिशयं दर्शयति नायकः—अस्या इति । अस्याः शंखचूडमातुः पुत्रस्नेहेन पुत्रवात्सल्येन (हेतुना) इदं विक्लवत्वं कातर्यातिशयं विलोक्य दृष्ट्वा अकरुणहृदयः अविद्यमाना करुणा यस्य तदकरुणं तादृशं हृदयं यस्य सः दयाशून्यचित्त इत्यर्थः । भुजंगशत्रुर्गरुडोऽपि करुणां दयां करिष्यति । इति मन्ये तर्कयामि । अत्रोत्प्रेक्षाऽलंकारः । आर्यावृत्तम् ॥११॥

महाऽहिमस्तिष्कविभेदमुक्त-
रक्तच्छटाचर्च्चितचण्डचञ्चुः।
क्वासौ गरुत्मान्? क्व च नाम सौम्य-
स्वभावरूपाकृतिरेष साधुः? ॥१२॥

वृद्धा—(क) अहं क्खु तुज्झ मरणभीआ सव्वं जेव्व लोअं गरुड़मअं पेक्खामि।

नायकः—अम्ब! मा भैषीः। नन्वयमहं विद्याधरः, त्वत्सुतसंरक्षणार्थमेवायातः।

वृद्धा—(सहर्षम्) (ख) पुत्तअ! पुणो पुणो एवं भण।

---

(क) अहं खलु तव मरणभीता सर्वमेव लोकं गरुडमयं प्रेक्षे।
(ख) पुत्रक! पुनः पुनरेवं भण।

---

मातुर्नायके नागशत्रुसन्देहपनयति शंखचूडः–महाहीति। महतां स्थूलानामतिविषवताञ्च अहीनाम् नागानां मस्तिष्कविभेदात् शिरोविदारणात् (शिरःस्थितघृताकारवस्तुस्फोटनाद्वा) मुक्तानां निर्गतानां रक्तानां रुधिराणां छटाभिर्द्युतिभिः (धाराभिर्वा) चर्चिता रक्तचंदनद्रवेणेव लिप्ता चण्डा तीक्ष्णा चञ्चुर्यस्य तादृशः। असौ प्रसिद्धो गरुत्मान् गरुडः (गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वर इत्यमरः) (गरुत् पक्षोऽस्त्यस्येति विग्रहे मतुप्प्रत्ययः, तस्मिन् तकारस्याऽनुनासिकत्वाभावस्तान्तस्य पदत्वाऽभावात्)। क्व। सौम्यः शोभनः स्वभावः रूपम् आकृतिश्च यस्य तादृशः। एष साधुः परोपकारशीलश्च क्व नाम महदन्तरमनयोरित्यर्थः। त्रासादेवाऽत्र ते गरुडभ्रमः परं नात्र स विधेय इति भावः। क्व द्वयमनयोर्महदन्तरं सूचयति)। नामशब्दोऽत्र विस्मये (नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि चेति मेदिनी)। उपमानभूत-गरुडाऽपेक्षयोपमेयस्य नायकस्याधिक्य-न्यूनत्वयोरन्यतरप्रतिपादनाद् व्यतिरेकोऽत्रालंकारः। उपजातिवृत्तम् ॥१२॥

इत्थं नागमातुर्वैक्लव्यातिशयम्विलोक्य नायको विस्रम्भाय पुत्रवदम्बेति सम्बोधयति—अम्ब! मा भैषीरिति। मत्तो भयं मा कुर्वित्यर्थः। अयमहं विद्याधरः = विद्याधरवंशसमुद्भवोऽहम्। त्वत्सुतसंरक्षणार्थमेवायातः = तव पुत्ररक्षणायैवोपस्थितोऽस्मीत्यर्थः। तव पुत्ररक्षणातिरिक्तं नास्ति मे किमपि प्रयोजनमिति भावः (अनेन नागमातुराश्वासनप्रकारः सूचितः)।

नायकः—अम्ब ! किं पुनःपुनरभिहितेन ? ननु कर्म्मणैव सम्पादयामि ।

वृद्धा—( शिरस्यञ्जलिं बद्ध्वा )। (क) पुत्तअ ! चिरं जीअ ।

नायकः—

ममैतदम्बार्पय बध्यचिह्नं प्रावृत्य यावद्विनताऽऽत्मजाय ।
पुत्रस्य ते जीवितरक्षणाय स्वदेहमाहारयितुं ददामि ॥१३॥

वृद्धा—( कर्णौ पिधाय )। (ख) पड़िहदं क्खु एदं, तुमंपि संखचूड़-

---

(क) पुत्रक ! चिरं जीव ।

(ख) प्रतिहतं खल्वेतत्, त्वमपि शङ्खचूड़निर्विशेषः पुत्रः, अथवा शङ्खचूडा-दप्यधिकतरः, य एवं बन्धुजनपरित्यक्तमपि पुत्रकं मे शरीरप्रदानेन रक्षितु-मिच्छसि ।

---

किं पुनः पुनरभिहितेन = मुहुर्मुहुरेवमभिधानं व्यर्थमित्यर्थः । कर्मणैव=कार्ये-णैव । सम्पादयामि = करोमि । (तवात्मजत्राणमिति शेषः ।

चिरं जीवेति तदुक्तिमाकर्ण्य तदपेक्षामालक्ष्य नायकस्ततो वध्यचिन्हमभ्यर्थ-यते—ममेति । हे अम्ब ! मातः ! एतत् तवात्मजकरस्थितम् बध्यचिन्हं रक्तां-शुकद्वयभूतम् मम मह्यं अर्पय देहि (तत आदायेति शेषः) । सम्प्रदानस्य सम्बन्ध-त्वेन विवक्षणादिह षष्ठी) ।–(बध्यचिन्हशब्दो हि साध्यसिद्धाववश्याऽपेक्षणीयत्वं द्योतयति) । यावत् येनेत्यर्थः (रक्तांशुकद्वयेनेति शेषः) । प्रावृत्य प्रावरणं कृत्वा आच्छाद्येति यावत् (स्वशरीरमिति शेषः) ते तव पुत्रस्य शंखचूडस्येत्यर्थः । जीवित-रक्षणाय प्राणत्राणाय (हेतवे) प्राणत्राणं कर्त्तुमित्यर्थो वा । विनतात्मजाय गरुडाय विनतात्मजमुद्दिश्येत्यर्थः । स्वदेहं स्वशरीरम् आहारयितुम् आहारं कर्तुमित्यर्थः । ददामि समर्पयामि (अहमिति शेषः) झटिति विश्रम्भाय वर्तमाननिर्देशः । (विन-तात्मजाय ददामीति सम्प्रदाननिर्देशादात्मनः कृतार्थता व्यज्यते) । एकस्यैवाऽह-मिति कर्तृकारकस्य प्रावरण-रक्षण-दानक्रियास्वन्वयाद्दीपकालंकारः । नायकाध्यव-सायस्य प्रागेव निश्चितत्वेन यथार्थवर्णनात्स्वभावोक्तिश्चेत्युभयोः संसृष्टिः । प्रासा-दाख्योऽत्र गुणः । उपजाति वृत्तम् ॥१३॥

( ख ) इत्थं नायकविचारमाकर्ण्य पुत्रवत्सलाऽपि नागमाता तस्यानुचितत्वं निरूपयन्ती कर्णपिधानपूर्वकमाह—प्रतिहतं खल्वेतदित्यादि । एतत् तव वचन प्रतिहतं निवर्त्तितं (भवत्विति शेषः) । तवैतद्वचनं चेतस्येव तिष्ठतु कदापि प्रका-

णिव्विसेसो पुत्तो । अहवा संखचूड़ादो वि अहिअअरो, जो एव्वं वंधु-जणपरिच्चित्तं वि पुत्तअं मे सरीरपदाणेण रक्खिदुमिच्छसि ।

शङ्खचूड़ः—अहो !! जगद्विपरीतमस्य महासत्त्वस्य चरितम् । कुतः ?—

विश्वामित्रः श्वमांसं श्वपच इव पुराऽभक्षयद् यन्निमित्तं
नाड़ीजङ्घो निजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन ।

---

शितं नैव भवत्विति भावः । निर्नास्ति विशेषो यस्य स निर्विशेषः शंखचूडान्नि-र्विशेषः शंखचूडसदृश इत्यर्थः । पक्षान्तरेणाऽधिक्यमुपपादयति—अथवेति । वन्धु-जनपरित्यक्तम् = सम्बन्धिवर्गनिरस्तम् । शरीरदानेन = स्वशरीरव्ययेन । स्वशरीरं व्ययीकृत्य ममात्मजं रक्षितुमुत्सुको भवानेव शंखचूडादप्यधिकः । अत एवैकात्मज-व्ययेनाऽपरात्मजपरित्राणं न मे प्रीतिजनकं धर्मप्रतिकूलञ्चेति भावः ।

नायकस्यैवमध्यवसायमाकर्ण्य शंखचूडस्तद्गौरवोत्कर्षं निरूपयन् विस्मया-पन्नः सन् प्राह—अहो ॥ जगद्विपरीतमस्येति । अस्य महासत्त्वस्य महोत्साह-विशिष्टस्य चरितं व्यवसायं जगद्विपरीतम् लोकविसदृशम् इत्यहो आश्चर्यमेत-दित्यर्थः । नैतन्महासत्त्वव्यतिरिक्तस्य कस्यापि चरितमीदृशं जगति दृष्टमिति भावः ।

एतन्महासत्त्वचरितस्य दृष्टान्तेन जगद्विसादृश्यमुपपादयति शङ्खचूडः—विश्वामित्र इत्यादि । विश्वामित्रः गाधिसुतो मुनिः ( विश्वस्य मित्रमिति विग्रहे—( मित्रे चर्षौ ) इति दीर्घः—अभिधानात्पुंस्त्वं च *पुरा पूर्वकाले यन्निमित्तं येषां प्राणानां रक्षार्थमित्यर्थः । श्वपच इव चाण्डाल इव श्वमांसं कुक्कुरमांसम् अत्य-मेध्यमपीति भावः । †अभक्षयत् भुक्तवान् । गौतमेन तन्नाम्ना केनचिद्ब्राह्मणेन कृता तदुपकृतिस्तस्य गौतमस्योपकारो येन तादृशो ‡नाडीजङ्घस्तदाख्यः कश्चित्

---

*इत्थञ्चात्रेतिहासः श्रूयते—पुरा किल विश्वामित्रश्चिरात्तपसो निवृत्तः क्षुधार्त्तः सन् किमपि भक्ष्यमपश्यन् श्वपचाच्छ्वमांसमभ्यर्थयन् बहुशस्तेन निवारितोऽपि प्राणत्राणस्यावश्यकत्वं प्रदर्श्य युक्त्या तम्प्रबोध्य श्वमांसं भक्षितवानिति ।

†उक्तञ्च मनुना—

क्षुधार्त्तश्चात्तुमभ्यागाद् विश्वामित्रः श्वजाघनीम् ।
चाण्डालहस्तादादाय धर्माधर्मविचक्षणः ॥ इति ।

‡अत्रापीत्थमितिहासो महाभारतीयः श्रूयते—पुरा किल गौतमनामा कश्चित्कृपणो ब्राह्मणो धनप्राप्तीच्छया भ्रमन् नाडीजङ्घेन पक्षिणा दृष्टः, स च ब्राह्मणस्य धनार्थित्वमवेत्य कृपया कस्य-

पुत्रोऽयं कश्यपस्य प्रतिदिनमुरगानत्ति तार्क्ष्यो यदर्थं
प्राणांस्तानेष साधुस्तृणमिव कृपया यः परार्थं ददाति ॥१४॥

(नायकमुद्दिश्य)। भो महासत्त्व! त्वया दर्शिता एव आत्मप्रदान-व्यवसायनिर्व्याजा मयि कृपालुता, तदलमनेन निर्बन्धेन। पश्य।—

जायन्ते च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः।
परार्थं बद्धकक्ष्याणां त्वादृशामुद्भवः कुतः? ॥१५॥

तत् किमनेन निर्बन्धेन? मुच्यतामयमध्यवसायः।

---

पक्षी (एतेन कृतघ्नताख्यो दोषो द्योतितः) यत्कृते येषां प्राणानां निमित्तमित्यर्थः। निजघ्ने निहतः (नि × हन् × कर्मणि लिट्)। (पक्षान्तरे—गौतमेन मुनिना यत्कृते यस्य प्राणस्य निमित्तं नाडीजङ्घस्तदाख्यो मुनिर्निजघ्ने निहित इत्यर्थः)। कश्यपस्य ब्रह्मणः पुत्रस्य प्रजोत्पादकस्य मुनेरित्यर्थः पुत्रोऽयं तार्क्ष्यो गरुडः यदर्थं येषां प्राणानां रक्षार्थं प्रतिदिनं नित्यम् उरगान् नागान् अत्ति भक्षयति। तान् प्राणान् य एष साधुः परोपकारशीलः परार्थं परप्राणरक्षार्थं कृपया तृणमिव ददाति उत्सृजति। तस्यास्य महासत्वस्य चरितं जगद्विपरीतमिति गद्येन सम्बन्धोऽनु-सन्धेयः। विश्वामित्रादयो निजात्मत्राणार्थमसत्कार्यकारिणोऽयन्तु परार्थमात्मदाना-त्सत्कार्यकारीति तेभ्योऽयमुत्कृष्ट इति भावः। उपमानभूतविश्वामित्राद्यपेक्षयोपमेय-भूतनायकस्योत्कर्षवर्णनाद्व्यतिरेकालंकारः। यथावद्वस्तुवर्णनात्स्वभावोक्तिश्चेत्युभय-मुपमोत्प्रेक्षाभ्यामनुजीवितः। वृत्तञ्चेह स्रग्धरा नाम ॥१४॥

अथ मातरं याचमानस्य नायकस्याग्रहं प्रशंसन् शङ्खचूडस्तामात्मनोऽभि-मुखं विधाय वारयति—भो महासत्त्वेति। (एतन्निर्बन्धेनैव महासत्त्वमपि प्रका-शितमिति भावः)। आत्मप्रदानव्यवसायनिर्व्याजा = आत्मनो निजशरीरस्य प्रदाने परार्थसमुत्सर्जने व्यवसायेनोद्योगेन निर्व्याजा निश्छलेत्यर्थः। कृपालुता = निज-महत्वसदृशी दयावतेत्यर्थः। मयि = अनन्यशरणे। दर्शिता = प्रकाशिता। अनेन = वध्यचिन्हाद्यभ्यर्थनात्मकेन। निर्बन्धेन = आग्रहेण।

नायकस्योत्कर्षं वर्णयति शंखचूडः—जायन्त इति। मद्विधा मादृशाः अहमिव दृश्यमाना इत्यर्थः। क्षुद्रजन्तवोऽधमप्राणिनः (क्षुद्रकर्मप्रभावात् कृमि-

---

चिद्दानशीलस्य राक्षसस्यान्तिकं प्रेषितवान् ब्राह्मणश्च ततोऽधिकतरधनमादाय प्रत्यागत्य नाडीजङ्घान्तिके विश्रान्तो रात्रावतिक्षुधार्त्तो धनव्ययं स्वकीयमसहिष्णुस्तमेव पक्षिणं निहत्य विपच्य च भक्षितवानिति।

नायकः—शङ्खचूड ! न मे चिराल्लब्धावसरस्य अस्य परार्थसम्पादनमनोरथस्यान्तरायं कर्त्तुमर्हसि, तदलं विकल्पेन । दीयतामेतद् वध्यचिह्नम् ।

शङ्खचूडः—भो महासत्त्व ! किमनेन वृथाऽऽत्मायासेन ? न खलु, शङ्खधवलं शङ्खपालकुलं शङ्खचूडो मलिनीकरिष्यति । यदि ते वयमनुकम्पनीयाः, तदा इयमस्मद्विपत्तिविक्लवा न यथा जीवितं जह्यात्, तथाऽभ्युपायः चिन्त्यताम् ।

---

कीटादयो वा ) । जायन्ते उत्पद्यन्ते म्रियन्ते विनश्यन्ति च । परार्थं परप्राणरक्षार्थं बद्धकक्ष्याणां बद्धं कक्ष्यं यैस्तादृशानां बद्धपरिकराणां संनद्धानामिति यावत् । त्वादृशाम् त्वत्सदृशानामित्यर्थः । उद्भवः उत्पत्तिः कुतः । न कुत्रापि त्वद्विधा जायन्त इत्यर्थः । माणिक्यनिभात्मकायत्यागान्मद्रक्षणस्य विशिष्टधातुत्यागपूर्वक गैरिकपरिग्रहणसादृश्यादुक्तनिर्बन्धो भवदीयो न युक्तियुक्तः प्रतिभातीति भावः । उपमेयभूत-शंखचूडापेक्षयोपमानभूत-नायकस्योत्कर्षवर्णनाद्व्यतिरेकालङ्कारः । त्वत्सदृशपुरुषोत्पत्त्यभावे परार्थंबद्धकक्ष्यत्वहेतोः पदार्थगतत्वात्पदार्थहेतुकं काव्यलिङ्गञ्च । परार्थंद्युतानां त्वत्सदृशानां कुत उद्भवोऽपि तु नैवोद्भवः कुतोऽपीत्यर्थस्याऽर्थादापातत्वादर्थापत्तिश्चेति त्रयाणामिह संसृष्टिः । अनुष्टुप्वृत्तम् ॥ १५॥

चिराल्लब्धावसरस्य = चिराद्दीर्घकालात् ( उत्तरं ) लब्धावसरस्य = प्राप्तसमयस्येत्यर्थः । परार्थसम्पादनमनोरथस्य = परार्थस्य परप्रयोजनस्य सम्पादने निर्वहणे यो मनोरथो वाञ्छा तस्याऽन्तरायं विघ्नमित्यर्थः । विकल्पेन = युक्तायुक्तादिविवेककल्पनेन ।

इत्थमाग्रहातिशयमालक्ष्य नायकस्य शंखचूडो भूयस्तं निरस्यति—भो महासत्त्वेत्यादिना । वृथात्मायासेन=वृथा निरर्थको य आत्मायासो निजोद्योगस्तेन शंखधवलम्=शंखवत् स्वच्छं कलङ्करहितमित्यर्थः । शंखपालकुलम्=शङ्खपालस्य शङ्खचूडपितुः कुलं वंशम् । मलिनीकरिष्यति=कालुष्यवन्तं विधास्यति । स्वाम्यादेशमपहाय निजकायलोभादन्यकायविनिमयार्जिताधर्मायशः कलङ्केन नैव दूषयिष्यामि निजपितुर्वंशमिति भावः । नायकचित्तावर्जनाय निजवैरूप्यपरिहाराय च पक्षान्तरमुपन्यस्यति—यदीति । अनुकम्पनीयाः = अनुग्राह्याः । अस्मद्विपत्तिविक्लवा = मद्दुःखविह्वलेत्यर्थः । इयम् = मदीया वृद्धा जननी । यथा = यादृशोपायेन । जीवितम् = प्राणम् । जह्यात् = त्यजेत् । तथा = तादृशः । अभ्युपायः=प्रतीकारः । चिन्त्यताम् = विचार्यताम् ।

नायकः—किमत्र चिन्त्यते । चिन्तित एवाऽभ्युपायः । स तु त्वदायत्तः ।

शङ्खचूडः—कथमिव ।

नायकः—

म्रियते म्रियमाणे या त्वयि जीवति जीवति ।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममासुभिः ॥१६॥

अयमभ्युपायः । तदर्पय त्वरितं वध्यचिह्नं, यावदनेनात्मानं प्रच्छाद्य वध्यशिलामारोहामि; त्वमपि जननीं पुरस्कृत्य अस्माद् देशान्निवर्त्तस्व, कदाचिदम्बा आलोक्य घातस्थानं सन्निकृष्टं स्त्रीस्वभावकातरत्वेन जीवितं जह्यात्; किं न पश्यति भवानिदं विपन्नपन्नगानेककङ्कालसङ्कुलं महाश्मशानम् ?

---

शङ्खचूडोक्त्या तस्य ममत्वाधिक्यमालक्ष्य तमावर्जितुं नायकः प्राह—चिन्तित एवेति । ( प्रागेवेति शेषः ) । स तु त्वदायत्तः = मया चिन्तितोपायस्य निर्वाहकस्त्वमेवेति भावः ।

नायकस्यान्तरभिप्रायमजानानः शङ्खचूडः पृच्छति—कथमिवेति । कथं त्वया चिन्तितोऽभ्युपायो निर्वोढव्य इति ।

चिन्तितोपायं विशदयति नायकः—म्रियत इति । या ते तव ( माता ) त्वयि भवति म्रियमाणे मर्त्तुमुद्यते ( सति ) म्रियते मर्त्तुमुद्यता ( भवति ) त्वयि जीवति प्राणंधारयति ( सति ) जीवति प्राणं धारयति । तां तव मातरम् यदि जीवन्तीम् अवियुक्तप्राणाम् इच्छसि वाञ्छसि, तदा मम असुभिः प्राणैः आत्मानं ( स्वस्य-मातुश्चेति शेषः ) रक्ष । अत्र छेकाऽनुप्रासोऽलङ्कारः। अनुष्टुप्वृत्तम् ॥१६॥

अयमभ्युपायः = अयमेवोपाय इत्यर्थः ( तव-मातुश्च जीवरक्षण इति शेषः ) । अर्पय = देहि । त्वरितम् = शीघ्रम् । वध्यचिन्हम् = रक्तांशुकद्वयरूपमित्यर्थः । अनेन = रक्तांशुकद्वयेन । प्रच्छाद्य = प्रावृत्य । ( प्र × छादि × ल्यप् ) । जननीम् = मातरम् । पुरस्कृत्य = अग्रतो विधाय । अस्मात् देशात् = अस्मात् स्थानात् । निवर्त्तस्व = गच्छ । एतदकरणे पाक्षिकत्वेन दोषमुद्घाटयति—कदाचिदिति । अम्बा = माता । घातस्थानम् = वध्यदेशम् । सन्निकृष्टम्=समीपस्थम् । स्त्रीस्वभावकातरत्वेन = स्वाभाविकस्त्रीजनाऽधैर्येण । विपन्नपन्नगानेककङ्कालसङ्कुलम् = विपन्ना विनष्टा ये पन्नगा नागास्तेषामनेकैर्बहुभिः कङ्कालैः शरीरास्थिभिः

तथाहि—

चञ्चच्चञ्च्वग्रकृत्तच्युतपिशितलवग्राससंवृद्धगर्द्धै-
र्गृध्रैराबद्धपक्षद्वितयविधुतिभिर्बद्धसान्द्रान्धकारे।
वक्त्रोद्वान्ताः पतन्त्यः शमितशिखिशिखाश्रेणयोऽस्मिन् शिवानाम्
अस्रस्रोतस्यजस्रस्रुतिबहुलवसावासविस्रे स्वनन्ति ॥१७॥

शङ्खचूडः—कथं न पश्यामि ?—

---

(स्याच्छरीरास्थि कङ्काल इत्यमरः) सङ्कुलं व्याप्तमित्यर्थः। महाश्मशानम् = शवशयनस्थानम्। (श्मानः शवाः शेरते यत्र तत् श्मशानम्। पृषोदरादित्वात्साधुत्वम्)। (श्मन्शब्देन शवः प्रोक्तः शानं तत्स्थाननमुच्यते इति निरुक्तम्)। महच्च तत् श्मशानम् महाश्मशानम्। भयानकं प्रेतस्थानमित्यर्थः।

महाश्मशानं वर्णयति—चञ्चदिति। चञ्चता चलता चञ्च्वग्रेण चञ्च्वोरग्रभागेन (गरुडस्येति शेषः) कृत्तस्य छिन्नस्य (अत एव) च्युतस्य भ्रष्टस्य पिशितस्य मांसस्य यो लवः खण्डं तस्य ग्रासे भक्षणे संवृद्धः सञ्जातो गर्द्धो लिप्सा येषां तादृशैः पिशितखण्डेच्छुभिरित्यर्थः। तथा—आबद्धा आरचिता पक्षद्वितयस्य पक्षद्वयस्य विधुतयः कम्पनानि यैस्तादृशैः। गृध्रैः तदाख्यपक्षिभिः (कर्तृभिः)। बद्धरोचितः सान्द्रो निविडोऽन्धकारो यत्र तादृशे। तथा—अजस्रस्रुतयोऽनवरतस्रावाश्च ता बहुलवसाः प्रभूतमेदसस्तासां वासेन सम्पर्केण विस्रे आमगन्धवति (विस्रं स्यादामगन्धि यदित्यमरः) अस्मिन् महाश्मशाने, अस्रस्रोतसि प्रतिदिनप्रचीयमानरुधिरप्रवाहे, (विषये) शिवानामुल्कामुखानां वक्त्रोद्वान्ता मुखोद्गीर्णाः अत एव पतन्त्यो विच्युता (भ्रष्टाः) शमितशिखिशिखाश्रेणयः शमिता (अस्रस्रोतसा) शान्तिम्प्राप्ताः शिखिशिखाश्रेणयो मुखोत्थपावकार्चिपङ्क्तयः स्वनन्ति। शब्दायन्ते। दाह्यपदार्थेषु वसादिषु च्युताः सन्तश्चट-चटाशब्दं कुर्वन्तीत्यर्थः। मांसखण्डलुब्धैः कृतपक्षकम्पनै गृध्रैर्जाताधिकान्धकारे वसादुर्गन्धवति महाश्मशाने (विषये) नित्यसञ्चितरुधिरप्रवाहे उल्कामुखपतिताग्निपङ्क्तयः स्वनन्ति (चट चटाशब्दं कुर्वन्तीति भावः)। अनेकव्यञ्जनवर्णसमुदायस्य साम्यादिहाऽनुप्रासोऽलङ्कारः। गृध्रपक्षकृतान्धकारवत्त्वाद्दिनस्याऽपि रात्रिवत्प्रतीयमानत्वादुत्प्रेक्षा। श्मशानस्य यथावद्वर्णनात्स्वभावोक्त्यनुजीवितः। एवञ्चैतयोरुपजीव्योपजीवकभावापन्नत्वात्साङ्कर्यम्। निरपेक्षतयाऽनुप्रासेन सह संसृष्टिः। स्रग्धरावृत्तम् ॥१७॥

प्रतिदिनमशून्यमहिनाहारेण विनायकाहितप्रीति ।
शशिधवलास्थिकपालं वपुरिव रौद्रं श्मशानमिदम् ॥१८॥

नायकः—शङ्खचूड ! तद् गच्छ, किमेभिः सामोपन्यासैः ?

शङ्खचूडः—आसन्नः खलु गरुडस्यागमनसमयः । (मातुरग्रतो जानुभ्यां स्थित्वा) । अम्ब ! त्वमपि निवर्त्तस्वेदानीम् ।—

समुत्पत्स्यामहे मातर्यस्यां यस्यां गतौ वयम् ।
तस्यां तस्यां प्रियसुते ! माता भूयास्त्वमेव नः ॥१९॥

(पादयोः पतति) ।

---

शङ्खचूडोऽपि नायकोक्तिमाकर्ण्य महाश्मशानमतिभीषणत्वेन वर्णयति—प्रतिदिनमिति । प्रतिदिनं प्रत्यहं दिने दिने इति यावत् (वीप्सार्थकोऽत्राऽव्ययीभावः) । आहारेण भोज्येन अहिना नागेन अशून्यं युक्तम् । तथा—वीनां पक्षिणां (शकुन्ति–पक्षि–शकुनि–वि–विष्किर–पतत्रय इत्यमरः) नायकोऽधीश्वरो गरुडस्तस्य आहिता स्थापिता प्रीति र्यत्र तादृशम् । तथा—शशिवत् धवलं स्वच्छम् अस्थिकपालं यत्र तादृशम् । रौद्रं भयानकम् इदं श्मशानम् रौद्रं शैवं वपुरिव (विभातीति शेषः) ।

(पक्षान्तरे)—प्रतिदिनम् हारेण माल्येन अहिना सर्पेण अशून्यं युक्तं शोभितमिति यावत् । विनायकस्य गणेशस्य (विनायकाय गणेशाय) वा आहिता स्थापिता प्रीति र्यत्र । यद्वा—विनायकेन गणेशेन आहिता कृता प्रीतिर्यत्र तादृशम् । शशिना शिरस्थितचन्द्रकलया धवलानि शुभ्राणि बहुलद्युतीनि अस्थीनि शरीरास्थीनि माल्यभूतानीत्यर्थः, कपालानि शिरोऽस्थीनि भिक्षापात्रभूतानि यत्र तादृशम् । रौद्रं शैवं वपुः शरीरमित्यर्थः । श्लिष्टोपमाऽत्रालंकारः । आर्यानाम वृत्तम् ॥१८॥

सामोपन्यासैः = सान्त्वनावचनाभिधानैरित्यर्थः । किम् अलं निष्प्रयोजनमिति यावत् । सान्त्वनावचनोपन्यासो निष्प्रयोजन इति भावः ।

आसन्नः = निकटवर्त्ती ।

इष्टार्थाशंसनपूर्वकं शंखचूडो मातरम्प्रत्याह—समुपत्स्यामह इति । हे प्रियसुते ! प्रियपुत्रे ! मातः ! वयम् (अस्मदो द्वयोश्चेति सूत्राऽनुरोधादेकत्वेऽपि बहुत्वम्) । यस्यां यस्यां गतौ योनौ देव-नर-पश्वादियोनावित्यर्थः । समुपत्स्यामहे जनिष्यामहे । तस्यां तस्यां (गतौ) योनौ त्वमेव नोऽस्माकं माता जननी भूया भव । (लिङाशिषीति लिङ) । अत्र परिसंख्यालंकारः । अनुष्टुप्वृत्तम् ॥१९॥

वृद्धा—(सास्रम्)। (क) कहं अपच्छिमं वअणं ? पुत्तअ ! ण क्खु तुमं उज्झिअ एमे पाआ अण्णदो वहंति, ता इह ज्जेव्व तुए सह चिट्टिस्सं ।

शङ्खचूडः—(उत्थाय)। यावदहमपि अदूरे भगवन्तं दक्षिणगोकर्णं प्रदक्षिणीकृत्य स्वाम्यादेशमनुतिष्ठामि ।

(उभौ निष्क्रान्तौ)।

नायकः—कष्टम् । न सम्पन्नमभिलषितम् । तत् कोऽत्राऽभ्युपायः ।

कञ्चुकी—(सहसा प्रविश्य) इदं वासोयुगम् ।

---

(क) कथमपश्चिमवचनम् ? पुत्रक ! न खलु त्वाम् उज्झित्वा मे पादौ अन्यतो वहतः, तदिहैव त्वया सह स्थास्यामि ।

---

शंखचूडस्य जीवितावसानकालिकोक्तित्वदुक्तिमाकर्ण्य जननी साश्रुमुखीभूय तम्प्रत्याह—कथमपश्चिमं वचनमिति । अपश्चिमम् अविद्यमानं पश्चिमं पश्चात् यस्मात् तत् । वचनम् = वाक्यम् । यद्वाक्यापेक्षयोत्तरमन्यद्वाक्यं नास्ति तादृशं क्लिष्टवाक्यमित्यर्थः ! अम्ब । निवर्त्तस्वेदानीमित्याद्यवसानकालिकवाक्यमिति भावः । कथम् = केन प्रकारेण (त्वं कथयसीति शेषो बोध्यः । उज्झित्वा=त्यक्त्वा । (उज्झ त्यागेऽस्मात् क्त्वा)।

शङ्खचूडो मातृवचोऽनाकर्णयन् स्थिरमतिः सन्नुत्थाय कर्त्तव्यं स्थिरयति—यावदहमपीति । अदूरे = सन्निहिते । गोकर्णम् = तदाख्यं शिवलिङ्गम् । प्रदक्षिणीकृत्य = परिक्रम्य । (एतेनात्मनः कृतार्थता व्यज्यते)। स्वाम्यादेशम् = नागराजाज्ञाम् । अनुतिष्ठामि = साधयामि ।

गते मात्राऽनुगम्यमाने शङ्खचूडे नायको निजाध्यवसायप्रत्यूहमाकलय्य खिन्नमनाः प्राह—कष्टमित्यादि । कष्टम् = निजमनोरथासिद्धिरूपः क्लेश इत्यर्थः । अभिलषितम् = वाञ्छितम् रक्तांशुकद्वयरूपं तत्साध्यदेहविसर्जनञ्चेत्यर्थः । सम्पन्नम् = सिद्धम् ।

कोऽत्राभ्युपाय इति नायकोक्तौ दैवात्पूर्वप्रस्तुतः कञ्चुकी सहसा प्रविश्य इदं वासोयुगमिति नायकोक्तवाक्यशेषत्वेन वाक्यान्तरशेषमुक्तवान् । इदं वासोयुगलमभ्युपाय इति पूर्ववाक्यतः सम्बन्धोऽनुसन्धेयः ।

नायकः—(दृष्ट्वा सहर्षमात्मगतम्)। दिष्ट्या सिद्धमभिवाञ्छितम् अनेन अतर्कितोपनतेन रक्तांशुकयुगलेन।

कञ्चुकी—( प्रविश्य )। इदं वासोयुगं देव्या मित्रावसुजनन्या कुमाराय प्रेषितम्; तदेतत् परिधत्तां कुमारः।

नायकः—( सादरम् )। उपनय।

कञ्चुकी—( उपनयति )।

नायकः—( गृहीत्वा आत्मगतम् )। सफलीभूतो मे मलयवत्याः पाणिग्रहणविधिः। ( प्रकाशम् )। कञ्चुकिन्! गम्यतां, मद्वचनादभिवादनीया देवी।

कञ्चुकी—यदाज्ञापयति कुमारः। (इति निष्क्रान्तः)।

---

दृष्ट्वा=रक्तांशुकमादाय आगच्छन्तं कञ्चुकिनं दूरतो वीक्ष्येत्यर्थः। दिष्ट्या=हर्षसूचकमव्ययम् = हर्षश्च परार्थदेहोत्सर्जनेन। सिद्धम् = परिपूर्णम्। अभिवाञ्छितम् = मनोरथम्। अतर्कितोपनतेन = सहसोपस्थितेन। ( अतर्कितेत्यदो दैवानुकूल्यं द्योतयति )

प्रीतः कञ्चुकी द्रुतं सहसोक्तवाक्याङ्गस्य निजादेशाभिधानद्वारा पूर्त्तिमासाधयति—इदं वासोयुगमित्यादिना। प्रेषितम् = मद्द्वारा प्रहितमित्यर्थः। परिधत्ताम्=स्वाङ्गे परिधेहीत्यर्थः। स्वेप्सितसाधनार्थमिति भावः। (परि × धा × कर्तरि लोट्—आत्मनेपदैकवचनम्॥

उपनय = देहि।

कञ्चुकिसमर्पितवासोयुगमादायात्मनः कृतकृत्यतां मन्यमानो नायक आत्मगतमाह—सफलीभूत इत्यादि। सफलीभूतः = सफलतांप्राप्तः। मलयवत्याः = मित्रावसुसुतायाः ( निजप्रियायाः ) पाणिग्रहणविधिः = विवाहसम्बन्धः। मलयवतीविवाहसम्बन्धेन तन्मातृप्रेषितरक्तांशुकयुगस्य परार्थकायविसर्जनात्मककार्यसाधकवध्यचिन्हसम्पादकत्वादुक्तसम्बन्धस्य साफल्यमिति भावः। ( एतेन दूरानुवृत्तमपि शृंगारं दयोत्साहशेषभूतमिति स्वोक्त्यैव प्रकाशितम् )। मद्वचनादभिवादनीया देवी = मत्कृता प्रणतिस्तस्यै निवेदनीया त्वयेति भावः।

नायकः—

वासोयुगमिदं रक्तं प्राप्ते काले ममागतम् ।
महतीं प्रीतिमाधत्ते परार्थे देहमुज्झतः ॥ २० ॥

(दिशोऽवलोक्य) । यथाऽयं चलितमलयाचलशिलासञ्चयः प्रचण्डो नभस्वान्, तथा तर्कयामि, आसन्नीभूतः खलु पक्षिराज इति । तथाहि,—

तुल्याः संवर्त्तकाभ्रैः पिदधति गगनं पङ्क्तयः पक्षतीनां
तीरे वेगानिलोऽम्भः क्षिपति भुव इव प्लावनायाम्बुराशेः ।

---

इत्थं निजसमीहितसिद्धिं श्लाघमानो नायकः स्वयमाह—वासोयुगमिति । काले स्वेप्सितसिद्धिसमये प्राप्ते समुपस्थिते (सति) आगतं भाग्यात्सम्प्राप्तम् इदं साक्षाद्दृश्यमानं रक्तं वासोयुगं रक्तांशुकद्वयम्, परार्थे परप्राणरक्षणाय देहं निजशरीरम् उज्झतस्त्यजतो मम महतीम् बह्वीम् प्रीतिं प्रसन्नताम् आधत्ते समुत्पादयति । भाग्यादागतस्य वासोयुगात्मकवस्तुनः परार्थदेहोत्सर्जनात्मककार्ये सौकर्याधायकत्वादिह समाधिरलंकारः । तदुक्तं दर्पणकृता—

समाधिः सुकरे कार्ये दैवाद्वस्त्वन्तरागमात् ।

इति । अनुष्टुप्वृत्तम् ॥२०॥

पुनर्दिगवलोकनपूर्वकं गरुडागमनमनुमिनोति—यथायमित्यादिना । चलितो निजस्थानात्पातितो मलयाचलस्य तन्नामपर्वतस्य शिलासंचयो येन तादृशः प्रचण्डः = तीव्रः । नभस्वान् = पवनः । (नभस्वद्वातपवनपवमानप्रभंजना इत्यमरः) (वातीति शेषः) । तर्कयामि = अनुमिनोमि । अनासन्न आसन्नः संजातः आसन्नीभूतः (अभूततद्भावार्थे च्विः) सन्निधिस्थ इत्यर्थः । (वायोर्वेगवत्त्वं पक्षिराजस्यासन्नीभूतत्वमनुमापयति) ।

न केवलं तथानुमानमेव दृश्यतेऽपि तथेत्यभिप्रेत्य वक्ष्यमाणहेतुभिर्गरुडागमनं वर्णयति नायकः—तुल्या इति । संवर्त्तकाभ्रैः प्रलयकालिकसजलजलदैः ( संवर्त्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपीत्यमरः ) । यद्वा—संवर्त्तकाभ्रैस्तदाख्यसजलमेघैरित्यर्थः ( आवर्त्तश्चैव संवर्त्तः पुष्करो द्रोण एव चेत्युक्तेः ) तुल्याः सदृशः पक्षतीनां पार्श्वद्वयोपरि पङ्क्तिशः स्थितानां तिर्यक्प्रसृतपक्षमूलानामित्यर्थः । ( पक्षतिस्तु भवेत्पक्षमूले च प्रतिपत्तिथाविति मेदिनी ) पङ्क्तयः श्रेणयो गगनमाकाशं पिदधति आच्छादयन्ति (इव)—शब्दोऽयमध्याहारलभ्यः । (अपि × धा × लट्—अपरेकारलोपः) । वेगानिलो वेगयुक्तः पवनः (पक्षद्वयोत्थ इति भावः)

कुर्वन् कल्पान्तशङ्कां सपदि च सभयं वीक्षितो दिग्द्विपेन्द्रैः
देहोद्द्योतैर्दशाऽऽशाः कपिशयति मुहुर्द्वादशादित्यदीप्तिः ॥२१॥

तद्यावदसौ नागच्छेत् शङ्खचूडः, तावत् त्वरिततरमिमां वध्य-शिलामारोहामि। ( तथा कृत्वा उपविश्य स्पर्शं नाटयति )। अहो स्पर्शोऽस्याः

न तथा सुखयति मनो मलयवती मलयचन्दनरसाऽऽर्द्रा ।
अभिवाञ्छितार्थसिद्ध्यै वध्यशिलेयं यथाऽऽश्लिष्टा ॥२२॥

---

भुवः पृथिव्याः प्लावनाय स्वस्मिन् निमग्नीकरणाय इव अम्बुराशेः समुद्रस्य अम्भो जलं तीरं तस्यैव तटमित्यर्थः क्षिपति प्रेरयति विभिद्याऽऽक्रमतीति यावत् उत्प्रेक्षा-हेतु—जलोत्प्लवनाधिक्यात् तद्धेतुवेगस्य दुःसहत्वं द्योत्यते )—( प्लावनोत्प्रेक्षया च वेगानिलस्योत्पातानिलसादृश्यं प्रतीयते ) अत एव सपदि शीघ्रं कल्पान्तशङ्कां प्रलयकालसन्देहं कुर्वन् सम्पादयन्। तथा—दिग्द्विपेन्द्रैः दिक्सीमावर्त्तिभिर्गजै-रित्यर्थः। मुहु र्भूयोभूयः सभयं ससाध्वसं वीक्षितो दृष्टः। तथा—द्वादशादित्यदीप्ति द्वादशार्कतुल्यः ( पक्षिराज इति शेषः )। देहोद्द्योतैः शरीरदीप्तिभिः दश आशाः ककुभः कपिशयति कृष्ण-पीतोभयवर्णवतीः करोतीत्यर्थः। कल्पान्तमेघतुल्यपक्ष-तिकान्त्या कृष्णत्वात् द्वादशार्कवद्देहकान्त्या पीतत्वाच्चोभयवर्णवत्त्वं दिशामवधेय-मिति भावः। पूर्वार्द्धे उत्प्रेक्षालंकारः। तृतीयपादे दिक्करिणां प्रलयभ्रान्त्या सभयावलोकनस्याऽयोगेऽपि तद्योगाऽभिधानादयोगे योगप्रतिपादनात्मिकाऽतिश-योक्तिरलङ्कारः। तुर्यपादे चोपमालङ्कारः। एषामङ्गाङ्गिभावेन साङ्कर्यम्। स्रग्धरा नाम वृत्तम् ॥ २१ ॥

शंखचूडागमनशंकया तत्प्रागेवात्मसाध्यसाधनार्थमुपक्रमते नायकः—तद्या-वदसाविति। स्पर्शं नाटयति = वध्यशिलास्पर्शमनुभवतीत्यर्थः। अहो स्पर्शो-ऽस्याः = वध्यशिलायाः स्पर्शः अहो आश्चर्यभूतः सुखाधिक्योत्पादनादिति भावः।

वध्यशिलास्पर्शसुखमेव वर्णयति नायकः—न तथेति। यथा येन प्रकारेण इयम् वध्यशिला अभिवाञ्छितार्थसिद्ध्यै परजीवत्राणात्मकेप्सितप्रयोजनसाफ-ल्याय आश्लिष्टा आलिङ्गिता सती मनश्चित्तं ( ममेतिशेषः ) सुखमुत्पादयति तथा तेन प्रकारेण मलयचन्दनरसार्द्रा श्रीखण्डचन्दनलिप्ताङ्गी मलयवती अभिवा-ञ्छितार्थसिद्ध्यै ईप्सितरतिप्रयोजनसिद्ध्यर्थमित्यर्थः। ( अनेन स्वोक्त्यैव वध्यशिला-यामपि शृङ्गारस्याङ्गत्वमभिव्यक्तीकृतम् ) मनो न सुखयतीत्यर्थः। उपमानभूतम-लयवत्यपेक्षयोपमेयभूतवध्यशिलाया अधिकसुखप्रदत्वोक्त्या व्यतिरेकोऽत्राऽलङ्कारः। आर्यावृत्तम् ॥२२॥

अथवा किं मलयवत्या ?

शयितेन मातुरङ्के विश्रब्धं शैशवे न तत् प्राप्तम् ।
लब्धं सुखं मयाऽस्या वध्यशिलाया यदुत्सङ्गे ॥२३॥

तदयमागत एव गरुत्मान् यावदात्मानमाच्छादयामि ।

(तथा करोति)।

(ततः प्रविशति गरुडः)

गरुडः—एष भोः ?

---

मलयवतीस्पर्शसुखस्यानुत्कर्षाऽभिधानद्वारा ततोऽप्यधिकसुखप्रदं मातुरङ्कस्पर्शसुखमाक्षेप्तमुपक्रमते—अथवेति । किं मलयवत्या = मलयवतीस्पर्शसुखवर्णनं व्यर्थमित्यर्थः ।

मातुरङ्कस्पर्शसुखाक्षेपमुपपादयति—शयितेनेति । अस्याः सम्प्रति स्पृश्यमानाया वध्यशिलाया उत्सङ्गे क्रोडे शयितेन सुप्तेन मया यत् सुखं शर्म (शर्मशातसुखानि चेत्यमरः)। लब्धं प्राप्तम् । तत् (सुखं) शैशवे बाल्ये मात्राऽनवरतचिन्त्यमानयोगक्षेमहृद्ये वयसीत्यर्थः । मातुर्निजजनन्या अङ्के क्रोडे विश्रब्धं विश्वस्तं यथा तथा (शयितेन–मया) न प्राप्तं न लब्धमित्यर्थः । मातुरङ्कस्पर्शसुखादप्यधिकं वध्यशिलास्पर्शसुखमिति भावः । मात्रङ्करूपोपमानाऽपेक्षया वध्यशिलोत्सङ्गरूपोपमेयस्याऽधिक्योक्त्याऽत्राऽपि व्यतिरेकालङ्कारः । आर्यावृत्तम् ॥२३॥

एवं परजीवितरक्षणाय देहोत्सर्जनात्प्रीत्यतिशयम्प्रतिपाद्य गरुडागमनसमयं प्रतिपादयति—तदयमिति । तत् तस्मात् वध्यशिलास्पर्शस्य प्रीत्याधिक्यहेतुत्वादित्यर्थः । अयम् गरुत्मान् (गरुत् पक्षमस्यास्तीति विग्रहे गरुच्छब्दात्प्रशंसार्थकोऽत्र मतुप्) गरुड इत्यर्थः । (गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वर इत्यमरः)। आगत एव = अस्मत्प्रियार्थमिति भावः । (एवशब्देन विलम्बो व्यावर्त्यते)। आत्मानम् = निजशरीरम् । आच्छादयामि = आवृणोमि । (रक्तांशुकद्वयेनेति शेषः) नागवृद्धिसम्पादनायेति भावः ।

अथ गरुडप्रवेशं सूचयति कविः—ततः प्रविशतीत्यनेन ।

नागाशनाय वैकुण्ठतस्त्वरितमेव मलयाद्रिसानुमवतीर्णो मातास्पदीभूतहृदयो निजात्मानमवलोकमानो गरुडः प्राह—एष भोः इति । भोः इति सुखार्थद्योतकमव्ययम् । एतदुत्तरं (प्राप्तोऽस्मीति शेषः)। मध्ये (अहमिति शेषः)। तथा च एषोऽहं सुखेन प्राप्तोऽस्मीत्यर्थः फलितः । (एष इत्यनेन हर्षद्वारात्म-

दृष्ट्वा बिम्बं हिमांशोर्भयकृतवलयां संस्मरन् शेषमूर्त्तिं
सानन्दं स्यन्दनाश्वत्रसनविचलिते पूष्णि दृष्टोऽग्रजेन ।
एष प्राप्तावसज्जज्जलधरपटलैरायतीभूतपक्षः
प्राप्तो वेलामहीध्रं मलयमहमहिग्रासगृध्नुः क्षणेन ॥ २४ ॥

नायकः—(सपरितोषम्)

---

महत्त्वमेव प्रकाश्यते )। हर्षश्चात्रेयद्दूरमागतनिजात्मविलोकनजन्यो, दौरात्म्यान्नि-जमातरं दासीपदे स्थापयतामरीणामहीनां कुलोच्छेदनकृतार्थताजन्यश्च बोध्यः ।

स्वयमेव स्वागमनवेगं वर्णयति गरुडः—दृष्ट्वेति । हिमांशोश्चन्द्रस्य बिम्बं मण्डलं ( बिम्बोऽस्त्री मण्डलं त्रिष्वित्यमरः ) दृष्ट्वा विलोक्य भयेन ( मत्त इति शेषः )। कृतं सम्पादितं वलयं वर्तुलाकारेणाऽवस्थानं यथा यस्या वा तादृशीं शेषस्य अनन्तनागस्य मूर्त्तिं शरीरं संस्मरन् चिन्तयन् । तथा—पूष्णि सूर्ये ( मिहिरारुण-पूषण इत्यमरः ) स्यन्दनाश्वानां रथाश्वानां त्रसनात् ( कोऽयमुपद्रव उपस्थितः ) इति भयात् विचलिते ( कथमश्वानां भीतिरित्याशयेन ) चकिते (सति)। तथा—अग्रजेन ज्येष्ठभ्रात्रा अरुणेनेत्यर्थः ( सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रज इत्य-मरः )। सानन्दं भ्रातृदर्शनात् सहर्षं यथा तथा दृष्टो वीक्षितः । तथा—प्राप्तैः पथि सङ्गतैः अवसजद्भिः मत्पक्षोत्थवायुनेतस्ततश्चलद्भिः जलधराणां मेघानां पटलैः समूहैः आयतीभूता दीर्घीभूतवत्प्रतीयमानाः पक्षा यस्य तादृशः । तथा—अहीनां नागानां ग्रासे भक्षणे गृध्नुः साभिलाप एषोऽहं ( एष इत्यनेन प्रकृतं प्रति सन्नाहस्य प्रकाशनम् )। मलयं तदाख्यं वेलामहीध्रं सीमापर्वतं समुद्रतटवर्तिपर्वतमिति यावत् ( महीध्रः शिखरी क्ष्माभृदहार्यधरपर्वता इत्यमरः )। क्षणेन अतिस्वल्प-कालेन अचिरमाप्स्यमाननागभक्षणसुखात्मकोत्सवेन वा प्राप्तः समागतः ( अस्मीति शेषः )। आद्यपादे—स्मरणालङ्कारः । तृतीयपादे पक्षाणां मेघसमूहतो दीर्घीभूत-त्वाऽभावेऽपि तथा प्रतीयमानतया प्रतीयमानोत्प्रेक्षाऽलङ्कारः। तुरीयपादे—मलयेऽ-चिरागमनेऽहिग्रासगृध्नुत्वस्य हेतुत्वात्पदार्थकहेतुकं काव्यलिङ्गञ्च । एतेषामिह नैर-पेक्ष्यात्स्थित्या संसृष्टिरलङ्कारः । स्रग्धरा वृत्तम् ॥२४॥

गरुडागमनदर्शनादध्यवसायस्यात्मीयस्य साफल्यप्रायमवेत्य कृतार्थताम्मन्य-मानो नायकः सन्तोषमाविर्भावयति—संरक्षतेति । अद्य अस्मिन्नहनि अस्मिन् क्षणे वा स्वशरीरदानात् निजदेहसमर्पणात् ( गरुडायेति शेषः )। पन्नगम् उरगम् ( उरगः पन्नगो भोगी जिह्मगः पवनाशन इत्याद्यमरः )। संरक्षता संत्रायमाणेन

संरक्षता पन्नगमद्य पुण्यं मयाऽर्जितं यत् स्वशरीरदानात् ।
भवे भवे तेन ममैव भूयात् परार्थहेतोः खलु देहलाभः ॥

गरुड़ः—( नायकं निर्वर्ण्य )

अस्मिन् बध्यशिलातले निपतितं शेषानहीन् रक्षितुं
निर्भिद्याशनिदण्डचण्डतरया चञ्च्वाधुना वक्षसि ।
भोक्तुं भोगिनमुद्धरामि तरसा रक्ताम्बरप्रावृतं
दिग्धं मद्भयदीर्य्यमाणहृदयप्रस्यन्दिनेवासृजा ॥ २६ ॥

( इत्यभिपत्य नायकं गृह्णाति, नेपथ्ये पुष्पाणि पतन्ति, दुन्दुभयश्च स्वनन्ति )

---

मया ( आत्मना ) यत् पुण्यं सुकृतम् अर्जितं सम्पादितम् । तेन पुण्येन (हेतुना) मम स्वस्य भवे भवे एव जन्मनि जन्मनि एव प्रत्येकजन्मन्येवेत्यर्थः । परार्थहेतोः परप्राणरक्षणार्थमित्यर्थः । खलु निश्चयेन देहलाभः शरीरप्राप्तिः भूयात् भवतु । प्रतिजन्मनि परत्राणार्थमात्मशरीरलाभे हेतुभूतस्यैतज्जन्मार्जितपुण्यस्य वाक्यार्थगतत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । वृत्तञ्चात्रोपजातिनाम ॥२५॥

अथागतो गरुत्मान् जीवान्तरभ्रान्तिवारणाय रक्तांशुकावरणनैश्चल्यदर्शनपूर्वकमात्मकर्त्तव्यं प्रकाशयति—अस्मिन्निति । शेषान् स्वव्यतिरिक्तान् मम भुक्तावशिष्टानिति यावत् अहीन् सर्पान् रक्षितुं परित्रातुम् अस्मिन् ( दिने )—( अथवा ) अस्मिन् साक्षाद्दृश्यमाने वध्यशिलातले वधोचितपाषाणप्रदेशे निपतितं निश्चेष्टतया शयितम् । तथा—रक्ताम्बरप्रावृतं रक्तांशुकाच्छादितम् । ( नैश्चल्यात् सकलाङ्गावरणाच्च भयाधिक्यकल्पनम् ) अत एव मत्तो भयं मद्भयं तेन विदीर्यमाणात् विभक्तात् हृदयात् वक्षसः प्रस्यन्दिना निस्सरता असृजा शोणितेन दिग्धं लिप्तमिव ( दृश्यमानमिति शेषः ) । भोगिनं सर्पम् अशनिदण्डचण्डतरया अशनिदण्डाद् दण्डाकारकुलिशादपि चण्डतरया अतिकठोर–दीर्घयेत्यर्थः । चञ्च्वा त्रोट्या वक्षसि हृदये (सप्तम्या अवच्छेदार्थकत्वाद) वक्षःस्थलावच्छेदेनेत्यर्थो बोध्यः। निर्भिद्य विदार्य भोक्तुम् रहसि यथेष्टमत्तुं तरसा जवेन बलेन वा ( एतेनाविलम्ब उक्तः ) उद्धरामि ऊर्द्ध्वं नयिष्यामीत्यर्थः ( वर्तमानसामीप्ये वर्तमानवद्वेति भविष्यति लट् ) तुर्यपादगतोत्प्रेक्षार्थकेवशब्दमहिम्नोत्प्रेक्षाऽलङ्कारः । स्वभावोक्तिश्चेत्युभयोः संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥२६॥

गरुडः—(सविस्मयम्)। अये !

आमोदानन्दितालिर्निपतति किमियं पुष्पवृष्टिर्नभस्तः ?
स्वर्गे किं वैष चक्रं मुखरयति दिशां दुन्दुभीनां निनादः ?

(विहस्य)।

आं ज्ञातं सोऽपि मन्ये मम जवमरुता कम्पितः पारिजातः ॥
सर्वैः संवर्त्तकाभ्रैरिदमपि रणितं जातसंहारशङ्कैः ॥ २७ ॥

नायकः—(आत्मगतम्)। दिष्ट्या कृतार्थोऽस्मि।

गरुडः—(नायकं कलयन्)

---

पुष्पवृष्टि—दुन्दुभीध्वन्योर्विलोकन-श्रवणाभ्यामाशङ्कमानो गरुत्मान् सविस्मयः सन् प्राह—आमोदेति। आमोदेन सौरभाधिक्येन आनन्दिताः सहर्षा अलयो भ्रमरा यया तादृशी इयं दृश्यमाना पुष्पवृष्टिः कुसुमाभिपातो नभस्तोऽन्तरिक्षात् (नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्मकमित्यमरः) किं कथं निपतति। (एतद्विशेषणद्वारा पुष्पवृष्टेर्बाहुल्यं प्रतीयते)। किं वा कथं वा स्वर्गे सुरालये एष श्रूयमाण इत्यर्थः दुन्दुभीनां तदाख्यवाद्यविशेषाणां निनादो ध्वनिः दिशां चक्रं दिङ्मण्डलं मुखरयति सशब्दं करोतीत्यर्थः। इयं पूर्वार्द्धव्याख्या।

विहस्य सामान्यरूपेण हसित्वेत्यर्थः। आत्मजवहेतुकपुष्पवर्षणावलोकनाच्चेतोऽतिप्रसन्नतया गरुत्मतो विहसनमिति बोध्यम्।

हासहेतुं दर्शयति—आमिति। (आमिति निश्चयार्थकोऽव्ययशब्दः)। आम् निश्चयेन ज्ञातं विदितम् यथार्थतो विदितमित्यर्थः। (आं ज्ञाननिश्चयस्स्मृत्योरिति मेदिनीकारः)। स सर्वथा प्रसिद्धोऽपि पारिजातो देवतरुः मम जवमरुता वेगवायुना कम्पितो विधूतः। तस्मादियं पुष्पवृष्टिरिति भावः। तथा—सर्वैर्निखिलैः संवर्त्तकाभ्रैः कल्पान्तकालिकपयोधरैरित्यर्थः। जाता संहारस्य प्रलयस्य शङ्का सन्देहो येषां तथाभूतैः सद्भिः रणितं गर्जितम्। (इत्यहं) मन्ये सम्भावयामीत्यर्थः। अत्र मन्येपदसद्भावादुत्प्रेक्षालङ्कारः। स्रग्धरावृत्तम् ॥२७॥

स्वस्योपरि गरुत्मतोऽभिपातमालक्ष्य प्रसन्नचित्तो नायको मनसि विचारयति—दिष्ट्येति। (दिष्ट्येति हर्षसूचकमव्ययम्)। दिष्ट्या = हर्षेण कृतार्थः = कृतः सिद्धोऽर्थः प्रयोजनं (मनोरथरूपमित्यर्थः) यस्य तादृशः। सिद्धमनोरथ इति भावः।

कलयन् = पश्यन्। नित्यसिद्धोऽयं मद्भोज्यो नागोऽन्यो वा कश्चिदिति सन्देहमपाकर्तुं विलोकयन्नित्यर्थः।

नागानां रक्षिता भाति पुरुषेषु यथा मम ।
तथा सर्पाशनाकांक्षां व्यक्तमद्यापनेष्यति ॥२८॥

तद् यावदेनं गृहीत्वा मलयशिखरमारुह्य यथेष्टमाहारयामि ।

( इति निष्क्रान्तः ) ।

इति निष्क्रान्ताः सर्वे ।

इति चतुर्थोऽङ्कः ।

---

अतिमहिमशालि-नायकावलोकनाद्विशङ्कितहृदयो गरुत्मान्निजाशयमाविष्क-रोति—नागानामिति । पुरुषेषु पुरुषजातिषु ( मध्ये )—( निर्द्धारणार्थिकाऽत्र सप्तमी ) । नागानां पन्नगानां मद्भुक्तातिरिक्तानामिति भावः । रक्षिता त्राणकर्ता ( कश्चिदेष सत्त्वशाली पुरुषविशेष इति शेषः ) । यथा येन प्रकारेण भाति शोभते। तथा तेन प्रकारेण अद्याऽस्मिन् वासरे मम सर्पाशनाकांक्षाम् अहिभोजनाभिलाषां ( सर्पाशनाशंकामिति पाठे अद्य पर्याप्तिरस्ति नवेति विकल्पभावमित्यर्थः ) । व्यक्तं स्पष्टं यथा तथा अपनेष्यति परिहरिष्यति । एतन्महिम्ना सर्पाशनप्रवृत्तिर्मेऽद्यैव चरमतामाश्रयिष्यतीति भावः । सर्पाशनाभिलाषाऽपनयने हेतुभूतस्य पुरुषविशेष-भानस्य वाक्यार्थगतत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । अनुष्टुप्वृत्तम् ।

एतेन पताकास्थानकतुर्यभेदो ग्रन्थकृत्प्रादर्शयत् । तदुक्तं दर्पणकृता पताका-स्थानक—तत्तुर्यभेदयोर्लक्षणं यथा—

यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥

इति ॥

द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।
प्रधानार्थान्तराक्षेपी पताकास्थानकं परम् ॥

इति । परम् चतुर्थमित्यर्थः ॥२८॥

एतत्कायगौरवादात्मतृप्तिमवेत्य गरूड़ो भोजनप्रकारं निर्णयति—तद्यावदिति । तत् तस्मात् कायगौरवेणास्य तृप्तिजनकत्वाद्धेतोरित्यर्थः । यथेष्टमाहारयामि = एकान्तभोजनस्याऽधिकसुखजनकत्वादिति भावः ।

इति निष्क्रान्तः । भोजनमन्तरा गरुडनिष्क्रमणप्रतिपादनं भाविवृत्तसूच-नार्थमिति बोध्यम् ।

इति नागानन्दव्याख्यायां पीयूषवर्षिण्यां चतुर्थोऽङ्कः ।

---

# अथ पञ्चमोऽङ्कः ।

( ततः प्रविशति प्रतीहारः ) ।

प्रतीहारः—

स्वगृहोद्यानगतेऽपि स्निग्धे पापं विशंक्यते स्नेहात् ।
किमु दृष्टबहपायप्रतिभयकान्तारमध्यस्थे ? ॥ १ ॥

तथाहि—जीमूतवाहनो जलनिधिवेलाऽवलोकनकुतूहली निष्क्रान्तश्चिरयतीति दुःखमास्ते महाराजविश्वावसुः । समादिष्टश्चास्मि तेन । यथा—"सुनन्द ! श्रुतं मया सन्निहितगरुडप्रतिभयमुद्देशं जामाता

---

अथ नायकाऽध्यवसायस्य साफल्योत्तरं पुरो निर्देक्ष्यमाण-गरुडविनयादि साध्यान्तराणामावश्यकत्वेन सिद्धिप्रतिपादनार्थं प्रस्तुतेऽङ्कान्तरे पित्राद्याश्रय-कारुण्यस्य प्रस्तुताङ्गस्य घटनाय प्राक् प्रतीहारप्रवेशं सूचयति—ततः प्रविशतीत्यनेन ।

जीमूतवाहनोदन्ताऽवगमाय सिद्धराजसमादिष्टः प्रतीहारस्तस्यैवोत्कण्ठाहेतुमाविष्करोति—स्वगृहेति । स्निग्धे स्नेहपात्रे पुत्रादौ स्वगृहे स्वगृहसमीपे यत् उद्यानं क्रीडावनं तत्र गते प्राप्तेऽपीत्यर्थः । अतिसन्निहितस्थानस्थेऽपीति भावः । स्नेहात् वात्सल्यात् पापम् अशुभं ( व्यसनं वा ) विशङ्क्यते वितर्क्यते ( पित्रादिभिरिति शेषः ) । ( पुनस्तस्मिन्-स्निग्धे )—दृष्टो नेत्रगोचरीकृतो बहुरधिकोऽपायो विघ्नो विनाशो वा यत्र तादृशस्य प्रतिभयस्य भयङ्करस्य (भयङ्करं प्रतिभयमित्यमरः) कान्तारस्य महारण्यस्य ( कान्तारोऽस्त्री महारण्ये बिले दुर्गमवर्त्मनि इति मेदिनी ) मध्यस्थे मध्यवर्त्तिनि सति किमु किं वक्तव्यम् । अवश्यमाशङ्कनीयं तत्रेति भावः । समीपस्थेऽपि शङ्कितव्ये दूरस्थे त्ववश्यमित्यर्थस्य दण्डापूपिकयाऽवगमादर्थापत्तिरलङ्कारः । आर्यावृत्तम् ॥ १ ॥

इत्थं सामान्यरूपेणाऽभिधाय विशेषरूपेणाऽभिधातुमुपक्रमते—तथाहीति । तदेव दर्शयतीत्यर्थः । जलनिधीति—जलनिधेः समुद्रस्य वेलावलोकने जलविकारदर्शने कुतूहलमभिलाषमस्यास्तीति तथाभूतः । समुद्रजलोच्छ्वासदर्शनाभिलाषीत्यर्थः । निष्क्रान्तः = गतः । चिरयति = विलम्बते । दुःखम् = (क्रियाविशेषणम् ) दुःखयुक्तं यथा तथेत्यर्थः । सन्निहितेति—सन्निहितेन समुपस्थितेन

"जीमूतवाहनो गत इति शङ्कित एवास्म्यनेन । तत् त्वरितं विज्ञायागच्छ किमसौ स्वगृहमागतो न वा" इति । यावत् तत्र गच्छामि । (परिक्रामन्नग्रे दृष्ट्वा) । अयमसौ राजर्षिर्जीमूतवाहनस्य पिता जीमूतकेतुरुटजाङ्गणे सह स्वधर्मचारिण्या राजपुत्र्या च पर्य्युपास्यमानः तिष्ठति । तथाहि ।—

क्षौमे भङ्गवती तरंगतरले फेनाम्बुतुल्ये वहन्
जाह्नव्येव विराजितः सुपयसा देव्या महापुण्यया ।
धत्ते तोयनिधेरयं सुसदृशीं जीमूतकेतुः श्रियं
यस्यैषान्तिकवर्त्तिनी मलयवत्याभाति वेला यथा ॥२॥

तद् यावदुपसर्पामि ।

( ततः प्रविशति पत्नीवधूसमेतो जीमूतकेतुः )

---

गरुडेन प्रतिभयं भयङ्करम् । (अथवा) सन्निहितं समुपस्थितं गरुडात् प्रतिभयं साध्वसं यत्र तथाभूतम् । उद्देशम् = स्थानम् । उटजेति—उटजस्य पर्णशालायाः पत्रादिकृतमुनिगृहस्येत्यर्थः । ( पर्णशालोटजोऽस्त्रियामित्यर्थः ) । अङ्गणे चत्वरे । स्वधर्मचारिण्या = पतिव्रतया स्वभार्ययेत्यर्थः । राजपुत्र्या = मलयवत्या । पर्य्युपास्यमानः = सेव्यमानः ।

स्त्री-स्नुषाभ्यामुपास्यमानस्य जीमूतकेतोः स्थितिप्रकारं वर्णयति—क्षौम इति। भङ्गवती सङ्कुचिते तरङ्गतरले वीचिवच्चपले सूक्ष्मत्वान्निश्श्वासवातादिना चालित इत्यर्थः । फेनाम्बुतुल्ये फेनयुक्तजलसदृशे स्वच्छताधिक्यात्तत्सादृश्यमिति भावः । क्षौमे दुकूले पट्टवस्त्रे वा वहन् परिदधानः । तथा—सुपयसा सुस्तन्या । महत् पुण्यं यस्यास्तया अतिशुचिभूतयेत्यर्थः । जाह्नव्या गङ्गया इव देव्या भार्यया विराजितः सुशोभितः । अयं जीमूतकेतुर्जीमूतवाहनपिता तोयनिधेः समुद्रस्य सुसदृशीं समानां श्रियं शोभां धत्ते धारयति । यस्य जीमूतकेतोः अन्तिकवर्त्तिनी समीपस्था वेला यथा तट इव एषा मलयवती आभाति शोभते । वेलातिक्रमणपूर्वकमन्यत्रागच्छतस्तोयनिधेरिव जीमूतकेतोरपि मलयवतीमतिक्रम्याऽन्यत्रगमनाभावाद्वेलासाम्यं तस्या इति भावः । जान्हवीपक्षेऽपि विशेषणद्वयं योज्यम् तथाहि—सुपयसा = स्वच्छजलया । महापुण्यया = महत् विशिष्टं पुण्यं शुचित्वं यस्यास्तया अतिशुचित्वोत्पादिकयेत्यर्थः । अत्रोपमा-श्लेषयोः साङ्कर्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

जीमूतकेतुः—

भुक्तानि यौवनसुखानि यशोऽवकीर्णे
राज्ये स्थितं स्थिरधिया चरितं तपोऽपि ।
श्लाघ्यः सुतः सुसदृशान्वयजा स्नुषेयं
चिन्त्यो मया ननु कृतार्थतयाऽद्य मृत्युः ॥३॥

सुनन्दः—( सहसोपसृत्य ) । जीमूतवाहनस्य—

---

भुक्तमखिलैहिकसुखं परिगणनया स्त्री-बधूसमक्षं प्रकाशयति जीमूतकेतुः—भुक्तानीति । मया यौवनसुखानि युवत्वोचितविषयभोगात्मकानीत्यर्थः । भुक्तानि अनुभूतानि अनुभवविषयीकृतानीति यावत् । तथा—( मया ) यशसा कीर्त्याऽवकीर्णे व्याप्ते राज्ये राष्ट्रे स्थितं विततयशसा मया सम्यक्तया राज्यं पालितमित्यर्थः । तथा—( मया ) स्थिरा चासौधी बुद्धिस्तया बुद्धिं स्थिरीकृत्येत्यर्थः । तपश्चान्द्रायणादिव्रतं चरितं कृतम् । पुनः—सुतः पुत्रः ( जीमूतवाहन इति भावः ) श्लाघ्यः प्रशंसार्ह इत्यर्थः । ( प्राप्त इति शेषः ) इयम् दृश्यमानेत्यर्थः । स्नुषा पुत्रवधूः ( मलयवतीत्यर्थः ) सुसदृशान्वयजा सत्कुलसम्भूता । ( प्राप्तेति शेषः ) अतः—चरितार्थतया कृत्यमात्रस्य परिपूर्णतयेत्यर्थः । ( हेतुना ) । अद्य सम्प्रति मृत्युर्देहावसानं चिन्त्यो ननु प्राप्यत्वेन निरूपणीय इत्यर्थः । सर्वं कार्यं समाप्य सम्प्रति मृत्युं चिन्तयामीत्यर्थः । ( एकस्यैव मयेतिकर्तृकारकस्य भुक्त-स्थित-चरितशेषलभ्य प्राप्त-चिन्त्य-पदवाच्यक्रियापञ्चके समन्वयाद्दीपकाऽलङ्कारः । मृत्युचिन्तने हेतुभूतानां पादत्रयोपात्तविषयाणां वाक्यार्थगतत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गञ्चेति द्वयोः सङ्करः । वृत्तञ्चेह वसन्ततिलकं नाम ॥ ३ ॥

जीमूतकेतूक्तस्य मृत्युश्चिन्त्य इति वाक्यस्यानन्तरं भाविविपत्सूचनाय द्रुतं प्रविष्टः सुनन्दः ( प्रतीहारः ) शेषं पूरयति—जीमूतवाहनस्येति । जीमूतकेतुनाऽऽत्ममृत्यौ चिन्त्यमाने तदव्यवहितोत्तरमागतेन प्रतीहारेण जीमूतवाहनस्येतिपदोच्चारणद्वारा जीमूतवाहनस्य मृत्युरित्यर्थस्य सूचनादिदं तृतीयं पताकास्थानकं बोध्यम् । तदुक्तं दर्पणकृता—

यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥

इति ।

अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् ।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥

इति च ।

जीमूतकेतुः (कर्णौ पिधाय)। शान्तं पापम्।

वृद्धा—(क) पड़िहदं क्खु एदं अमंगलं।

मलयवती—(ख) वब्दि मे हिअअं इमिणा दुण्णिमित्तेण।

जीमूतकेतुः—(वामाक्षिस्पन्दनं सूचयित्वा)। भद्र! किं जीमूतवाहनस्य?

सुनन्दः—जीमूतवाहनस्य वार्त्तामन्वेष्टुं महाराजविश्वावसुना युष्मदन्तिकं प्रेषितोऽस्मि।

जीमूतकेतुः—किमसन्निहितस्तत्र मे वत्सः?

वृद्धा—(सविषादम्) (ग) महाराअ! जइ तहिं ण सण्णिहिदो, ता कहिं गदो मे पुत्तओ भविस्सदि?

---

(क) प्रतिहतं खल्वेतदमङ्गलम्।

(ख) वेपते मे हृदयमनेन दुर्निमित्तेन।

(ग) महाराज। यदि तत्र न सन्निहितः तत् क्व गतो मे पुत्रको भविष्यति?

---

स्वोक्तवाक्यानन्तरममङ्गलात्मकमाकर्ण्य प्रतीहारवचनं दुःसह-भाविविपत्सूचकत्वादश्रोतव्यत्वबुद्ध्या श्रोत्रद्वयपिधानपूर्वकमाह जीमूतकेतुः—शांतं पापमिति। पापरूपमिदममङ्गलवचनमश्रोतव्यमित्यर्थः। यद्वा—पापं पापजनकं प्रतीहारोक्तवचनं शान्तं कदापि श्रोत्रविषयीभूतं (न भूयादिति शेषः)

(क) प्रतीहारोक्तवचनश्रवणादेव वृद्धाऽप्याह—प्रतिहतमिति। अमङ्गलम् अशुभोत्पादकमेतद्वचः (प्रतीहारोक्तमिति शेषः) प्रतिहतं विनष्टम् अलीकमिति यावत् (भूयादिति शेषः)।

(ख) वेपते = कम्पते। दुर्निमित्तेन = अमङ्गलवचनेन।

जीमूतवाहनस्येति साकाङ्क्ष्यपदोच्चारणे निजवाक्यसमन्वयद्वाराऽनिष्टमाशङ्कमानो जीमूतकेतुर्यथार्थज्ञानाय तदाकाङ्क्षित-वाक्यशेषं प्रतीहारमुद्दिश्य पृच्छति-भद्रेत्यादिना। जीमूतवाहनस्येत्युक्त्या तत्सम्बन्धित्वेन यद्विवक्षितं तद्ब्रूहीत्यर्थः।

जीमूतकेतुनैवं पृष्टः प्रतीहारी स्वोक्तवाक्यशेषत्वेनाह—जीमूतवाहनस्य वार्तामित्यादि। अन्वेष्टुम् = प्रष्टुम्।

असन्निहितः = असमीपस्थः। मे वत्सः=वत्सेत्युक्त्या तत्र ममत्वातिशयो द्योतितः।

(ग) महाराजेत्यादिवृद्धोक्त्या शोकवर्द्धको विषादो व्यक्तीकृतः।

जीमूतकेतुः—नूनमस्मत्प्राणरक्षार्थं गतो भविष्यति।

मलयवती—( सविषादमात्मगतम् )। (क) अहं उण अज्जउत्तं अपेक्खंती अण्णं जेव्व किंपि आसंकामि।

सुनन्दः—आज्ञापय। किं मया स्वामिनः निवेदनीयम्।

जीमूतकेतुः—( वामाक्षिस्पन्दनं सूचयित्वा )। जीमूतवाहनश्चिरयतीति पर्य्याकुलोऽस्मि हृदयेन।

स्फुरसि किमदक्षिणेक्षण ! मुहुर्मुहुः सूचयन्ममानिष्टम्।
हतचक्षुरपहृतं ते स्फुरितमिहार्यं करिष्यते भानुः ॥४॥

---

(क) अहं पुनरार्य्यपुत्रमपेक्षमाणोऽन्यदेव किमपि आशङ्के।

---

अस्मत्प्राणरक्षार्थम् = ममप्राणवृत्तिसाधकफलादिवस्तुसम्पादनार्थमित्यर्थः। ( एतेन पुत्रस्यात्मनि दयोत्कर्षो द्योतितः )।

( क ) अन्यदेव किमपीति। नास्माकं प्राणरक्षार्थं तस्य गमनमपितु कस्याऽप्यन्यस्यैव प्राणरक्षार्थं गतस्य तस्याऽमङ्गलं जातमिति तर्कयामीति भावः। स्वामिनः = स्वामिने इत्यर्थः ( शेषत्वेन विवक्षायामिह षष्ठी )।

सुनन्दोक्तिमाकर्ण्य वामाक्षिस्पन्दनात्मकं करुणावतरणमार्गप्रदर्शकं दुर्निमित्तान्तरं सूचयन् जीमूतकेतुस्तत्प्रत्याह—जीमूतवाहनश्चिरयतीति। पर्याकुलोऽस्मि हृदयेन = हृदयोपलक्षितोऽहं व्याकुलोऽस्मीत्यर्थः। ( प्रकृत्यादित्वात्तृतीया )।

वामलोचनाक्षेपपूर्वकमर्कदर्शनाद्दुर्निमित्तशान्तिं ततोऽभ्यर्थयते जीमूतकेतुः-स्फुरसीति। हे अदक्षिणेक्षण ! वामनेत्र ! हतचक्षुः ! कुत्सितनेत्र ! मुहुर्मुहुर्भूयो भूयो ममाऽनिष्टम् अमङ्गलं सूचयन् प्रकटयन् किं किमर्थं स्फुरसि स्पन्दसे ( त्वमिति शेषः )। नैव स्फुरणं युक्तमिति भावः। अयं भानुः सूर्यः इहास्मिन् अनिष्टसूचने विषये तवाधिष्ठानभूतनेत्रगोलके वा ते तव स्फुरितं स्पन्दनम् अपहृतं विनाशितं करिष्यते। सूर्यानुग्रहादमङ्गलमदक्षिणाक्षिस्पन्दनोद्भूतं विनाशितं भविष्यतीति भावः। तदुक्तं शकुनशास्त्रे—

भूरिदुःखप्रदं नित्यं द्रुतमादित्यदर्शनात्।
वामाङ्गस्फुरणोद्भूतं दुर्निमित्तं प्रशाम्यति ॥

इति। भानोर्वामाक्षिस्फुरणविनाशकत्वे हेतोरनिष्टसूचकत्वस्य वाक्यार्थगतत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। छेकाऽनुप्रासश्चाऽलङ्कारः। गीतिका छन्दः ॥४॥

( ऊर्ध्वमवलोक्य )। अयमेव त्रिभुवनैकचक्षुर्भगवान् सहस्रदीधितिः स्फुटं जीमूतवाहनस्य श्रेयः करिष्यति । ( विलोक्य सविस्मयम् )।

आलोक्यमानमतिलोचनदुःखदायि
रक्तच्छटा निजमरीचिरुचो विमुञ्चत् ।
उत्पातवाततरलीकृततारकाभ-
मेतत्पुरः पतति किं सहसा नभस्तः ? ॥५॥

कथं, चरणयोरेव पतितम् ?

सर्वे—( निरूपयन्ति )।

जीमूतकेतुः—अये ! कथं लग्नसरसमांसश्चूडामणिः ? कस्य पुनरयं स्यात् ?

---

दैवप्रार्थनमन्तरा वाङ्मात्रेण दुर्निमित्तशान्त्यसम्भवादूर्ध्वावलोकनपूर्वकं सूर्यमभ्यर्थ्य श्रेयोऽभ्यर्थयते जीमूतकेतुः—अयमेवेति । त्रिभुवनस्य लोकत्रयस्य एकचक्षुर्मुख्यनेत्ररूपः । सहस्रदीधितिः = सहस्रकिरणः । स्फुटम् = व्यक्तम् । श्रेयः = कल्याणम् ।

आकाशतो भ्रश्यमानं किमपि रक्ताभं वस्तु समालोक्य विस्मयापन्नो जीमूतकेतुर्वितर्कयति—आलोक्यमानमिति । आलोक्यमानं परिदृश्यमानम् ( अस्माभिरिति शेषः )। यद्वा—आलोक्यमानं दृश्यमानं सदित्यर्थः । अतिलोचनदुःखदायि अत्यतिशयेन लोचनयोर्नेत्रयोर्दुःखप्रदमित्यर्थः । ( अत्याद्युपपदाद् ददातेर्णिनिः—युक् च )। अतिभासुरत्वान्नेत्रयोरतिक्लेशप्रदमिति भावः । निजस्य स्वस्य भानोरित्यर्थः । मरीचीनां किरणानामिव रुचः कान्तयो यासां तादृशीः रक्तच्छटा रक्तवर्णा दीप्तिरित्यर्थः । विमुञ्चत् विक्षिपत् । तथा—उत्पातवातेन अनिष्टसूचकवायुना तरलीकृतानां नभसोधःपातितानाम् यद्वा तरलीकृतानां मेघाद्यपनयादत्युज्ज्वलीकृतानामित्यर्थः । तारकाणां नक्षत्राणामिव आभा यस्य तादृशम् । एतत् दृश्यमानम् किं ( वस्तु ) पुरोऽग्रे नभस्तो गगनात् सहसाऽकस्मात् पतति भ्रंसते । अत्रोपमाऽलङ्कारः । वसन्ततिलकावृत्तेन पद्यमिदं निबद्धम् ॥५॥

आत्मपादोपरि पतितं शिरोरत्नमालोक्य जीमूतकेतुर्विशङ्कते—अये कथं लग्नसरसेति । लग्नम् आसक्तं सरसं रसार्द्रं रुधिरार्द्रीभूतं मांसं यत्र तादृशः चूडामणिः शिरोरत्नम् ।

वृद्धा—( सविषादम् )। (क) महाराअ ! पुत्तअस्स बिअ मे एदं चूडारअणं ?

मलयवती—(ख) अम्ब ! मा एव्वं भण।

सुनन्दः—महाराज ! मैवमविज्ञाय विक्लवीभूः। अत्र हि ताक्ष्येंण भक्ष्यमाणानां नागाधिपानामनेके नखमुखोत्खाताः पतन्त्येते शिरोमणयः।

जीमूतकेतुः—देवि ! सोपपत्तिकमभिहितमनेन । कदाचिदेवमपि स्यात्।

वृद्धा—(ग) सुणंदअ ! जाव इमाए वेलाए ससुरसदणं ज्जेव्व आअदो मे पुत्तओ भविस्सदि। ता गच्छ, जाणिअ लहुं संपादेहि।

सुनन्दः—यदाज्ञापयति देवी। ( इति निष्क्रान्तः )।

---

(क) महाराज ! पुत्रकस्येव मे एतच्चूडारत्नम्।

(ख) अम्ब ! मैवं भण।

(ग) सुनन्दक ! यावदनया वेलया श्वशुरसदनमेवागतो मे पुत्रको भविष्यति। तद्गच्छ, ज्ञात्वा लघु सम्पादय।

---

विषादापन्नहृदयाया वृद्धाया अमङ्गलोक्तिमाकर्ण्य मलयवती निवारयति—अम्ब ! मैवं भणेति। नैतादृशममङ्गलवचो वक्तव्यमित्यर्थः।

सुनन्दो जीमूतकेतोराश्वासनाय ब्रूते—महाराजेत्यादि। अविज्ञाय = विशेषरूपेणाऽज्ञात्वेत्यर्थः। एवम् = इत्थम्। मा विक्लवीभूः = अविक्लवो विक्लवोऽजनि विक्लवीभूः ( अभूततद्भावे च्विः )। व्याकुलो न भवेत्यर्थः। ( माङि लुङिति लुङ्, न माङ्योग इत्यटो निषेधः) ताक्ष्येंण = गरुडेन। नखमुखोत्खाताः = नखस्य मुखं नखमुखं तेन उत्खाताः उत्पाटिताः। नखाग्रेणोत्पाटिता इत्यर्थः। शिरोमणयः = शिरोरत्नानि।

सोपपत्तिकम् = उपपत्त्या सहितम्, सयुक्तिकमित्यर्थः। ( वचनमितिशेषः )। अभिहितम् = कथितम्। ( अभि × धा × कर्मणि क्तः )।

जीमूतकेतुवचनमाकर्ण्य किञ्चित् समाश्वसिता वृद्धा प्राह—सुनन्दक ! यावदनयेत्यादि। यावच्छब्दो वाक्यालङ्कारे। अनया वेलया = एतावता कालेन। श्वशुरसदनम् = श्वशुरगृहम्। लघु = द्रुतम्। ( लघु क्षिप्रमरं द्रुतमित्यमरः )। सम्पादय = साधय ( ममेप्सितमिति शेषः )। ततो मदीयपुत्रोदन्तमादाय शीघ्रमेहीति भावः।

जीमूतकेतुः—देवि ! अपि नागचूडामणिः स्यात् ।

अत्र हि—

ताक्ष्येंण भक्ष्यमाणानां पन्नगानामनेकशः ।
उल्कारूपाः पतन्त्येते शिरोमणय ईदृशाः ॥६॥

( ततः प्रविशति रक्तवस्त्रसंवीतः शङ्खचूडः ) ।

शङ्खचूडः—( सास्रम् )—

गोकर्णमर्णवतटे त्वरितं प्रणम्य
प्राप्तोऽस्मि तां खलु भुजङ्गमवध्यभूमिम् ।
आदाय तं नखमुखक्षतवक्षसञ्च
विद्याधरं गगनमुत्पतितो गरुत्मान् ॥७॥

---

सुनन्दगमनोत्तरं स्वभार्यां समाश्वसितुं जीमूतकेतुराह—देवि ! अपि नागचूडामणिः स्यादिति । अपिशब्दोऽत्र सम्भावनार्थकः । कस्यापि नागविशेषस्य शिरोरत्नमेतत्स्यादिति सम्भावयामीति तदर्थः । उक्तञ्चाऽपिशब्दस्य सम्भावनार्थकत्वं मेदिनी कृता यथा—

अपि सम्भावना-प्रश्न-शङ्का-गर्हा-समुच्चये ।

इति ।

सम्भावितार्थमेव पोषयति—अत्र हीत्यादिना । ताक्ष्येंण गरुडेन ( गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वर इत्यमरः ) । भक्ष्यमाणानाम् अद्यमानानां पन्नगानाम् उरगाणाम् ( उरगः पन्नगो भोगी जिह्मगः पवनाशन इत्यमरः ) । अनेकशो बहुशः उल्कारूपाः अग्निवर्णा ईदृशाः पुरोदृश्यमानतुल्या एते शिरोमणयः शिरोरत्नानि पतन्ति भ्रंशन्ते । यथावद्वर्णनादत्र स्वभावोक्तिरलङ्कारः । अनुष्टुपवृत्तम् ॥६॥

जीमूतकेतुकृतस्यात्मसूनुजीवनसन्देहस्य दृढीकरणाय शङ्खचूडप्रवेशं सूचयति—ततः प्रविशतीत्यनेन । रक्तवस्त्रसंवीतः = रक्तवस्त्राभ्यां संवीत इति विग्रहे तृतीया तत्पुरुषसमासः । रक्तवस्त्राच्छादित इत्यर्थः ।

अथ प्रविष्टः शंखचूडो जीमूतकेतुसन्निधावेत्य तदात्मजानिष्टं सूचयति—गोकर्णमित्यादिना । अर्णवस्य समुद्रस्य तटे कूले ( स्थितमित्यध्याहर्त्तव्यम् ) स्थितं गोकर्णं तन्नाम शिवलिङ्गं प्रणम्य अभिवाद्य त्वरितं खलु शीघ्रमेवेत्यर्थः । तां प्रसिद्धाम् भुजङ्गमानां सर्पाणां वध्यभूमिं मरणस्थानं यस्यां भूमौ भुजङ्गमा गरुडेन वध्या भवन्ति तां भूमिमित्यर्थः । प्राप्तोऽस्मि आगतोऽस्मीत्यर्थः (अहमिति शेषः) ।

(रुदन्)। हा महासत्त्व ! हा परमकारुणिक ! हा निष्कारणैकबान्धव ! हा परदुःखदुःखित ! क्व गतोऽसि ? प्रयच्छ मे प्रतिवचनम्। हा शङ्खचूडहतक ! किं कृतं त्वया ?—

नाहित्राणा कीर्त्तिरेकाहमाप्ता
नापि श्लाघ्या स्वामिनोऽनुष्ठिताऽऽज्ञा ।

---

गरुत्मान् गरुडश्च नखमुखेन नखाग्रभागेन क्षतं विदारितं वक्षो हृदयं यस्य तथाभूतं तं पूर्वदृष्टम् विद्याधरं जीमूतवाहनम् आदाय गृहीत्वा गगनम् आकाशम् उत्पतितः। मदीयगमनाऽगमनयोरविलम्बेऽपि गरुडेनाऽनिष्टमाचरितमिति भावः। शङ्खचूडकर्तृकागमनस्य गरुत्मत्कर्तृकोत्पतनस्य च क्रियाद्वयस्य युगपदुपादानादत्र समुच्चयो नामाऽलङ्कारः। वसन्ततिलकं नाम वृत्तम् ॥७॥

महासत्व = महत् विशिष्टं सत्त्वं यस्य तथाभूतस्तत्सम्बुद्धौ । हे श्रेष्ठजीव ! इत्यर्थः। निष्कारणैकबान्धव = स्वार्थसाधनमन्तरैव बन्धुसदृशकार्यकारिन्नित्यर्थः। प्रयच्छ = देहि। प्रतिवचनम्=उत्तरम्। शङ्खचूडहतक = हत एव हतकः (कुत्सार्थकोऽत्र कः)। शङ्खचूडश्चासौ हतकस्तत्सम्बुद्धौ। हे कुत्सित शङ्खचूड ! हा कष्टम्। तव कृते महदनिष्टमापतितमित्यर्थः।

एवम्बहुविलपन् शङ्खचूडो जीमूतवाहनविनाशकारणं निजात्मानं निन्दति—नाहीति। सम्बोधनपदमन्तिमं त्वयेतिकर्तृपदञ्चाकृष्य गद्यतोऽन्वये योजनीयम्। हे शङ्खचूडहतक ! निन्दितशङ्खचूड ! त्वया एकं च तदह एकाहम् (राजाहः सखिभ्यष्टच्)। एकदिनमपीत्यर्थः (अध्याहारलभ्यो ह्यपिशब्दः)। त्रायते इति त्राणं (भावे ल्युट्)। अहीनां त्राणं रक्षणं यया सा अहित्राणा (यद्वा) त्रायन्ते इति त्राणाः (कर्मणि क्तः) अहयस्त्राणा रक्षिता यया सा तथोक्ता भुजङ्गरक्षिणीत्यर्थः। कीर्त्तिर्यशो न आप्ता प्राप्ता भुजङ्गरक्षकोऽयमिति यशो नैकदिनमपि त्वया लब्धमित्यर्थः। तथा—स्वामिनो नागराजस्य श्लाघ्या माननीया आज्ञा आदेशोऽपि न अनुष्ठिता न सम्पादिता। निजकायसमर्पणात्तार्क्ष्यमद्य तर्पयेति स्वाम्यादेशो न सम्पादित इति भावः। किन्तु अन्येन केनचित् साधुपुरुषेणेत्यर्थः। आत्मानं निजप्राणं दत्वा सपर्य्य (गरुत्मत इति शेषः)। रक्षितः पालितः (त्वम्) अत एव शोच्यः शोचनीयः (असि)। (बन्धुजनैरिति शेषः)। पदार्थजीवनात्यागाव स्वामिनिदेशापालनाज्जीवान्तरव्ययेनात्मजीवरक्षणाच्च बन्धुजनैः शोचनीयोऽसीति भावः। हा (खेदे) तदुक्तं मेदिन्याम्—(हा विषादे च शोके च कुत्सादुःखार्थयोरपि) इति। धिक् (भर्त्सनार्थकमव्ययम्)। ईदृशानुचितकार्यकरणात्वं भर्त्सन-

दत्त्वात्मानं रक्षितोऽन्येन शोच्यो
हा धिक्! कष्टं! वञ्चितो वञ्चितोऽसि ॥८॥

तन्नाहमेवंविधः क्षणमपि जीवन्नुपहास्यमात्मानं करोमि। यावदेतदनुगमनं प्रति यतिष्ये। (परिक्रामन् भूमौ दत्तदृष्टिः)।—

आदावुत्पीडपृथ्वीं प्रविरलपतितस्थूलविन्दुं ततोऽग्रे
ग्रावस्वायामशीर्णप्रसृततनुकणां कीटकीर्णां स्थलीषु।
दुर्लक्ष्यां धातुभिन्ने घनतरुशिखरे स्त्याननीलस्वरूपा-
मेनां तार्क्ष्यं दिदृक्षुर्निपुणमनुसरन् रक्तधारां व्रजामि ॥९॥

---

योग्योऽसीत्यर्थः। कष्टं दुःखम् त्वदर्थमन्यजीवव्ययीभवनमतीवदुःखजनकमित्यर्थः। वञ्चितो वञ्चितः अतिशयेन प्रतारितोऽसीत्यर्थः। (विधिनेति शेषः)। विधिकर्तृकवञ्चने पादत्रयोपात्तहेतूनां वाक्यार्थगतत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। सचोरगावनजन्ययशः, स्वाम्यादेशसम्पादनयोर्नैष्फल्यात्—स्वात्मत्राणाय परजीवघातात्मकानिष्टापाताच्च जायमानेन विषमाऽलङ्कारेणाऽनुजीवितः। वृत्तञ्च शालिनी नाम। मात्तौ गौ चेच्छालिनी भोगिलोकैरिति लक्षणात् ॥८॥

एवंविधः = ईदृशः परात्मघातीत्यर्थः। उपहास्यम् = उपहासयोग्यम्। एतदनुगमनम् = एतस्याऽनुगमनमिति षष्ठीतत्पुरुषः। एतच्छब्देन गरुड—जीमूतवाहनयोरन्यतरस्य विवक्षणात् गरुडस्याऽनुसरणं जीमूतवाहनस्याऽनुसरणं वेत्यर्थः यतिष्ये = उद्योगं करिष्यामीत्यर्थः।

तार्क्ष्यमनुसरन् शङ्खचूडो रक्तधारामविलोक्य मार्गं निश्चिनोति—आदाविति। तार्क्ष्यं गरुडं दिदृक्षुर्द्रष्टुमिच्छुः (अहमिति शेषः)। आदौ प्रथमम् उत्पीडेन दृढनिपीडनेन पृथ्वीं महतीं विदारणकाले जवातिशयेन निस्सरणात् प्रचुरामित्यर्थः। ततोऽनन्तरम् अग्रे पुरतः प्रविरला प्रकर्षेण विरला (अघनाः) पतिता आदौ रक्तस्रावाधिक्येऽपि पश्चादल्पत्वेन भ्रष्टा इत्यर्थः। स्थूलाः पुष्टा विन्दवो यस्यास्तथाभूताम्। पुनः—ग्रावसु पर्वतेषु (अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चया इत्यमरः) पाषाणोपरीत्यर्थः आयामेन दैर्घ्येण (हेतुना) शीर्णाश्चूर्णीभूताः प्रसृता व्याप्तास्तनवः सूक्ष्माः कणा विन्दवो यस्यास्तादृशीम्। पुनः—स्थलीषु वनभूमिषु कीटैः क्षुद्रजीवैः पिपीलिकादिभिः कीर्णां व्याप्ताम्। पुनः—धातुभिर्गैरिकादिभिर्भिन्ने रञ्जिते (प्रदेश इति शेषः)। दुर्लक्ष्याम् वर्णसाम्याद्दुःखेनाऽपि द्रष्टुमशक्यामित्यर्थः। पुनः—घनानां निबिडानां तरूणां शिखरेष्वग्रभागेष्वित्यर्थः।

वृद्धा—( ससाध्वसम् )। (क) महाराअ! एसो ससोओ विअ अरुण-बअणो इदो ज्जेव्व तुरिदं आअच्छंतो हिअअं मे आकुलीकरेदि। ता जाणीअदु दाव को एसो त्ति।

जीमूतकेतुः—यथाऽऽह देवी। ( आकर्ण्य सहर्षं विहस्य )। देवि! मुञ्च शोकम्। अस्यायं चूड़ामणिर्नूनं मांसलोभात् केनापि पक्षिणा मस्तकादुत्खाय आनीयमानोऽस्यां भूमौ पपात।

वृद्धा—( सपरितोषं मलयवतीं समालिङ्ग्य )। (ख) अविधवे! धीरा होहि। ण क्खु ईरिसी आकिदी वेहव्वदुक्खं अणुहोदि।

मलयवती—( सहर्षम् )। (ग) अम्ब! तुम्हाणं आसिसां पसाएण। ( पादयोः पतति )।

जीमूतकेतुः—( शङ्खचूड़मवलोक्य )। वत्स! कथमिव?

---

(क) महाराज! एष सशोक इव अरुणवदन इत एव त्वरितमागच्छन् हृदयं मे आकुलीकरोति। तत् ज्ञायतां तावत् क एष इति।

(ख) अविधवे! धीरा भव। न खल्वीदृशी आकृतिर्वैधव्यदुःखमनुभवति।

(ग) अम्ब! युष्माकमाशिषा प्रसादेन।

---

स्यानं घनीभूतं नीलं कृष्णं स्वरूपं यस्यास्तादृशीम्। एनां पुरोदृश्यमानां रक्तधारां रुधिरपङ्क्तिम् निपुणं यथा तथा अनुसरन् अनुगच्छन् व्रजामि गच्छामि। एकस्या एव रक्तधाराया ग्रावस्थल्याद्यनेकस्थानेषु स्थितिप्रतिपादनादत्र स्वभावोक्त्यलङ्कारेणाऽनुजीवितः पर्य्यायोऽलङ्कारः। स्रग्धरा नाम वृत्तम् ॥९॥

अरुणवदनः = अरुणं वदनं यस्य तादृशः। ताम्रमुख इत्यर्थः। आकुलीकरोति = पीडयति।

आकर्ण्य = श्रुत्वा। ( आदावुत्पीडपृथ्वीमिति शङ्खचूडोक्तमिति शेषः )। मुञ्च = त्यज। अस्य = अभिमुखमागच्छतो जनस्येत्यर्थः। उत्खाय = उत्पाट्य। ( उत्पूर्वकात् खनु अवदारणे धातोर्ल्यप्—जन-सन-खनामित्यात्वम् )। आनीयमानः = प्राप्यमाणः।

जीमूतकेतुवचनमाकर्ण्य सन्तुष्टा वृद्धा मलयवतीं समालिङ्ग्याह—अविधवे! इत्यादि। अविधवे = जीवितभर्तृके!। ईदृशी = लोकोत्तरा। आकृतिः = आकारः, सौन्दर्यमिति यावत्। वैधव्यदुःखम् = अजीवितपतिकत्वप्रयुक्तक्लेशम्। अनुभवति = प्राप्नोति।

शङ्खचूडः—दुःखातिभारात् वाष्पोपरुद्धकण्ठो न शक्नोमि कथयितुम् ।

जीमूतकेतुः—आवेदय ममात्मीयं पुत्रदुःखं सुदुःसहम् ।
सङ्क्रान्तमस्ति हृदये येन सह्यं भविष्यति ॥१०॥

शङ्खचूडः—श्रूयताम् । शङ्खचूडो नाम नागः खल्वहम् । आहारार्थं वासुकिना वैनतेयाय प्रेषितः । किं वा विस्तरेण ? कदाचिदियं रुधिरधारापद्धतिः पांशुभिरवकीर्य्यमाणा दुर्लक्ष्यतामुपयाति, तत् संक्षेपतः कथयामि ।—

विद्याधरेण केनापि करुणाऽऽविष्टचेतसा ।
मम संरक्षिताः प्राणा दत्त्वात्मानं गरुत्मते ॥११॥

---

दुःखातिभारात् = दुःखबाहुल्यात् । बाष्पोपरुद्धकण्ठः = बाष्पेन उपरुद्धो निरुद्धः कण्ठो यस्य तादृशः ।

शङ्खचूडस्य कातरोक्तिमाकर्ण्य जीमूतकेतुस्तम्प्रति पुत्रोदन्तं पृच्छति—आवेदयेति । आवेदय कथय ( हे वत्स ! स्वदुःखमिति शेषः ) । आत्मीयं स्वकीयं सुदुःसहम् अतिकठिनं पुत्रदुःखं पुत्रवियोगजक्लेशम् मम हृदये संक्रान्तं मिलितम् अस्ति । येन हृदयवर्त्तिपुत्रदुःखेन ( तव दुःखम् ) सह्यं सहनयोग्यं भविष्यति ।

( पक्षान्तरे )—हे पुत्र ! ( त्वम् ) सुदुःसहम् दुःखेन सह्यम् आत्मीयं स्वकीयं दुःखं क्लेशम् आवेदय कथय । ( तत् आवेदितं सत् ) मम हृदये संक्रान्तं मिलितम् अस्ति अस्तु । दुःखद्वयमप्येकत्र मिलितं भवत्वित्यर्थः । येन मिलनेन सह्यं भविष्यति ( तव दुःखमिति शेषः ) । दुःखोभयस्य सह्यत्वे स्वकर्तृकात्मदुःखावेदनस्य हेतोर्वाक्यार्थत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । अनुष्टुप् वृत्तम् ॥ १० ॥

आहारार्थम् = भोजनार्थम् । वासुकिना = नागराजेन । वैनतेयाय = विनतापुत्राय गरुडायेत्यर्थः । प्रेषितः = समुपस्थापितः । किं वा विस्तरेण = विशेषकथनं व्यर्थमित्यर्थः । रुधिरधारापद्धतिः = रुधिरसम्पातमार्गः । पांशुभिः = धूलिभिः । अवकीर्य्यमाणा = आच्छाद्यमाना । दुर्लक्ष्यताम् = दुर्दर्शयताम् । उपयाति = प्राप्नोति । रुधिरपंक्तिचिन्हं पांशुभिरवलुप्तं यथा न भवेत्तथा विनतात्मजाध्वनिश्चयो मया विधेय इति तदाशयः ।

अथ शङ्खचूडो जीमूतकेतुप्रभृतिसमक्षे युक्त्या तदात्मजाऽमङ्गलं सूचयति-विद्याधरेणेति । करुणया दयया आविष्टं युक्तं चेतो हृदयं यस्य तथाभूतेन दयालुनेत्यर्थः । केनाऽपि अविदित( परिचयेन ) नाम्ना विद्याधरेण तदाख्यदेवयोनि-

जीमूतकेतुः—कोऽन्य एवं परहितव्यसनी ? वत्स ! ननु स्पष्टमेवोच्यतां जीमूतवाहनेनेति । हा ! हतोऽस्मि मन्दभाग्यः ।

वृद्धा—(क) हा पुत्तअ ! कहं तुए एदं किदं ?

मलयवती—कहं, सच्चीभूदं ज्जेव्व दुच्चिंतिदं ?

सर्वे—( मोहं गच्छन्ति ) ।

शङ्खचूडः—( सास्रम् ) । (ख) नूनमेतौ पितरौ तस्य महासत्त्वस्य । कथमप्रियवादिना मया इमामवस्थां नीतौ ? अथवा विषादृते विषधरस्य मुखात् किमन्यन्निःसरति ? अहो ! प्राणप्रदस्य सुसदृशं प्रत्युपकृतं जीमूतवाहनस्य शङ्खचूडेन । तत् किमधुनैवात्मानं व्यापादयामि ? अथवा समाश्वासयामि तावदेतौ । तात ! समाश्वसिहि । अम्ब ! समाश्वसितु ।

---

(क) हा पुत्रक ! कथं त्वयैतत् कृतम् ?
(ख) कथं, सत्यीभूतमेव दुश्चिन्तितम् ?

---

विशेषेण गरुत्मते गरुडाय आत्मानं निजप्राणं दत्वा समर्प्य मम तव पुरः स्थितस्येत्यर्थः । प्राणा जीवाः संरक्षिताः पालिताः । कश्चिदपरिचितो दयालुर्विद्याधरो निजात्मव्ययेन ममात्मानं रक्षितवानित्यर्थः । शङ्खचूडात्मरक्षणे करुणायुक्तहृदयत्वरूपहेतोः पदार्थगतत्वात्पदार्थहेतुकं काव्यलिङ्गमलंकारः । अनुष्टुप्वृत्तम् ॥११॥

एवं शङ्खचूडोक्त्या निजात्मजामङ्गलं निश्चिन्वानो जीमूतकेतुस्तमाह—कोऽन्य एवं विध इति । परेषामन्येषां हितं रक्षणं परहितं तत्र व्यसनी आसक्तः ( व्यसनमस्यास्तीति विग्रहे–अत इन्ठनावितीनिः ) परदुःखदुःखित इत्यर्थः ।

शङ्खचूड-जीमूतकेतूभयमुखाद्दात्मपतिविनाशोदन्तमाकर्ण्य शोकविह्वला मलयवती प्राह—कथं सत्यीभूतमिति । असत्यं सत्यं जातम् सत्यीभूतम् ( अभूततद्भावे च्विः—अस्य च्वावितीकारः ) । दुश्चिन्तितम् = अमङ्गलम् ।

सर्वेषु जीमूतवाहनपरिवारेषु मोहमुपगतेषु शङ्खचूडोऽपि रुदन्नात्मानमधिक्षिपति—नूनमेतावित्यादि । पितरौ = मातापितरावित्यर्थः । ( माता च पिता चेति विग्रहे पिता मात्रेति सूत्रेणैकशेषः) । तस्य=परार्थमात्मानमुत्सृजतः । महासत्त्वस्य= महात्मनः । इमामवस्थाम् = शोकापन्नदशाम् । (पक्षान्तरेण पुनराह)—अथवेति । विषादृते = विषतुल्यकार्यकारिणोऽप्रियवचनाद्विनेत्यर्थः । प्रत्युपकृतम् = उपकारोत्तरोपकार इत्यर्थः । आत्मानम् = स्वम् । व्यापादयामि = घातयामि ।

उभौ—( समाश्वसितः ) ।

वृद्धा—(क) बच्छे ! उट्ठेहि, मा रोअ । अम्हे किं जीमूदवाहणेण विणा जीवम्ह ? ता समस्सस दाव ।

मलयवती—( समाश्वस्य ) । (ख)अज्जउत्त ! कहिं मए तुमं पेक्खिदव्वो ?

जीमूतकेतुः—हा वत्स ! गुरुचरणशुश्रूषाविधिज्ञ !

चूडामणिं चरणयोर्मम पातयता त्वया ।
लोकान्तरगतेनापि नोज्झितो विनयक्रमः ॥१२॥

( चूडामणिं गृहीत्वा ) । हा वत्स ! कथमेतावन्मात्रदर्शनः संवृत्तोऽसि ? ( हृदये दत्त्वा ) । अहह !!!—

भक्त्या सुदूरमवनामितनम्रमौलेः
शश्वत् तव प्रणमतश्चरणौ मदीयौ ।

---

(क) वत्से ! उत्तिष्ठ, मा रुदिहि । वयं किं जीमूतवाहनेन विना जीवामः ? तत् समाश्वसिहि तावत् ।

(ख) आर्य्यपुत्र ! क्व मया त्वं प्रेक्षितव्यः ?

---

पुत्रवियोगजदुःखमसह्यम्मन्यमानो जीमूतकेतुरनाथवत्पुत्रम्प्रति विलपति—हा वत्स ! गुरुचरणेत्यादि । गुरूणां पित्रादीनां चरणयो र्या शुश्रूषा सेवा तस्या विधिं क्रमं जानातीति तत्सम्बुद्धौ ।

शुश्रूषाक्रमज्ञत्वं दर्शयति—चूडामणिमित्यादि । अन्यो लोको लोकान्तरस्तं गतेन प्राप्तेन परलोकम्प्रति कृतप्रस्थानेनाऽपीत्यर्थः । तथा—मम चरणयोः पादयोः चूडामणिं शिरोरत्नं पातयता निक्षिपता त्वया विनयक्रमः शिष्टताऽभ्यासः विनीतानुसृतमार्ग इति यावत् न उज्झितो न त्यक्तः । ( उज्झ त्यागेऽस्मात्कर्मणि क्तः ) । विनयक्रमस्याऽत्यागे हेतुभूतस्य चरणाधिकरणकमणिपातनस्य वाक्यार्थत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः । अनुष्टुप्वृत्तम् ॥ १२ ॥

एतावन्मात्रदर्शनः = एतावन्मात्रं चूडामणिपर्यन्तं दर्शनं यस्य सः ।

चूडामणिविलोकनाद्विवृद्धशोको जीमूतकेतुर्विलपति—भक्त्येति ( हा वत्स ! ) भक्त्या पूज्याऽनुरागेण ( हेतुना ) सुदूरम् अतिशयं यथा तथा अवनामितनम्रमौलेः अवनामितो नम्रतां प्रापितो नम्रो निसर्गनतो मौलिः शिरो यस्य तथोक्तस्येत्यर्थः । तथा—शश्वत् सर्वदा मदीयौ चरणौ मदङ्घ्रिद्वयं प्रणमतो वन्द-

चूडामणिर्निकषणैर्मसृणोऽप्यहिंस्रो
गाढं विदारयति मे हृदये कथं नु ? ॥१३॥

वृद्धा—(क) हा पुत्त जीमूदवाहण ! जस्स दे गुरुअणसुस्सूसं वज्जिअ अण्णं सुहं ण रोअदि, सो कहिं दाणिं पिदरं उज्झिअ सग्गसुहमणुहोदुं गदोसि ?

जीमूतकेतुः—( सास्रम् )। देवि ! किं जीमूतवाहनेन विना जीवामो वयं, येनैवं प्रलपसि ?

मलयवती—(पादयोर्निपत्य कृताञ्जलिः)। (ख) ता देहि मे अज्जउत्तचिह्णं चूडामणिं, जेण एदं हिअए कदुअ जलनपवेसेण अवणेमि हिअअस्स संदावदुक्खं।

---

(क) हा पुत्र जीमूतवाहन ! यस्य ते गुरुजनशुश्रूषां वर्जयित्वा अन्यत् सुखं न रोचते, स कुत्रेदानीं पितरमुज्झित्वा स्वर्गसुखमनुभवितुं गतोऽसि ?

( ख ) तद्देहि मे आर्य्यपुत्रचिह्नं चूडामणिं, येनैनं हृदये कृत्वा ज्वलनप्रवेशेन अपनयामि हृदयस्य सन्तापदुःखम्।

---

स्रानस्य तव भवतः निकषणैः शाणैः ( संघर्षणैर्वा ) मसृणः स्निग्धः पुनः अहिंस्रोऽपि अघातुकोऽपि चूडामणिः शिरोरत्नं मे मम हृदये चेतसि ( स्थितः सन्निति शेषः )। गाढम् अधिकं यथा तथा कथं नु किमर्थं विदारयति भिनत्ति। मसृणस्याऽहिंस्रस्य च चूडामणेर्विदारणकर्तृत्वाद्विरोधस्यावभासेन विरोधाभासो नामाऽलङ्कारः। विचारयतीति पाठे तूत्प्रेक्षाऽलङ्कारः। वसन्ततिलकं वृत्तम् ॥१३॥

जीमूतवाहनमाताऽपि स्वामिकृतविलापमाकर्ण्य विलपति—हा पुत्र ! जीमूतवाहनेत्यादि। गुरुजनशुश्रूषां=मातृ-पितृसेवाम्। वर्जयित्वा = विहाय। सः = ( त्वमिति शेषः )। उज्झित्वा = त्यक्त्वा। अनुभवितुम्=भोक्तुं-प्राप्तुं वा।

चूडामणिविलोकनानुमितनववैधव्यवेदनामसह्यतराम्मन्यमाना मलयवती मर्त्तुकामनयाऽभिवादनपूर्वकं शिरोरत्नं श्वशुरादभ्यर्थयते—तद्देहीत्यादिना। आर्यपुत्रचिन्हम् = आर्यपुत्रस्य पत्युर्जीमूतवाहनस्येत्यर्थः। चिन्हम् लक्षणम् स्मारकमिति यावत्। ज्वलनप्रवेशेन=वन्हिप्रवेशपूर्वकात्मत्यागेनेत्यर्थः। अपनयामि=दूरीकरोमि। सन्तापदुःखम् = पतिवियोगजन्यक्लेशम्।

जीमूतकेतुः—पतिव्रते ! किमेवमाकुलयसि ? ननु सर्वेषामेवास्माकमयं निश्चयः।

वृद्धा—(क) महाराअ ! ता किं अम्हेहिं पडिपालीअदि ?

जीमूतकेतुः—न खलु देवि ! किञ्चित्। किन्त्वाहिताग्ने र्नान्येनाग्निना संस्कारो विहितः। अतोऽग्निहोत्रशरणादग्नीनादायात्मानमुद्दीपयामः।

शङ्खचूडः—(आत्मगतम्)। कष्टं !! ममैकस्य कृते सकलमेवेदं विद्याधरकुलमुच्छिन्नम्। तदेवं तावत्। (प्रकाशम्)। तात ! न खल्वनिश्चित्यैव युक्तमिदमीदृशं साहसमनुष्ठातुम्। सविचाराणि हि दैवविलसितानि। कदाचिन्नायं नाग इति ज्ञात्वा परित्यजेन्नागशत्रुः। तदनयैव दिशा वैनतेयमनुसरामस्तावत्।

---

(क) महाराज ! तत् किमस्माभिः प्रतिपाल्यते ?

---

आकुलयसि = पीडयसि (अस्मानिति शेषः)। आकुलान् करोषीतविग्रहे (करोत्यर्थे णिच्) यद्वा—आकुलयसि=आकुला भवसि (त्वमिति शेषः)। आकुलेवाचरसीति विग्रहे (आख्यानार्थे णिच्)। अयं निश्चयः = ज्वलनप्रवेशद्वारा अनः सन्तापापनयनात्मकः स्थिरविचारः।

किम् = किमर्थम्। प्रतिपाल्यते=अपेक्ष्यते—याप्यते इति यावत् (काल इति शेषः)। किमर्थमस्माभिर्निरर्थकं कालो याप्यत इत्यर्थः।

नखलु=नैवेत्यर्थः। किञ्चित् = किमपि। (प्रतिपाल्यत इति शेषः)। आहिताग्नेः = आहितः स्थापितोऽग्निर्येन तथोक्तस्य। अग्निहोत्रिण इत्यर्थः। (आहिताग्न्यादिष्विति सूत्रेणाऽऽहितशब्दस्य वैकल्पिक पूर्वनिपातविधानादग्न्याहितस्येत्यपि साधु)। अन्येन = आहिताग्निव्यतिरिक्तेन। संस्कारः = शरीरदाहः। अग्निहोत्रशरणात् = अग्निहोत्रगृहादित्यर्थः। (शरणं गृहरक्षित्रोरित्यमरः)। उद्दीपयामः = प्रज्वालयामः।

एवं जीमूतकेतुप्रभृतीनामग्निप्रवेशसङ्कल्पमवेत्य शङ्खचूडो मनसि विचारयति—कष्टमित्यादि। कृते = निमित्तम्। उच्छिन्नम् = विनष्टम्। अनिश्चित्यैव= अनिर्णीयैव। युक्तम् = उचितम्। इदम्=चिकीर्षितम्—करिष्यमाणं वा। ईदृशम्= अग्निप्रवेशरूपम्। साहसम् = अविचार्यकारित्वम्। अनुष्ठातुम् = कर्तुम्। सविचाराणि = विवेकसापेक्षाणि। दैवविलसितानि = भाग्यव्यवसितानि। अनयैव =

वृद्धा—(क)सव्वहा देवदाणं पसादेण जीवंतस्स पुत्तअस्स मुहं दंसेम।

मलयवती—( आत्मगतम् )। (ख) दुल्लहं क्खु एदं ममभंदभग्गाए।

जीमूतकेतुः—वत्स ! अवितथैषा तव भारती भवतु । तथाऽपि साग्नीनामेवास्माकं युक्तमनुसर्त्तुम्। तदनुसरतु भवान्। वयमप्यग्निशरणादग्निमादाय त्वरितमेवानुगच्छामः।

( पत्नीवधूसमेतो निष्क्रान्तः )।

शङ्खचूडः—तद् यावद् गरुडमनुसरामि । ( अग्रतो निर्व्वर्ण्य )।—

कुर्वाणो रुधिरार्द्रचञ्चुकषणैर्द्रोणीरिवाद्रेर्नवाः
प्लुष्टोत्खातवनान्तरः स्वनयनज्योतिःशिखाश्रेणिभिः।

---

( क ) सर्वथा देवतानां प्रसादेन जीवतः पुत्रस्य मुखं पश्यामः।

( ख ) दुर्लभं खल्वेतत् मम मन्दभाग्यायाः।

---

रुधिरसम्पातसूचितेनैव। दिशा = मार्गेण। वैनतेयम् = गरुडम्। अनुसरामः = अनुगच्छामः।

अवितथा=सत्या। भारती=वाणी। साग्नीनामेव=अग्निसहितानामेव। अग्निहोत्रिणामियं व्यवस्थेति भावः। युक्तमनुसर्त्तुम्=त्वया सह वैनतेयानुगमनमुचितमित्यर्थः। अनुसरतु=अनुगच्छतु। ( वैनतेयमिति शेषः )। अग्निशरणात्=अग्निगृहात्।

अथ जीमूतकेतुवचनाद्गरुडमनुसरन् शङ्खचूडोऽग्रतस्तं विलोक्य वर्णयति—कुर्वाण इति। रुधिरेण शोणितेन आर्द्रयोः सिक्तयो र्जीमूतवाहनरुधिरसिक्तयोरित्यर्थः। चञ्च्वोः कषणैर्घर्षणैः ( करणैः )। अद्रेः पर्वतस्य ( सम्बन्धिनीः ) नवा नूतना द्रोणीरिव काष्ठाम्बुवाहिनीरिव दारुमयजलसेचिनीरिवेत्यर्थः। ( द्रोणी काष्ठाम्बुवाहिनीत्यमरः )। कुर्वाणः सम्पादयन्। तथा—स्वनयनयोः स्वचक्षुषोः ( सम्बन्धिनः ) ज्योतिषः प्रभायाः शिखाश्रेणिभिः तेजःपुञ्जैः ( करणैः ) प्लुष्टं दग्धं ( प्लुष दाहेऽस्मात् क्तः ) उत्खातम् उन्मूलितम् ( उत्पूर्वकात् खनु अवदारणेऽस्मात् क्तः)। वनान्तरं वनावकाशो येन तथाभूतः। तथा—मज्जन्तोऽभ्यन्तरं प्रविशन्तो वज्रकठोराः कुलिशवत्कठिना घोरा भयानकास्तीव्राश्च ये नखराः नखाः (नखोऽस्त्री नखरोऽस्त्रियामित्यमरः) तेषां प्रान्तैरग्रभागैः अवगाढा निम्नीकृताऽवनिः पृथ्वी येन तथाभूतः। असौ पन्नगरिपुर्गरुडो मलयस्य तदाख्यपर्वतस्य शृङ्गाग्रे शिखराग्रभागे दूरात् दृश्यते ( मयेति शेषः )। एकस्यैव गरुत्मतः कर्तुः कुर्वाण-

मज्जद्वज्रकठोरघोरनखरप्रान्तावगाढावनिः
शृङ्गाग्रे मलयस्य पन्नगरिपुर्दूरादसौ दृश्यते ॥१४॥

(ततः प्रविशत्यासनस्थः पुरः पतितनायको गरुडः)।

गरुडः—जन्मनः प्रभृति भुजङ्गपतीन् अश्नता नेदमाश्चर्यं मया दृष्टपूर्वं, यदयं महात्मा न केवलं न व्यथते प्रहृष्ट इव किमपि दृश्यते । तथाहि—

ग्लानिर्नाधिकपीयमानरुधिरस्याप्यस्ति धैर्योदयै-
र्मांसोत्कर्त्तनजा रुजोऽपि वहतः प्रीत्या प्रसन्नं मुखम् ।
गात्रं यन्न विलुप्तमेकपुलकस्तत्र स्फुटो दृश्यते
दृष्टिर्मय्युपकारिणीव निपतत्यस्यापकारिण्यपि ॥१५॥

---

प्लुष्टोत्खातयोः—अवगाढा—दृश्यते इति क्रियापञ्चकेऽन्वयाद्दीपकम् । द्रोणीरिवेत्यत्रोत्प्रेक्षार्थकेवशब्दमहिम्नोत्प्रेक्षा । तदानीं गरुत्मतो यथावद्वर्णनात्स्वभावोक्तिश्चेति त्रयाणामिह साङ्कर्यम् । वृत्तञ्चेह शार्दूलविक्रीडितम् ॥१४॥

पुरःपतितनायकः = पुरोऽग्रतः पतितः स्थापितो नायको (जीमूतवाहनो) यस्य सः ।

जन्मनः प्रभृति = आ जन्मन इत्यर्थः (प्रभृतिशब्दयोगे च पञ्चमी)। भुजङ्गपतीन् = नागश्रेष्ठान् । अश्नता = भक्षयता । दृष्टपूर्वम् = पूर्वं दृष्टमित्यर्थः । महात्मा = महासत्त्वः । न केवलं न व्यथते = (नञ् द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात्) केवलं न व्यथते इति न किन्तु व्यथत एवेत्यर्थः । प्रहृष्ट इव = पुलकोदयात् सञ्जातहर्ष इवेत्यर्थः । किमपि = किञ्चित् । व्यथासद्भावेऽपि हर्षादाश्चर्यमिति भावः ।

व्यथितस्याऽपि नायकस्य हर्षोदयं स्वयमेव गरुडो वर्णयति—ग्लानिरिति । धैर्योदयैः सन्तोषाविर्भावैः (हेतुभिः) अधिकं विशेषं यथा तथा पीयमानं रुधिरं रक्तं यस्य तादृशस्य अस्य महात्मनः पुरःपतितस्य नायकस्येत्यर्थः । ग्लानिर्विषादो नास्ति, ग्लानिसद्भावेऽप्यग्लानिरित्याश्चर्यमिति भावः । तथा—मांसोत्कर्त्तनजा मांसानामुत्कर्त्तनात् खण्डनाज्जाता इत्यर्थः । रुजः पीडा वहतोऽनुभवतोऽपि (अस्य महात्मन इति शेषः) । मुखं प्रीत्या प्रसन्नतया प्रसन्नं विकसितम् । दृश्यते । यत् गात्रं शरीरं न विलुप्तं न खण्डितं (मयेति शेषः) । तत्र तस्मिन् गात्रे इत्यर्थः । एकपुलकः एकः केवलः पुलको रोमोद्गमः परजीवित-

ततः कुतूहलमेव जनितमस्यानया धैर्य्यवृत्त्या । भवतु, न भक्षया-म्येवैनम् । पृच्छामि तावत् कोऽयमिति ।

नायकः—शिरामुखैः स्यन्दत एव रक्त-
मद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि च ते महात्मन् !
किं भक्षणात् त्वं विरतो गरुत्मन् ! ? ॥१६॥

गरुडः—(आत्मगतम्) । अहो आश्चर्य्यमाश्चर्य्यम् !! कथमस्यामप्य-वस्थायामेवमूर्जितमभिधत्ते ? (प्रकाशम्) ।—

---

रक्षणजन्यहर्षेत इति भावः । स्फुटः स्पष्टो दृश्यते । तथा—अस्य दृष्टिर्नेत्रम् अप-कारिणि घातुके मयि उपकारिणि परोपकारनिरते इव निपतति । कारणसत्त्वे कार्यानुत्पत्त्या विशेषोक्तिरित्यलङ्कारशास्त्रोक्तदिशा ग्लान्यादे र्हेतुभूतानामधिकरुधिर-पानादीनां सद्भावेऽपि ग्लान्यादेरनुत्पत्त्या विशेषोक्तिरत्रालङ्कारः । शार्दूलविक्री-डितं वृत्तम् ॥ १५ ॥

कुतूहलमेव = उत्कण्ठैव । जनितम् = उत्पादितम् । अस्य = महात्मन इत्यर्थः । धैर्यवृत्त्या = धैर्यव्यवहारेण ।

भोजनविरतं तार्क्ष्यं विलोक्य नायको हेतुं विजिज्ञासमानो लोकोत्तर-मौदार्यमात्मनः सूचयति—शिरामुखैरिति । हे गरुत्मन् ! अद्यापि इदानीमपि शिरामुखैः शिराणां नाडीनां मुखैरग्रभागैरित्यर्थः । रक्तं शोणितं स्यन्दत एव स्रवत्येव । मम देहे मदीयशरीरे मांसम् अस्ति तिष्ठत्येवेत्यर्थः । ते तव तृप्तिं पर्याप्तिं ( क्षुधाया इति शेषः ) । न च पश्यामि नैवावलोकयामीत्यर्थः । ( अत एव ) हे महात्मन् ! साधो ! त्वं भक्षणात् भोजनात् क्षुन्निवृत्त्यनुकूलव्यापारादिति भावः किं कथं विरतो निवृत्तः ( असीति क्रियाशेषः ) । रक्त-मांसादेर्विद्यमानत्वाद्-भोजनविरतिं विहाय यथेच्छं भुज्यतामिति भावः । श्लोकोऽयं दर्पणकृता दयावीर-स्योदाहरणत्वेन प्रादर्शीत्यवधेयम् । भक्षणविरतिहेतोरसत्त्वेऽपि तदुद्भवाद्विभाव-नायाः—सत्यपि भक्षणाविरतिहेतौ तदनुद्भवाद्विशेषोक्तेश्च सन्देहसङ्करः । वृत्त-ञ्चात्रोपजाति नाम ॥ १६ ॥

इत्थं नायकवचो निशम्यातिविस्मितो गरुडः स्वगतमाह—अहो इति । ( निपातोऽयमद्भुतार्थकत्वेन पारतन्त्र्यं द्योतयति ) । आश्चर्यम् = ( पूर्वाऽपेक्षयेति शेषः ) । तदभिधत्ते—कथमित्यादिना । अस्यामप्यवस्थायाम् = रक्तादिनिस्सरणा-

आवर्जितं मया चञ्च्वा हृदयात् तव शोणितम् ।
अनेन धैर्य्येण पुनस्त्वयाऽऽहृतमिवाद्य मे ॥१७॥

अतः कस्त्वमिति श्रोतुमिच्छामि ।

नायकः—एवं क्षुदुपतप्तो न श्रावणयोग्यस्त्वम् । तत् कुरुष्व तावत् मम मांसशोणितेन तृप्तिम् ।

शङ्खचूडः—(सहसोपसृत्य) । तार्क्ष्य ! न खलु न खलु साहसमनुष्ठे-

---

दतिदौर्बल्येऽपीत्यर्थः । एवम् = अनुभवानुमेयनैपुण्यम् । ऊर्जितम् = उत्साहाधिक्यसम्पन्नम् । ( उर्जस्तु कार्त्तिकोत्साहबलेषु प्राणनेऽपि चेति मेदिनी ) । अभिधत्ते = ब्रूते ।

पुनर्गरुडः प्रशंसापूर्वकं नायकं पृच्छति—आवर्जितमिति । मया बुद्धिहीनेनेत्यर्थः । तव सुबुद्धिमत इत्यर्थः । हृदयात् हृदयप्रदेशात् चञ्च्वा त्रोट्या शोणितं रुधिरम् आवर्जितम् निस्सार्य पीतमित्यर्थः । त्वया पुनः त्वया तु ( त्वर्थबोधकमिह पुनरव्ययम् ) । अनेन धैर्येण एवं क्लेशावस्थायामपि क्षोभराहित्येनेत्यर्थः । अद्य इदानीं मे मम ( चित्तमिति शेषः ) आहृतमिव वशीकृतमिव अत्रोत्प्रेक्षाऽलङ्कारः सचातिशयोक्तिमूलक इत्यवसेयम् । वृत्तञ्चेदमनुष्टुप् नाम ॥ १७ ॥

अत इति । अतोऽस्मात् हृदयवशीकरणसाधक-लोकोत्तरधैर्यास्पदत्वाद्धेतोरित्यर्थः । कस्त्वम् = ( अतर्क्यमहिमेति शेषः ) । इच्छामि = लोकोत्तरमहिम्नि त्वयि कथयेत्यादेशस्यानर्हत्वादिति भावः ।

स्वेप्सितविरुद्धां नागारिपृच्छामवेत्य नायकोऽनधिकारित्वादुत्तराप्रदानपूर्वकं पुनरात्मसाध्ये नियोजयति—एवमिति । ( इच्छायाः समुचितत्वमवगमयन्नर्धाङ्गीकारार्थमवगमयत्येवमित्यव्ययशब्दः ) । प्रश्नस्याऽर्धाङ्गीकारे कुतो न कथयतीत्याशङ्कापरिहर्त्तुमाह—क्षुदुपतप्त इति । क्षुधा बुभुक्षया उपतप्तः पीडित इत्यर्थः । न श्रावणयोग्यः = न श्रावयितव्य इत्यर्थः ( मयात्मपरिचय इति शेषः ) । तत् = तस्मात् क्षुत्पीडितत्वेनानधिकारित्वाद्धेतोरित्यर्थः । मांसशोणितेन = मांसरुधिराभ्यामित्यर्थः । ( मांसं च शोणितं चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावः ) तृप्तिम् = क्षुन्निवृत्तिमित्यर्थः । कुरुष्व = सम्पादय ।

समयेऽस्मिन् शङ्खचूडो यदृच्छया पूर्वदर्शितानुसारेण समेत्य स्वेतरनिषेधपूर्वकमात्मानमर्पयति—न खल्वित्यादिना । ( प्रतिषेधाग्रहेण सम्भ्रमेण वा द्विरुक्तिः ) । साहसम् = सहसाऽविवेकेन कृतमित्यर्थः । अनुष्ठेयम् = कर्तव्यम् ।

यम् । नायं नागः । परित्यजैनम् । मां भक्षय । अहं तवाहारार्थं प्रेषितोऽस्मि वासुकिना । (उरो ददाति) ।

नायकः—(शङ्खचूडं दृष्ट्वा) । कष्टं ! विफलीभूतो मे मनोरथः शङ्खचूडेनागच्छता ।

गरुडः—(उभौ निरूप्य) । द्वयोरपि भवतोर्वध्यचिह्नम् । कः खलु नाग इति नावगच्छामि ।

शङ्खचूडः—स्थान एव भ्रान्तिः ।

आस्तां स्वस्तिकलक्ष्म वक्षसि तनौ नालोक्यते कञ्चुकः ?
जिह्वे जल्पत एव मे न गणिते नाम त्वया द्वे अपि ? ।

---

भोजनौचित्ये नेदं साहसमित्याशङ्कां परिहरति नायं नाग इति । अथैवं किं विधेयमिति पूर्वपक्षमुत्तरयति—परित्यजैनमिति । त्यक्तेऽस्मिन् मया किं भक्षणीयमित्यत्राह—मां भक्षयेति । उरो ददाति=वक्षःस्थलमुपनयतीत्यर्थः । ( तार्क्ष्यसमीपमिति शेषः ) । ( एतेन सन्देहराहित्यं प्रकाशितम् ) ।

विफलीभूत इति । अविफलो विफलः सञ्जातो विफलीभूतः ( अभूततद्भावे च्विः ) । आत्मकायव्ययेन शंखचूडरक्षणात्मकमनोरथस्य कायावशेषसद्भावान्नागकायसमर्पणाच्च वैफल्यमिति भावः ।

द्वयोरपि = नायकं शंखचूडञ्चेत्युभयोरपीत्यर्थः । वध्यचिन्हम् = रक्तांशुकद्वयरूपम् । नावगच्छामि = चिन्हसाम्यकृतसंशयद्वारोचितमाहारं नैव निश्चिनोमीत्यर्थः ।

इत्थमाकर्ण्य तार्क्ष्यवचनं शंखचूडो काकुगर्भं तमाक्षिपति—स्थान एवेति । युक्तमेवेत्यर्थः । ( युक्ते द्वे साम्प्रतं स्थान इत्यमरः ) । भ्रान्तिः = मम अस्य च वध्यत्वनिश्चये संशयः । स्थाने एव भ्रान्तिरित्यस्य काक्वा अयुक्त एव संशयो वध्यत्वनिश्चये तवेत्यर्थः । ( पक्षान्तरे )—स्थाने एवेत्यस्य सादृश्ये एवेत्यर्थः । सदृशवस्तुन्येवेति यावत् । भ्रान्तिः = सन्देहः ( भवतीति शेषः ) । ( स्थाने तु कारणार्थे स्याद् युक्तसादृश्ययोरपीति मेदिनी ) । सादृश्ये भ्रान्तिरुत्पद्यते नाऽसादृश्येऽतोऽत्र भ्रान्तिरयुक्तेति भावः ।

तार्क्ष्यसंशयस्यायुक्तत्वं प्रतिपादयति—आस्तामिति । वक्षसि हृदये स्वस्तिकाख्यनागचिन्हविशेषम् आस्ताम् तिष्ठतु एतज्ज्ञानस्य नास्ति किमपि प्रयोजनमिति भावः । ( परं ) तनौ शरीरे ( ममेति शेषः ) कंचुको निर्मोको नालो-

तिस्रस्तीव्रविषाग्निधूमपटलव्याजिह्मरत्नत्विषो
नैता दुःसहशोकसीत्कृतमरुत्पीड़ाः फणाः पश्यसि ?॥१८॥

गरुडः—(उभौ निरूप्य शङ्खचूड़स्य फणां दृष्ट्वा)। कः खलु मया व्यापादितः ?

शङ्खचूडः—विद्याधरवंशतिलको जीमूतवाहनः। कथमकारुणिकेन त्वया इदमनुष्ठितम् ?

गरुडः—(स्वगतम्)। कथमनुष्ठितम् ? अयं विद्याधरकुमारो जीमूतवाहनः !!

---

क्यते न दृश्यते (त्वयेति शेषः) । वक्षसि स्वस्तिकचिन्हसद्भावेऽप्यहि विना कंचुकस्यासम्भवात् भ्रान्तिस्तेऽयुक्तेति भावः। पुनः जल्पत एव वदतोऽपीत्यर्थः। मे मम द्वे जिव्हेऽपि त्वया न गणिते न दृष्टे नाम विस्मये (विस्मयार्थकोऽत्र नामशब्दः)। जल्पनावसरे मदीयजिव्हाद्वयस्य स्पष्टतया दर्शनेऽपि भ्रान्तिस्ते विस्मयातिशयं जनयतीति भावः। पुनः—तीव्रो दारुणो यो विषाग्नि धूँमपटलो विषानलधूमसमूहस्तेन व्याजिह्मा मालिन्यमुपगता रत्नत्विट् मणिद्युतिर्यासां तादृशाः। तथा—दुःसहः सोढुमशक्यो यः शोको विषादो (महापुरुषप्राणनाशजन्य इति भावः)। तेन यत् सीत्कृतं सीत्कारस्तदेव मरुद्वायुस्तेन पीडा कम्पनात्मिका व्यथा यासां तादृशीः, एताः साक्षाद् दृश्यमाना इत्यर्थः तिस्रः फणा न पश्यसि नावलोकसे अपि तु द्रष्टुमुचितमिति भावः। नामचिन्हानामनेकेषां दर्शनेऽपि निर्णये भ्रान्तस्त्वमतीव विचारहीनः प्रतिभासीति भावः। नालोक्यते—न गणिते—न पश्यसीत्यादिषु अपित्वालोकितुमुचितं गणितुमुचितं द्रष्टुमुचितमित्याद्यर्थस्य काक्काऽभिव्यञ्जितत्वात्काकुवक्रोक्तिरलंकारः। सीत्कृते मरुत्वारोपाद्रूपकञ्चेति द्वयोः सांकर्यम्। शार्दूलविक्रीडितं छन्दः॥ १८॥

इत्थं शङ्खचूडवचनमाकर्ण्य फणा नायकं च पश्यन् गरुडो वध्यचिन्हातिरिक्तचिन्हेन शङ्खचूडमेव नागत्वेन निश्चित्य विषादमापन्नः सन् स्वयं विमृशति—कः खल्विति। (विचारार्थकोऽत्र खलुशब्दः)। व्यापादितः = मारितः। जीविताशानिवृत्तेर्विषादान्तर्गतोक्तिरियम्।

गरुडप्रश्नमुत्तरयति—विद्याधरेति। अकारुणिकेन = निर्दयेन। अनुष्ठितम् = कृतम्। (भो गरुडेति सम्बोधनपदमादौ कथमित्यस्य योजनीयम्)।

शङ्खचूडवचसा जीमूतवाहनं विज्ञाय खेदमात्मनि सूचयति—कथमिति। कथमनुष्ठितम् = किं कृतं नैतत्कर्तुमुचितमित्यर्थः। (मयेति शेषः)।

मेरौ मन्दरकन्दरासु हिमवत्सानौ महेन्द्राचले
कैलासस्य शिलातलेषु मलयप्राग्भारभागेष्वपि ।
दिक्कुञ्जेषु च तेषु तेषु बहुशो यस्य श्रुत तन्मया
लोकालोकविचारिचारणगणैरुद्गीयमानं यशः ॥१९॥

सर्वथा महत्यंहःपङ्के निमग्नोऽस्मि ।

नायकः—भोः फणिपते ! किमेवमुद्विग्नोऽसि ?

शङ्खचूडः—किमस्थानमिदमावेगस्य ?

---

लोकत्रयविश्रुतं जीमूतवाहनं श्लाघते—मेरौ सुमेरुपर्वते । तथा—मन्दरकन्दरासु जलधिमन्थनदण्डभूतगिरिविशेषगुहासु । तथा—हिमवत्सानौ हिमालयप्रस्थे । तथा—महेन्द्राचले महेन्द्रनामकुलपर्वते । तथा—कैलासस्य शिवस्थानभूतस्य तदाख्यपर्वतस्य शिलातलेषु पाषाणप्रदेशेषु । तथा—मलयप्राग्भारेषु मलयगिरेरुत्कृष्टप्रदेशेष्वित्यर्थः । ( प्राग्भारो ह्युत्कर्षे परभागे पर्वताग्रभागे चेति कोशात् ) मलयशिखरेष्वित्यर्थो वा । अपि तथा—तेषु तेषु भूयो भूयो मया विचरितेष्वित्यर्थः । दिक्कुञ्जेषु दिशावलयेषु लोकालोकविचारिचारणगणैः = लोकालोकविचारिभिः चक्रवालगिरिमध्यविचरणशीलैः ( यद्वा ) लोकानामालोकनाय विचरद्भिः चारणगणैर्देवाज्ञापालकव्रन्दैरुद्गीयमाने तारध्वनिभिः कीर्त्यमानं यस्य जीमूतवाहनस्य तत् प्रसिद्धं यशः कीर्त्तिः मया बहुशो भूयोभूयः श्रुतं सोऽयं विद्याधरकुमारो जीमूतवाहन इति योजनीयम् । विशेषोदात्तयोरलंकारयोः संसृष्टिः। एकस्यैव यशसो मेर्वाद्यनेकस्थानदर्शनाद्विशेषः । जीमूतवाहनस्य लोकोत्तरमहत्त्वसूचनादुदात्तोऽपीति बोध्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

इत्थं नायकोत्कर्षं वर्णयित्वा गरुडः स्वस्याऽनुत्कर्षं सूचयति—सर्वथेति । सर्वथा = सर्वप्रकारेण । अंहः पङ्के = कलुषकर्दमे । (कलुषं वृजिनैनोघमंहो दुरितदुष्कृतमित्यमरः ) । निमग्नः = पतितः । अयोग्यकार्यकरणादकीर्त्तिपङ्के पतितोऽस्मीत्यर्थः । ( पङ्कनिमग्नोक्त्योद्धरणासम्भवं द्योतयति ) ।

उद्विग्नोऽसि = विषण्णोऽसीत्यर्थः ।

किमिति । इदम् = सदर्थमात्मजीवार्पणम् । आवेगस्य = विषादस्य । अस्थानम् = अविषयः । किम् = नैवेत्यर्थः ।

स्वशरीरेण शरीरं तार्क्ष्यात् परिरक्षता मदीयमिदम् ।
युक्तं नेतुं भवता पातालतलादपि तलं माम् ॥२०॥

गरुडः—अये ! करुणार्द्रचेतसा अनेन महात्मना अस्मद्ग्रासगोचरपतितस्यास्य फणिनः प्राणान् रक्षितुं स्वदेह आहारार्थमुपनीतः । तन्महदकृत्यमेतन्मया कृतम् । किं बहुना, बोधिसत्त्व एवायं व्यापादितः । तस्य महतः पापस्य अग्निप्रवेशादृते नान्यत् प्रायश्चित्तं पश्यामि । तत् क्व नु खलु वह्निं समासादयामि ? (दिशः पश्यन्) । अये ! अमी केचित् गृहीताग्नय इत एवागच्छन्ति । तद् यावदेतान् प्रतिपालयामि ।

शङ्खचूडः—कुमार ! पितरौ ते प्राप्तौ ।

---

आवेगस्यौचित्यं समर्थयति—स्वशरीरेणेति । इदं दृश्यमानं मदीयं शरीरं (निर्गुणम्) स्वशरीरेण निजकायदानेनेत्यर्थः । तार्क्ष्यात् गरुडात् मदीयवंशोन्मूलनोद्यतादित्यर्थः । परिरक्षता परित्राणं कुर्वता भवता माम् अक्षतशरीरम् पातालतलात् निजनिवाशभूतात् पूर्वस्मात्स्थानादित्यर्थः । तलम् अधस्तनं नरकमित्यर्थः । नेतुं प्रापयितुं युक्तम् उचितम् । नैव युक्तमित्यर्थः (काकुगर्भोक्तिरियम्) आत्मकायदानेन मदीयकायरक्षणान्नरकं मां प्रापयिष्यतीति भावः । निजकायविनिमयेन मम रक्षणात् परिसंख्यालंकारः । मम नरकप्रापणे पूर्वार्द्धोपात्तहेतोः पदार्थगतत्वात्पदार्थहेतुकं काव्यलिङ्गञ्चेत्युभयोः संसृष्टिः । आर्या छन्दः ॥२०॥

शङ्खचूडकृताधिक्षेपवचसाऽतिविषण्णो गरुडो निजाचरणस्याऽयुक्तत्वं निश्चिनोति—अये ! करुणार्द्रचेतसेत्यादिना । करुणार्द्रचेतसा = करुणया दयया आर्द्रं युक्तं चेतो हृदयं यस्य तादृशेन । अनेन महात्मना = जीमूतवाहनेन । अस्मद्ग्रासगोचरपतितस्य = मदीयभोजनविषयस्य । अकृत्यम् = कर्तुमनर्हम् । बोधिसत्त्वः = बोधो मोहराहित्यात्मकज्ञानमस्त्यस्येति बोधी विशिष्टज्ञानीत्यर्थः । तादृशं सत्त्वं स्वभावो यस्य स तथोक्तः । संसारमनित्यं विज्ञाय नित्यज्ञानमयो बौद्धमतावलम्बीमहात्मेत्यर्थः । व्यापादितः = विनाशितः । अग्निप्रवेशादृते = अग्नौ प्राणत्यागमन्तरा । प्रायश्चित्तम् = पापविनाशपूर्वकशुद्धिजनकक्रियाविशेषम् । समासादयामि = प्राप्नोमि । गृहीताग्नयः = अग्निहोत्रिणः । इतः = अस्यां दिशि । प्रतिपालयामि = अपेक्षे ।

कुमार ! पितरौ ते प्राप्तौ = ( किं क्रियते त्वयेति शेषः )

नायकः—( ससम्भ्रमम् ) । सङ्खचूड ! समुपविश्योत्तरीयेणाच्छादितशरीरं कृत्वा धारय माम् । अन्यथा कदाचिदीदृशं सहसैव मां दृष्ट्वा अम्बा जीवितं जह्यात् ।

शंखचूडः—(पार्श्वात्पतितमुत्तरीयं गृहीत्वा तथा करोति) ।

(ततः प्रविशति पत्नीवधूसमेतो जीमूतकेतुः)

जीमूतकेतुः—( सास्रम् ) । हा पुत्र जीमूतवाहन !—

आत्मीयः पर इत्ययं खलु कुतः सत्यं कृपायां क्रमः ?
किं रक्ष्या बहवः किमेक इति ते जाता न चिन्ता कथम् ?
तार्क्ष्यात् त्रातुमहिं स्वजीवितपरित्यागं त्वया कुर्वता
येनात्मा पितरौ वधूमिति हतं निःशेषमेतत् कुलम् ॥२१॥

---

शङ्खचूडोक्तमनाकर्णितं गरुडेन वचो निशम्य नायकोऽतिसम्भ्रमेण शङ्खचूडम्प्रतिविधेयं बोधयति—समुपविश्येत्यादिना । समुपविश्य = समीपे उपविश्येत्यर्थः । आच्छादितशरीरम् = आच्छादितमावृतं शरीरं यस्य तादृशम् । धारय = अवलम्बस्व । तथाऽकरणे हानिं दर्शयति—अन्यथेति ।

अथ सपरिवारः पिता तं देशमागच्छन् परित्यजंश्चाश्रुधारां पुत्रमुद्दिश्य विलपति—हा पुत्रेति ।

विलापप्रकारमेव दर्शयति—आत्मीय इत्यादि । कृपायाम् अन्यस्मिन् दयाकरणे (विषये) अयम् आत्मीयः स्वजनः ( अयम् ) परोऽन्य इत्यवं क्रमो विचारः कुतः खलु क्वापि नास्तीत्यर्थः । सत्यम् दयाकरणे स्व-परविचारो नेति तथ्यमेतदित्यर्थः । परं बहवः ( प्राणिन इति शेषः ) रक्ष्याः रक्षणीयाः किम्, किम् एकः ( प्राणीति शेषः ) रक्ष्यः इति एवं चिन्ताविचारस्ते तव कथं न जाता । तार्क्ष्यात् गरुत्मतः अहिं सर्पम् ( एकमिति शेषः ) त्रातुं रक्षितुं स्वजीवितपरित्यागं निजप्राणोत्सर्गं कुर्वता विदधता येन त्वया आत्मा निजशरीरं पितरौ जननीजनकौ वधूः स्त्री एतच्चतुष्टयमित्यर्थः । अत एव निश्शेषं समग्रं यथा तथा एतत् कुलं हतं विनाशितं तस्य ते चिन्ता कथं न जातो अवश्यमेव ते चिन्तया भवितव्यमिति भावः । एकस्य रक्षणमपरेषां च विनाश इति विरुद्धक्रियाद्वयस्य संघटनादिह विषमाऽलंकारः । तदुक्तं दर्पणे—

विरूपयोः संघटना या च तद्विषमं मतम् ।

इति । छन्दश्चेदं शार्दूलविक्रीडितं नाम ॥ २१ ॥

वृद्धा—(मलयवतीमुद्दिश्य)। (क) जादे ! विरम मुहुत्तअं। अवि-रलनिवडन्तवाप्पविंदूहिं अहिहवीअदि अअं अग्गी।

सर्वे—(परिक्रामन्ति)।

जीमूतकेतुः—हा पुत्र जीमूतवाहन !

गरुडः—(श्रुत्वा)। हा जीमूतवाहन! इति ब्रवीति। तद्व्यक्त-मयमस्य पिता। तत् किमेतदीयेनाग्निना आत्मानमुद्दीपयामि ? न शक्नोमि अस्य पुत्रघातलज्जया मुखं दर्शयितुम्। अथवा किमग्निहेतोः पर्य्याकुलो-ऽस्मि ? तटस्थ एवास्मि जलनिधेः। तद् यावदिदानीम्।—

ज्वालाभङ्गैस्त्रिलोकग्रसनरसलसत्कालजिह्वाग्रकल्पैः
सर्पद्भिः सप्तसप्तेः पदमिव कवलीकर्तुमीशैः समुद्रे।

---

(क) जाते ! विरम मुहूर्त्तम्। अविरलनिपतद्बाष्पबिन्दुभिरभिभूयतेऽयमग्निः।

---

जाते = वत्से अविरलनिष्पतद्बाष्पबिन्दुभिः = अविरला सघना निष्प-तन्तो निस्सरन्तो ये बाष्पबिन्दवोऽश्रुकणास्तैरित्यर्थः। अभिभूयते = मन्दी क्रियते।

एतदीयेन = एतत्समानीतेन। उद्दीपयामि = प्रज्वालयामि। अस्य = अस्मै इत्यर्थः। (सम्बन्धत्वेन विवक्षणात् षष्ठी)। (पक्षान्तरमाह)—अथवेति।

अथ पापापनोदनाय गरुडो निजाध्यवसायं सूचयति—ज्वालेति। अस्मिन् साक्षाद्दृश्यमाने समुद्रे समुद्रमध्यवर्तिनीत्यर्थः। त्रिलोकस्य भुवनत्रयस्य ग्रसने भक्षणे यो रसोऽनुरागस्तेन लसन् स्फुरन् यः कालस्य यमस्य जिह्वाग्रस्तत्कल्पै-स्तत्सदृशैः। तथा—सर्पद्भिः इतस्ततः प्रसरद्भिराकाशमुत्पतद्भिरित्यर्थः। अत एव सप्त सप्तसंख्यका सप्तयोऽश्वा यस्य तादृशस्य सूर्यस्येत्यर्थः। (वाजिवाहार्वगन्धर्व हयसैन्धवसप्तय इत्यमरः) पदं स्थानं सूर्यलोकमिति यावत् कवलीकर्तुं ग्रसितुम् ईशैः समर्थैरिव ज्वालाभङ्गैः शिखातरङ्गैः (भङ्गस्तरङ्ग ऊर्मिर्वेत्यमरः) शिखा-समूहैरिति यावत् (उपलक्षिते)—(इत्थं भूतलक्षणे इति तृतीया)। तथा—उत्पातस्य प्रलयकालस्य यो वातो वायुस्तस्य प्रसरणं प्रस्फुरणं तद्वत् पटुतरैः प्रबलैः। उत्पातेन यो वातप्रसरः सवेगप्रवहणं तेन पटुतरैरित्यर्थो वा स्वैः स्वकीयै-रेव पक्षवातैः पक्षोत्थवायुभिः धुक्षिते सन्दीपिते। तथा—कल्पावसाने प्रलयकाले यो ज्वलनो वन्हिस्तद्वत् भयकरे भीतिजनके वाडवाग्नौ समुद्रवन्हौ पतामि आत्मानं निक्षिपामि (अहमिति कर्तृपदशेषः)। आद्य चरणे द्वितीयचरणे च वृत्त्यनुप्रासो

स्वैरेवोत्पातवातप्रसरपटुतरैर्धुक्षिते पक्षवातै-
रस्मिन् कल्पावसानज्वलनभयकरे वाड़वाग्नौ पतामि ॥२२॥
(इत्युत्थातुमिच्छति)।

नायकः—भोः पक्षिराज ! अलमनेनाध्यवसायेन, नायं प्रतीकारोऽस्य पाप्मनः।

गरुडः—( जानुभ्यां स्थित्वा कृताञ्जलिः )। भो महात्मन् ! कस्तर्हि कथ्यताम्।

नायकः—प्रतिपालय क्षणमेकम्। पितरौ मे प्राप्तौ। यावदेतौ प्रणमामि।

गरुडः—एवं क्रियताम्।

जीमूतकेतुः—( दृष्ट्वा सहर्षम् )। देवि ! दिष्ट्या वर्द्धसे। अयं वत्सो जीमूतवाहनो न केवलं ध्रियते, प्रत्युत कृताञ्जलिना गरुड़ेन शिष्येणेव पर्य्युपास्यमानस्तिष्ठति।

वृद्धा—(क) महाराअ ! कअत्थम्हि। अक्खदसरीरस्स मुहं पेक्खिस्सं।

मलयवती—(ख) अहं अज्जउत्तं पेक्खिअ अदिपिअं त्ति करिअ ण पत्तिआमि।

---

( क ) महाराज ! कृतार्थाऽस्मि। अक्षतशरीरस्य मुखं प्रेक्षिष्ये।

( ख ) अहमार्य्यपुत्रं प्रेक्ष्य अतिप्रियमिति कृत्वा न प्रत्येमि।

---

वाच्योत्प्रेक्षया संसृष्टः। कल्पप्प्रत्ययेन सादृश्यार्थबोधनात्कालाग्रसदृशै ज्वालाभङ्गै-रित्युपमा-सा च ज्वालाभङ्गेषु कालजिह्वाग्रत्वाऽसम्भवेऽपि सम्भवप्रतिपादनादुद्भूते-नाऽतिशयोक्त्यलङ्कारेणाऽनुजीवितेति चतुर्णां साङ्कर्य्यम्। स्रग्धरा वृत्तम् ॥२२॥

अध्यवसायेन = आग्रहेण। प्रतीकारः = उपायः। पाप्मनः = पापस्य। ध्रियते = जीवति। प्रत्युत = किन्तु। पर्युपास्यमानः = संसेव्यमानः।

अक्षतशरीरस्य = अविनष्टकायस्य।

प्रत्येमि = विश्वसिमि। अतिप्रियमिति कृत्वा=अतिप्रिये विनाशशङ्कायाः निसर्गतः सिद्धत्वादिति भावः।

जीमूतकेतुः—( उपसृत्य ) । वत्स ! एह्येहि, परिष्वजस्व माम् ।

नायकः—( उत्थातुमिच्छन् पतितोत्तरीयो मूर्च्छति ) ।

शङ्खचूडः—कुमार ! समाश्वसिहि समाश्वसिहि ।

जीमूतकेतुः—हा वत्स ! कथं मां दृष्ट्वा परिष्वङ्गं गतोऽसि ?

वृद्धा—(क) हा पुत्तअ ! कहं बाआमेत्तकेण वि तुए ण संभाविदम्हि ।

मलयवती—(ख) हा अज्जउत्त ! कहं गुरुअणो वि दे ण पेक्खिदव्वो ?

सर्वे—( मोहं गच्छन्ति ) ।

शङ्खचूडः—हा शङ्खचूड़हतक ! कथं गर्भस्थ एव न विपन्नोऽसि, येनैवं क्षणे क्षणे मरणातिगं दुःखमनुभवसि ?

गरुडः—सर्वमिदं मम नृशंसस्य असमीक्ष्यकारिताया विजृम्भितम् तदेवं तावत् करोमि । ( पक्षाभ्यां वीजयन् ) । भो महात्मन् ! समाश्वसिहि समाश्वसिहि ।

नायकः—( समाश्वस्य ) । शङ्खचूड़ ! समाश्वासय गुरून् ।

शङ्खचूडः—तात ! समाश्वसिहि समाश्वसिहि । अम्ब ! समाश्वसिहि समाश्वसिहि ।

उभौ—( समाश्वसितः )

---

( क ) हा पुत्रक ! कथं वाचामात्रेणापि त्वया न सम्भाविताऽस्मि ?

( ख ) हा आर्य्यपुत्र ! कथं गुरुजनोऽपि ते न प्रेक्षितव्यः ?

---

परिष्वजस्व=आलिङ्गस्व ।

परिष्वङ्गं=कालालिङ्गनमित्यर्थः ।

सम्भाविता = सत्कृता ।

गुरुजनोऽपि=पितरावपि । ( मां मा द्राक्षी र्गुरुजनस्त्ववश्यं दर्शनीय इत्यर्थमपिशब्दोऽभिधत्ते ) । ते=त्वयेत्यर्थः ( कृद्योगलक्षणाऽत्रषष्ठी ) ।

हा शङ्खचूडहतक = निन्दित शङ्खचूड ! गर्भस्थ एव = उदरान्तरालवर्त्त्येव । विपन्नोऽसि = मृतोऽसि । मरणातिगम्=मरणादप्यधिकम् । अनुभवसि=प्राप्नोषि । एतद्दुःखाऽपेक्षया मरणदुःखस्यापि श्रेष्ठत्वमिति भावः ।

नृशंसस्य = घातुकस्य । ( नृशंसो घातुकः क्रूरः पाप इत्यमरः ) असमीक्ष्यकारितायाः=अविवेकितायाः । विजृम्भितम् = फलमित्यर्थः ।

वृद्धा—(क) पुत्त ! कहं पेक्खंताणं ज्जेव्व अम्हाणं कदंतहदएण अवहरिअसि ? ।

जीमूतकेतुः—देवि ! मैवममङ्गल्यवादिनी भव। म्रियत एवाऽस्मान् । तद्वधूः समाश्वास्यताम् ।

वृद्धा—( मुखं वस्त्रेणावृत्य रुदती )। (ख) पडिहदममंगलम् । ण रोइस्सम् । मलअवदि ! समस्सस ! बच्छे ! उट्ठेहि उट्ठेहि । वरं एत्तिअ वेलं तुमं भत्तुणो मुहं पेक्ख ।

मलयवती—( समाश्वस्य )। (ग) हा अज्जउत्त !

वृद्धा—( मलयवत्या मुखं पिधाय )। (घ) बच्छे ! मा एव्वं करेहि । पडिहदं क्खु एदं ।

जीमूतकेतुः—( सास्रम् )।

---

( क ) पुत्र ! कथं प्रेक्षमाणानामेवास्माकं कृतान्तहतकेनापह्रियसे ?

( ख ) प्रतिहतममङ्गलम् । न रोदिष्यामि । मलयवति ! समाश्वसिहि । वत्से ! उत्तिष्ठ उत्तिष्ठ । वरमेतस्यां वेलायां त्वं भर्तुर्मुखं प्रेक्षस्व ।

( ग ) हा आर्य्यपुत्र !

( घ ) वत्से ! मैवं कुरु । प्रतिहतं खल्वेतत् ।

---

प्रेक्षमाणानामेवास्माकम् = प्रेक्षमाणानस्माननादृत्येत्यर्थः । ( षष्ठी चानादरे इत्यनेन षष्ठी )।

अमङ्गल्यवादिनी = अशुभाशंसिनी । म्रियत एव = जीवत्येव । प्रतिहतम् = शान्तम् । ( भवत्विति शेषः )। वरम् = मनाक्प्रियम् । मुखविशेषणपक्षे—वरं सुन्दरं प्रियम्वेत्यर्थः ।

वृद्धा विलपन्तीं मलयवतीं समाश्वसितुं तन्मुखपिधानपूर्वकमाह—वत्से ! मैवं कुर्विति । एवम्=आर्यपुत्रं सम्बोध्य विलापम् । प्रतिहतम्=विनाशितम् । ( भवत्विति शेषः ) । एतम् = अमङ्गलम् ।

अथ जीमूतकेतुरपि रुदन् विलपति—विलुप्तेति । ( गरुडभक्षणात् ) किञ्चित् विलुप्तानि किञ्चित् शेषाणि च विलुप्तशेषाणि (स्नानानुलिप्तवत् समासः) । तादृशान्यङ्गानि यस्य स विलुप्तशेषाङ्गस्तस्य भावस्तत्ता तया विलुप्तशेषाङ्गतया विनष्टावशिष्टावयवत्वेन ( हेतुना ) । निराश्रयत्वात् हृदयरूपाधाराभावेन निष-

विलुप्तशेषाङ्गतया प्रयातान् निराश्रयत्वादिव कण्ठदेशम्।
प्राणांस्त्यजन्तं तनयं निरीक्ष्य कथं न तापात् शतधा व्रजामि? २३

मलयवती—(क) हा अज्जउत्त! अदिदुक्करकारिणी क्खु अहं, जा ईरिसं अज्जउत्तं पेक्खंती अज्जावि जीविअं ण परिच्चआमि।

वृद्धा—(नायकस्याङ्गानि स्पृशन्ती गरुड़मुद्दिश्य)। (ख) णिसंस! कहं, दाणीं तुए एदं आरुहमाणणवजोव्वणसोहं तं जेव्व एदावत्थं पुत्तअस्स मे शरीरं किदम्?

नायकः—अम्ब! मा मैवम्। किमनेन कृतम्? ननु पूर्व्वमप्येतदीदृशमेव परमार्थतः। पश्य,—

---

(क) हा आर्य्यपुत्र! अतिदुष्करकारिणी खल्वहं, या ईदृशम् आर्य्यपुत्रं प्रेक्षमाणा अद्यापि जीवितं न परित्यजामि।

(ख) नृशंस! कथमिदानीं त्वया एतदारोहन्नवयौवनशोभं तदेवैतावदवस्थं पुत्रकस्य मे शरीरं कृतम्?

---

लम्बनत्वादिति भावः। इव, कण्ठदेशं ग्रीवामध्यं प्रयातान् प्राप्तान् प्रयाणोन्मुखानिति यावत् प्राणान् जीवान् त्यजन्तं तनयं पुत्रं निरीक्ष्य दृष्ट्वा तापात् पीडाधिक्यात् (हेतोः)। शतधा शतखण्डत्वं कथं न व्रजामि प्राप्नोमि। शतखण्डो भूत्वा कथं न विशीर्णो भवामीत्यर्थः। (अहमिति शेषः)। उत्प्रेक्षार्थकेवशब्दमहिम्ना पूर्वार्द्धे जायमानस्योत्प्रेक्षाऽलङ्कारस्य शतधाव्रजनात्मककार्ये हेतुभूतस्य प्राणत्यागिसुतावलोकनस्य वाक्यार्थत्वादुत्तरार्द्धे जायमानेन वाक्यार्थहेतुककाव्यलिङ्गालङ्कारेण संसृष्टिः। वृत्तञ्चोपजातिनाम ॥२३॥

पुत्रस्याङ्गानि स्पृशन्ती वृद्धा गरुडमधिक्षेप्तुमुपक्रमते—नृशंसेत्यादि। नृशंस! क्रूर! आरोहत् उद्गच्छतो नवयौवनस्य शोभा यत्र तादृशम्। तदेव = अतिशोभनीयत्वेन प्रसिद्धमेवेत्यर्थः।

गरुडमधिक्षिपन्तीं मातरं प्रत्याह नायकः—अम्ब! मा मैवमिति। (वादीरिति शेषः)। किमनेन कृतम्=अनेन गरुडेन न मे किमप्यपकृतमित्यर्थः। पूर्वमपि=एतत्प्रवृत्तेः प्रागपीत्यर्थः। एतत्=शरीरम्। ईदृशमेव=अशोभनीयमेव। परमार्थतः = यथार्थतः। पश्य-भ्रान्तिं विहाय विमृश।

मेदोऽस्थिमांसमज्जाऽसृक्सङ्घातेऽस्मिंस्त्वचाऽऽवृते ।
शरीरं वाऽस्ति का शोभा सदा बीभत्सदर्शने ? ॥२४॥

गरुडः—भो महात्मन् ! नरकानलज्वालावलीढमिवात्मानं मन्यमानो दुःखं तिष्ठामि । तदुपदिश्यतां, येन मुच्येयमस्मादेनसः ।

नायकः—अनुजानातु मां तातः, यावदस्य पापस्य प्रतिपक्षमुपदिशामि ।

जीमूतकेतुः—वत्स ! एवं क्रियताम् ।

---

शरीरस्याऽशोभनीयत्वमेव द्रढयति मातरं प्रति नायकः—मेद इति । मेदश्च अस्थि च मासं च मज्जा च असृक्चैतेषामितरेतरद्वन्द्वो मेदोऽस्थिमांसमज्जासृञ्चि तेषां संघातः समूहो यत्र तादृशे । पुनः—त्वचावृते चर्म्मणाच्छादिते । पुनः—सदा सर्वदा बीभत्सं निन्दितं दर्शनं यस्य तादृशे । लोम-नख-दन्त-विण्मूत्रादिभि र्जुगुप्सितावलोकने इत्यर्थः । अस्मिन् शरीरे काये का शोभा नैव कापि सेत्यर्थः । विशेषज्ञानाय कुत्सितशरीरे शोभानिषेधस्याऽऽभासितत्वादत्राक्षेपाऽलङ्कारः । तदुक्तम्—

वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये ।
निषेधाभास आक्षेपः

इति । शरीरस्याऽशोभनीयत्वे हेतुभूतमेदः प्रभृतेःपदार्थगतत्वात्पदार्थहेतुकं काव्यालिङ्गञ्च । अनुष्टुप्वृत्तम् । अन्तिमकाले शरीरवर्णनं यथा मार्कण्डेयपुराणे—

अर्द्धदग्धाः शवाः श्यामा विकसन्नेत्रपङ्क्तयः ।
हसन्तीवाग्निमध्यस्थाः कायस्यास्य दशात्वियम् ॥

ज्ञानिनामिह वचनं यथा—

समाश्लिष्यत्युच्चैर्घनपिशितपिण्डं स्तनधिया
मुखं लालाक्लिन्नं पिबति चषकं सासवमिव ।
अमेध्ये क्लेदार्द्रे पथि च रमते स्पर्शरसिको
महामोहान्धानां किमिव रमणीयं न भवति ॥

नायकवचोऽमृतं निपीय गरुडो निजव्यसनप्रकाशनपूर्वकं नायकं प्रार्थयते—भो महात्मन्नित्यादिना । नरकानलस्य नारकीयवन्हे र्ज्वालाभिः शिखाभिरवलीढम् आस्वादितं भस्मीकृतम् । येन=यादृशेन प्रायश्चित्तेन । मुच्येऽहम् । (भवतेति शेषः) त्राये । एनसः=पापात् ।

अनुजानातु=आज्ञापयतु । प्रतिपक्षम् = विरुद्धम्—प्रायश्चित्तमित्यर्थः ।

नायकः—वैनतेय ! श्रूयताम् ।

गरुड़ः—( कृताञ्जलिः ) । आज्ञापय ।

नायकः—

नित्यं प्राणाभिघातात् प्रतिविरम कुरु प्राक्कृतस्यानुतापं
यत्नात् पुण्यप्रवाहं समुपचिनु दिशन् सर्वसत्त्वेष्वभीतिम् ।
मग्नं येनात्र नैनः फलति परिणतं प्राणिहिंसासमुत्थं
येनैतद्वारिपूरे लवणकणमिव क्षिप्तमन्तर्ह्रदस्य ॥२५॥

गरुड़—यदाज्ञापयसि ।—

अज्ञाननिद्राशयितो भवता प्रतिबोधितः ।
सर्वप्राणिवधादेष विरतोऽद्यप्रभृत्यहम् ॥२६॥

---

गरुडं प्रति प्रायश्चित्तमुपदिशति नायकः—नित्यमिति । नित्यं प्रतिदिनं प्राणाभिघातात् जीवहिंसनात् अहिवधादित्यर्थः । प्रतिविरम निवर्तस्व । पुनः प्राक्कृतस्य पूर्वमनुष्ठितस्य जीवहिंसनात्मकस्य (पापस्येति शेषः) । अनुतापं महदनुचितं कर्म कृतं मया नैवं पुनः करिष्यामीत्येवं रूपं पश्चात्तापमित्यर्थः । कुरु अनुभव पुनः—सर्वेषु सत्त्वेषु जीवेषु अभीतिम् अभयं दिशन् कुर्वन् यत्नात् उद्योगात् पुण्यप्रवाहं पुण्यसंचयं समुपचिनु समर्जय । येन येन ( उक्तरूपपुण्यकर्मणा ) अत्र संसारे प्राणिहिंसासमुत्थं जीववधोत्पन्नं परिणतं फलोन्मुखम् एतत् त्वत्कृतम् एनः पापं ह्रदस्य जलाशयस्यान्तर्मध्ये वारिपूरे जलप्रवाहे क्षिप्तं लवणकणं लवणविन्दुमिव मग्नं लीनं ( सत् ) न फलति न नरकाद्यनिष्टफलमुत्पादयतीत्यर्थः । हिंसानिवृत्तिमन्तरा नान्य उपायः कश्चित्पापापनोदक इति भावः । गरुत्मतो विष्णुवाहनत्वेन श्रेष्ठत्वेऽपि हिंसकत्वेन युष्मच्छब्दवाच्यः । एकस्य कर्तृकारकस्य विरमादिक्रियाचतुष्टयेऽन्वयाद्दीपकाऽलङ्कारः—जले लीनं लवणकणमिव पुण्येलीनमेन इत्युपमालङ्कारेण संसृष्टः । अत्र नाट्यलक्षणमप्युपदिष्टनामधेयमस्ति । तदुक्तं तल्लक्षणम्—

उपदिष्टं मनो हारि वाक्यं शास्त्रानुसारतः ।

इति । स्रग्धरावृत्तम् ॥२५॥

नायकोपदेशलब्धज्ञानो गरुडोऽतितुष्टः सन् प्राह—अज्ञानेति । अज्ञानं मोहस्तदेव निद्रा शय्या तत्र शयितो निद्रित एषोऽहं भवता प्रतिबोधितो जागरितः भवदुपदेशात् सञ्जातविवेकः सन् अद्यप्रभृति अद्यारभ्य सर्वप्राणिवधात् जन्तुमात्रहिंसनात् विरतो निवृत्तः (अस्मीति शेषः) । यद्वा—अज्ञानं तत्त्वाग्रहणं तेन या

सम्प्रति हि,—

क्वचिद् द्वीपाकारैः पुलिनविपुलैर्भोगनिवहैः
कृतावर्त्तभ्रान्तिर्वलयितशरीरः क्वचिदपि ।
व्रजन् कूलात् कूलं क्वचिदपि च सेतुप्रतिसमः
समाजो नागानां विचरतु महोदन्वति सुखम् ॥२७॥

अपि च,—

स्रस्तानापादलम्बान् घनतिमिरनिभान् केशपाशान् वहन्त्यः
सिन्दूरेणेव दिग्धैः प्रथमरविकरस्पर्शताम्रैः कपोलैः ।

---

निद्रा अविचारमूलकयत्किञ्चित्कारिता तथा शयितो विवेकहीनत्वाद् जीवन्मृतप्रायः, एषोहम् भवता जागरूकेण प्रतिबोधितो ज्ञानाख्यं जागरं प्रापितः । उत्तरार्द्धव्याख्यानं पूर्ववत् । अज्ञाने निद्रात्वारोपाद्रूपकम् । गरुत्मतो हिंसानिवृत्तौ हेतोः प्रतिबोधनस्य वाक्यगतत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् तच्चोक्तरूपकेणाऽनुजीवितम् । अनुष्टुप्वृत्तम् ॥२६॥

स्वस्मान्नागानामभीतिं दर्शयति गरुडः—क्वचिदिति । नागानाम् उरगाणां समाजः समुदायः क्वचित् कुत्रचित् द्वीपाकारैः सर्वतो जलवेष्टितभूभागसदृशैः पुलिनविपुलैः तोयोत्थस्थानवद्बृहद्भिः भोगनिवहैः शरीरसमूहैः (उपलक्षितः) (इत्थं भूतेति सूत्रेण तृतीयाऽत्रोपलक्षणे) । क्वचिदपि कुत्रचिदपि वलयितं मण्डलीकृतं शरीरं येन तादृशः । अत एव कृता आवर्त्तस्य जलभ्रमस्य भ्रान्तिः सन्देहो येन तादृशः । च पुनः क्वचिदपि कूलात् तटात् कूलं तटं व्रजन् गच्छन् सेतुप्रतिसमः सेतुवत् प्रतीतः (सन्) महोदन्वति महोदधौ (उदन्वानुदधिः सिन्धुरित्याद्यमरः) । सुखं यथेच्छं विहरतु विचरतु । अत्रोपमालंकारः । शिखरिणी वृत्तम् ॥२७॥

तामेव पुनर्दर्शयति—अपि च—स्रस्तानिति । स्रस्तान् स्खलितान् हर्षाधिक्याच्छैथिल्यमुपगतानिति यावत् । अत एव आपादलम्बान् पादपर्य्यन्तपतितान् । तथा—घनतिमिरनिभान् गाढान्धकारसदृशान् केशपाशान् केशसमूहान् वहन्त्यो धारयन्त्यः । पुनः—प्रथमरविकरस्पर्शताम्रै नवोदितसूर्यकिरणस्पर्शारक्तैः अत एव सिन्दूरेण दिग्धै र्लिप्तैरिव कपोलैर्गण्डस्थलैः (उपलक्षिताः) । पुनः—आयासेन सुरतजनितश्रमेण (हेतुना) अलसाङ्ग्यः कर्मादक्षशरीराः । पुनः—अवगणितरुजः विचिन्तितपीडा उरगयुवतयो नागवध्वः, अस्मिन् पुरोदृश्यमाने चन्दनानां कानने वने रागात् स्नेहात् तवैव न ममेति भावः । एतां नागेषु गरुत्मतोऽभ-

आयासेनालसाङ्ग्योऽप्यवगणितरुजः कानने चन्दनानाम्
अस्मिन् गायन्तु रागादुरगयुवतयः कीर्त्तिमेतां तवैव ॥२८॥

नायकः—साधु महासत्त्व ! साधु, अनुमोदामहे । सर्वथा दृढसमाधानो भव । ( शङ्खचूडं निर्दिश्य ) । शङ्खचूड ! त्वयाऽपि स्वगृहमिदानीं गम्यताम् ।

शङ्खचूडः—( निश्वस्य अधोमुखस्तिष्ठति ) ।

नायकः—( निश्वस्य मातरं पश्यन् ) ।

उत्प्रेक्षमाणा त्वां तार्क्ष्यचञ्चुकोटिनिपातितम् ।
त्वद्दुःखदुःखिता नूनमास्ते सा जननी तव ॥२९॥

वृद्धा—( सास्रम् ) । (क) धण्णा क्खु सा जणणी, जा गरुडमुहपड़िदस्स अक्खदसरीरस्स ज्जेव्व पुत्तअस्स मुहं पेक्खिस्सदि ।

शङ्खचूडः—अम्ब ! सत्यमेवैतत्, यदि कुमारः स्वस्थो भविष्यति ।

---

( क ) धन्या खलु सा जननी, या गरुडमुखपतितस्याक्षतशरीरस्यैव पुत्रकस्य मुखं प्रेक्षिष्यते ।

---

यदानरूपां कीर्त्तिं यशो गायन्तु कीर्त्तयन्तु । आद्यचरणे—निभशब्दस्य सादृश्यार्थकत्वादुपमा । द्वितीयचरणे—इवशब्दसद्भावाद्वाच्योत्प्रेक्षा । एकस्यैवोरगयुवतिरूपकर्तृकारकस्य वह—उप × लक्ष—गै—धातुवाच्यक्रियास्वन्वयाद्दीपकञ्चेति त्रयाणामिह संस्थितिः । वृत्तञ्च स्रग्धरानाम ॥२८॥

अनुमोदामहे = अनुमन्यामहे । दृढसमाधानः = दृढं निश्चितं समाधानं प्रतिज्ञा यस्य सः दृढप्रतिज्ञ इत्यर्थः ।

मातरम् = पुत्राऽनिष्टशङ्कयाऽतिवैक्लव्यवतीमित्यर्थः ।

नायको निजमातृपीडावलोकनाच्छङ्खचूडमातृपीडां सम्भावयति—उत्प्रेक्षमाणेति । तार्क्ष्यस्य गरुडस्य चञ्चुकोटौ त्रोट्यग्रे निपातितं निक्षेपितम् ( यद्वा ) तार्क्ष्यस्य चञ्चुकोट्या निपातितम् उत्कृत्तम् त्वाम् उत्प्रेक्षमाणा सम्भावयन्ती सा तव जननी माता त्वद्दुःखदुःखिता तव शोकेनार्त्ता ( सती ) आस्ते तिष्ठति नूनं मन्ये । अत्रोत्प्रेक्षाऽलङ्कारः । अनुष्टुप्वृत्तम् ॥२९॥

वृद्धाया वचो निशम्य शङ्खचूडः समुचितमुत्तरयति—अम्बेत्यादि । हे अम्ब ! तव पुत्रस्य जीवितत्वे सत्येव मामवलोकिष्यते जननी नान्यथेति भावः ।

नायकः—( वेदनां नाटयन् )। अहह ! परार्थसम्पादनरसाक्षेपादेतावतीं वेलां मया न लक्षिताः; सम्प्रति तु मां बाधितुमारब्धा मर्मच्छेदिन्यो वेदनाः। ( मरणावस्थां नाटयति )।

जीमूतकेतुः—( ससम्भ्रमम् )। हा वत्स ! किमेवं करोषि ?

वृद्धा—(क) हा ! किं णु क्खु एव्वं बददि ? ( सोरस्ताड़म् )। परित्ताअह परित्ताअह। ऐसो क्खु मे पुत्तओ बिवज्जइ।

मलयवती—(ख) हा अज्जउत्त ! परिच्चइदुकामो विअ लक्खीअसि।

नायकः—( अञ्जलिं कर्त्तुमिच्छन् )। शङ्खचूड़ ! समानय मे हस्तौ।

शङ्खचूडः—( तथा कुर्वन् )। कष्टम् !! अनाथीकृतं जगत्।

---

( क ) हा ! किं नु खल्वेवं वदति ? परित्रायध्वं परित्रायध्वम्। एष खलु मे पुत्रको विपद्यते।

( ख ) हा आर्य्यपुत्र ! परित्यक्तकाम इव लक्ष्यसे।

---

परार्थेति—परार्थस्य परप्रयोजनस्य नागत्राणात्मकस्येत्यर्थः। सम्पादने साधने (जायमानस्य) रसस्याऽनुरागस्य आक्षेपात् आकर्षणात् चेतसोऽन्यविषयेभ्यो निवर्तनादित्यर्थः। ( आक्षेपो भर्त्सनाकृष्टिकाव्यालङ्कृतिषु स्मृत इति विश्वः )। एतावतीं वेलाम् = एतावत्कालपर्य्यन्तमित्यर्थः। ( कालाध्वनोरिति द्वितीया )। न लक्षिताः = नानुभूताः। मर्मच्छेदिन्यः = जीवघातिन्यः। वेदनाः = पीडाः। नाटयति = अभिनयति।

ससम्भ्रमम् = सभयं—सादरं—ससत्वरं वा यथा तथेत्यर्थः। अर्थत्रये खलु सम्भ्रमशब्दः। तदुक्तं मेदिनीकारेण-(सम्भ्रमः साध्वसेऽपि स्यात्संवेगादरयोरपीति)।

किं नु खलु = निपातद्वयमिदं प्रश्नाऽनुनयार्थकम्। सोरस्ताडम् = उरस्ताडेन सहितं यथा तथा (क्रियाविशेषणमिदम्) वक्षःस्थलं ताडयित्वेत्यर्थः। परित्रायध्वं परित्रायध्वम्—शोकातिशये द्विरुक्तिः।

परित्यक्तुकामः = परिवर्जितुमनाः। ( अस्मानिति शेषः )।

समानय = संयोजय।

तथा कुर्वन् = हस्तद्वयं संयोजयन्नित्यर्थः। अनाथीकृतम् = नाथहीनं कृतमित्यर्थः।

नायकः—( अर्द्धोन्मीलितचक्षुः पितरं पश्यन् )। तात ! अम्ब ! अयं मे पश्चिमः प्रणामः ।—

गात्राण्यमूनि न वहन्ति सचेतनत्वं
श्रोत्रं स्फुटाक्षरपदां न गिरं शृणोति ।
कष्टं निमीलितमिदं सहसैव चक्षुः
हा तात ! यान्ति विवशस्य ममासवोऽमी ॥३०॥

( अथवा—"संरक्षता पन्नगम्—" इत्यादि पठित्वा पतति )।

वृद्धा—(क) हा पुत्त ! हा वच्छ ! हा गुरुअणवच्छल ! कहिंसि ? देहि मे पड़िवअणं ।

जीमूतकेतुः—हा वत्स जीमूतवाहन ! हा प्रणयिजनवल्लभ ! हा सर्वगुणनिधे ! क्वासि ? देहि मे प्रतिवचनम् । (हस्तमुत्क्षिप्य) । कष्टं भो कष्टम् !!—

---

( क ) हा पुत्र ! हा वत्स ! हा गुरुजनवत्सल ! क्वासि ? देहि मे प्रतिवचनम् ।

---

पश्चिमः = अन्तिमः ।

नायको निजकृतप्रणामस्य पश्चिमत्वे हेतुं दर्शयति—गात्राणीति । अमूनि इमानि गात्राणि शरीराणि सचेतनत्वं स्पर्शज्ञानादिरूपचेतनालक्षणवत्त्वं न वहन्ति नानुभवन्तीत्यर्थः । ( एतेन गमनोन्मुखत्वादवयवानां जाड्यं सूचितम् ) श्रोत्रं कर्णद्वयं स्फुटानि सुव्यक्तानि अक्षरपदानि सुबन्त-तिङन्तात्मकवर्णरूपाणि यस्यां तथोक्तां गिरं वाणीं न शृणोति नाकर्णयति । कष्टम् खेदः इदं चक्षुर्नेत्रम् सहसैव सपद्येव निमीलितं मुद्रितं ( भवतीति शेषः ) । हा तात ! पितः ! विवशस्य व्यथाऽऽकुलीभूतस्य मम अमी असवः प्राणा यान्ति ( शरीरात् ) बहिर्गच्छन्ति । शरीरतः प्राणविनिर्गमने आद्यपादत्रयोपात्तहेतूनां वाक्यार्थगतत्वाद्वाक्यार्थहेतुकं काव्यलिंगम् । वसन्ततिलकं वृत्तम् ॥३०॥

प्रतिवचनम् = उत्तरम् । उत्क्षिप्य = उद्र्ध्वं कृत्वेत्यर्थः । ( विलपनस्वभाव एषः ) ।

निराधारं धैर्यं कमिव शरणं यातु विनयः ?
क्षमः क्षान्तिं वोढुं क इह ? विरता दानपरता ?
हतं सत्यं सत्यं व्रजतु च कृपा क्वाद्य कृपणा ?
जगज्जातं शून्यं त्वयि तनय ! लोकान्तरगते ॥३१॥

मलयकेतुः—(क) हा अज्जउत्त ! कहं परिच्चइअ गदोसि ? अदिणिग्घिणे मलअवदि ! किं तुए पेक्खिदव्वं ? जा एत्तिअं वेल जीबिआसि ।

शङ्खचूडः—हा कुमार ! केमं प्राणेभ्योऽपि वल्लभं जनं परित्यज्य गम्यते ? तदवश्यमन्वेति त्वां शङ्खचूडः ।

---

(क) हा आर्य्यपुत्र ! कथं परित्यज्य गतोऽसि ? अतिनिर्घृणे मलयवति ! किं त्वया प्रेक्षितव्यम् ? या एतावद्वेलां जीविताऽसि ।

---

लोकान्तरं गन्तुमुत्सुकं पुत्रं विलोक्य जीमूतकेतुर्विलपति—निराधारमिति । हे तनय ! पुत्र ! त्वयिलोकान्तरगते परलोकमुद्दिश्य प्रस्थिते सति धैर्यं धीरता निराधारं निरवलम्बम् । न कोप्येतादृशो जनोऽस्ति यमिदानीं धैर्यमाश्रयेदित्यर्थः । तथा—विनयो नम्रता च कमिव कं जनं शरणं रक्षकं यातु प्राप्नोतु (शरणं गृह· रक्षित्रोरित्यमरः) । न कोऽप्यधुना त्वादृशो विनयी वर्तत इति भावः । तथा—इहाऽस्मिन् जगति कः (जनः) क्षान्ति सहनशीलतां वोढुं प्राप्तुं क्षमो योग्यो न कोऽपीत्यर्थः । तथा—दानपरता दातृत्वं विरता विश्रान्ता रहितेति यावत् । तथा—सत्यं तथ्यं सत्यं यथार्थतः हतं विनष्टम् । तथा—कृपणा दैन्यमुपगता शोचनीये—त्यर्थः । कृपा दया अद्य क्व व्रजन्तु गच्छन्तु । अलमधिककथनेन जगत् संसारः शून्यं जातम् । सकलगुणास्पदस्य भवतोऽभवादिति भावः । जगतः शून्यत्वे लोकान्तरगमनस्य हेतोः पदार्थत्वात्पदार्थहेतुकं काव्यलिंगम् । धैर्यादेर्निराधारत्वादिकार्याणां लोकान्तरगमनहेतुना समर्थनादर्थान्तरन्यासः । न हि त्वादृशोऽन्यः कश्चिदित्युक्त्ये—दात्तालंकारोऽपि ध्वन्यते । वृत्तञ्चेदं शिखरिणी नाम ॥३१॥

अतिनिर्घृणे ! = अतिदयाहीने ! ( कृपादयाऽनुकम्पा स्यात् कारुण्यं करुणा घृणेत्यमरः ) वेलाम् = कालम् । यावच्छब्दमध्याहृत्य द्वितीयोपपादनीया ।

वल्लभम् = प्रियम् । अन्वेति = अनुगच्छति ।

गरुडः—कष्टम् !! उपरतोऽयं महात्मा । तत् किमिदानीं करोमि ?

वृद्धा—(सास्रमूर्द्ध्वमवलोक्य) । (क) भअवंतो लोअपाला ! कहंपि अमिदेण सेंचिअ पुत्तअं मे जीआवेहि ।

गरुडः—( सहर्षमात्मगतम् ) । अये ! अमृतसङ्कीर्त्तनात् साधु स्मृतम् । मन्ये प्रनष्टमयशः । तद् यावत् त्रिदशपतिमभ्यर्थ्य तद्विसृष्टेनामृतवर्षेण न केवलं जीमूतवाहनम्, एतानपि पूर्वभक्षितानस्थिशेषानुरगपतीन् प्रत्युज्जीवयामि । यदि न ददात्यसौ तदाऽहम्—

पक्षैः पीत्वाऽम्बुनाथं पटुतरजवनैः प्रेर्य्यमाणः समीरैः
नेत्राग्निप्लोषमूर्च्छाविधुरविनिपतत्सानलद्वादशार्कः ।
चञ्च्वा सञ्चूर्ण्य शक्राशनिधनदगदाप्रेतलोकेशदण्डान्
आजौ निर्जित्य देवान् क्षणममृतमयं वर्षमभ्युत्सृजामि ॥ ३२ ॥

तदयं गतोऽस्मि ।

---

( क ) भगवन्तो लोकपालाः ! कथमप्यमृतेन सिक्त्वा पुत्रकं मे जीवय ।

---

उपरतः = मृतः ।

सहर्षमिति । नायकमातृमुखोच्चरितममृतपदमाकर्ण्य जातस्मृतेर्गरुडस्यामृतसेचनान्नायकजीवनसम्भावनया हर्ष इति भावः । मन्ये = सम्भावयामि । प्रनष्टम् = विलुप्तम् । त्रिदशपतिम् = इन्द्रम् । अभ्यर्थ्य = याचित्वा । तद्विसृष्टेन = तद्दत्तेन । न ददाति = (अमृतमिति शेषः) । असौ=इन्द्रः ।

इन्द्रादमृतालाभे गरुडो निजकर्त्तव्यं निश्चिनोति—पक्षैरिति । पटुतरजवनैः निपुणवेगवद्भिः अतएव समीरैः वायुसदृशद्रुतगमनशीलैरित्यर्थः पक्षैः अम्बुनाथं समुद्रं पीत्वा ! तथा—नेत्राग्निर्वह्निवत्प्रज्वलितनेत्रज्योतिस्तेन यः प्लोषो दाहस्तज्जन्या या मूर्च्छा मोहस्तया विधुरा वैक्लव्यं प्राप्ताः विनिपतन्तः स्वस्थानाच्च्यवन्तः सानलाः सवह्नयो द्वादश अर्काः सूर्याः यस्य तादृशः ( अहम् ) । शक्राशनिरिन्द्रवज्रं धनदगदा कुबेरगदा प्रेतलोकेशदण्डः कृतान्तदण्डः एतान् चञ्च्वा त्रोट्या संचूर्ण्य आमर्द्य आजौ संग्रामे देवान् सर्वान् सुरानित्यर्थः । निर्जित्य पराभूय क्षणं मुहूर्त्तमात्रम् अमृतमयं वर्षं वृष्टिम् अभ्युत्सृजामि विदधामि । एकस्यैवाऽहमितिकर्तृकारकस्य पा-चूर्ण-जि-सृजधातुवाच्यक्रियास्वन्वयाद्दीपकाऽलंकारः । स्रग्धरा वृत्तम् ॥ ३२ ॥

(इति साटोपं परिक्रम्य निष्क्रान्तः)।

जीमूतकेतुः—वत्स शङ्खचूड़ ! किमद्यापि स्थीयते ? समाहृत्य दारूणि पुत्रस्य मे विरचय चिताम्; येन वयमप्यनेन सहैव गच्छामः।

वृद्धा—(क) पुत्त संखचूड़ ! लहुं सज्जेहि। दुक्खं, अम्हेहिं विणा भाउणो दे चिट्ठदि।

शङ्खचूडः—(सास्रम्) यदाज्ञापयन्ति गुरवः। नन्वग्रग एवाहं युष्माकम्। (उत्थाय चितारचनां कृत्वा)। तात ! अम्ब ! सज्जीकृतेयं चिता।

जीमूतकेतुः—कष्टं भोः ! कष्टम्।

उष्णीषः स्फुट एव मूर्धनि विभात्यूर्णेयमन्तर्भ्रुवो-
श्चक्षुस्तामरसानुकारि हरिणा वक्षःस्थलं स्पर्द्धते।
चक्राङ्कौ चरणौ तथापि हि कथं हा वत्स ! मद्दुष्कृतै-
स्त्वं विद्याधरचक्रवर्त्तिपदवीमवाप्य विश्राम्यसि ॥३३॥

जीमूतकेतुः—देवि ! किमपरं रुद्यते ? तदुत्तिष्ठ, चितायामारोहामः।

सर्वे—(उत्तिष्ठन्ति)।

मलयवती—(बद्धाञ्जलिरूद्ध्वं पश्यन्ती)। (ख) भअवदि गोरि ! तुए आणत्तं, जहा—"विज्जाहरचक्कवट्टी भट्टा दे भविस्सदि" त्ति, ता कहं मम मंदभग्गाए किदे तुमं अलीअवअणा संवुत्ता ?

(ततः प्रविशति ससम्भ्रमा गौरी)।

गौरी—महाराज ! जीमूतकेतो ! न खलु साहसमनुष्ठातव्यम्।

---

(क) पुत्र शङ्खचूड ! लघु सज्जय। दुःखम्, अस्माभिर्विना भ्राता ते तिष्ठति।

(ख) भगवति गौरि ! त्वया आज्ञप्तं, यथा—"विद्याधरचक्रवर्त्ती भर्त्ता ते भविष्यति" इति; तत् कथं मम मन्दभाग्यायाः कृते त्वमलीकवचना संवृत्ता ?

---

साटोपम् = साऽभिमानम्। स्थीयते=निर्व्यापारमास्यते। समाहृत्य=राशीकृत्य। दारूणि = काष्ठानि। चिताम्=शवदाहार्थंकाष्ठचुल्हीम्।

लघु=शीघ्रम्। सज्जय = विरचय।

अग्रगः = पुरोगामी। भवद्भ्यः प्रागेवाग्नावात्मानं धक्ष्यामीति भावः।

अपरम् = अधिकम्।

बद्धाञ्जलिः = कृताञ्जलिः। आज्ञप्तम् = आदिष्टम्। कृते = निमित्तम्। अलीकवचना = असत्यवादिनी।

जीमूतकेतुः—अये ! कथममोघदर्शना गौरी !!

गौरी—( मलवतीमुद्दिश्य ) । वत्से ! कथमहमलीकवादिनी भवेयम् ? ( नायकमुपसृत्य कमण्डलुजलेनाभ्युक्ष्य ) ।

निजेन जीवितेनापि जगतामुपकारिणः ।
परितुष्टाऽस्मि ते वत्स ! जीव जीमूतवाहन ! ॥३४॥

नायकः—( उत्तिष्ठति ) ।

जीमूतकेतुः—(सहर्षम्) । देवि ! दिष्ट्या वर्द्धसे । प्रत्युज्जीवितो वत्सः ।

वृद्धा—( क ) भअवदीए पसादेण ।

नायकः—(गौरीं दृष्ट्वा बद्धाञ्जलिः) । अये ! कथममोघदर्शना भगवती !!

अभिलषिताखिलवरदे ! प्रणिपतितजनार्तिहारिणि ! शरण्ये ! ।
चरणौ नमाम्यहं ते विद्याधरवन्दिते ! गौरि ! ॥३५॥

( इति गौर्याः पादयोः पतति ) ।

सर्वे—( ऊद्ध्वं पश्यन्ति ) ।

---

( क ) भगवत्याः प्रसादेन ।

---

अये ! सम्भ्रमार्थेऽव्ययमिदम् । अमोघदर्शना = सफलदर्शना ।

नायकोज्जीवनाय तदुपरि कमण्डलुजलमभ्युक्षन्ती गौरी तम्प्रत्याह—निजेनेति । हे वत्स ! जीमूतवाहन ! निजेन स्वकीयेन जीवितेन प्राणेन जगतां संसाराणाम् उपकारिणो हितसाधकस्य ते तव परितुष्टास्मि प्रसन्नीभूताऽस्मि ( तस्मात् ) जीव सप्राणो भव । गौर्याः परितुष्टत्वे जगदुपकारित्वस्य हेतोर्वाक्यगतात्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । अनुष्टुप् वृत्तम् ॥३४॥

प्रत्युज्जीवितो नायको गौरीं भगवतीं विलोक्य बद्धाञ्जलिः सन् प्रणमति—अभिलषितेति । अभिलषितम् ईप्सितम् अखिलं समग्रं वरं (फलं) ददाति या सा तथोक्ता तत्सम्बुद्धौ । तथा—प्रणिपतितानां प्रणतानां जनानाम् आर्त्ति पीडां हर्त्तुं शीलमस्यास्तथोक्ता तत्सम्बुद्धौ । तथा-शरण्ये ! शरणागतरक्षिणि ! तथा – विद्याधरैस्तदाख्यदेवयोनिविशेषैर्वन्दिते स्तुते ! हे गौरि ! अहं ते तव चरणौ पादौ नमामि । परिकराख्योऽत्राऽलङ्कारः । वृत्तञ्चेदमार्या नाम ॥३५॥

जीमूतकेतुः—अये ! कथमनभ्रा वृष्टिः ! ! भगवति ! किमेतत् ?

गौरी—राजन् जीमूतकेतो ! जीमूतवाहनं प्रत्युज्जीवयितुमेतांश्चास्थिशेषानुरगपतीन् समुपजातपश्चात्तापेन पक्षिपतिना देवलोकात् इयममृतवृष्टिः पातिता । ( अङ्गुल्या निर्दिश्य )। किं न पश्यति भवान् ?—

सम्प्राप्ताः शङ्खचूडं स्फुटमणिकिरणैर्भासुरैरुत्तमाङ्गैः
जिह्वाकोटिद्वयेन क्षितिममृतरसास्वादलोभाल्लिहन्तः ।
सम्प्रत्याबद्धवेगा मलयगिरिसरिद्वारिपूरा इवैते
वक्रैः प्रस्थानमार्गैर्विषधरपतयस्तोयराशिं विशन्ति ॥३६॥

( नायकमुद्दिश्य )। वत्स जीमूतवाहन ! न त्वं जीवितदानमात्रस्यैव योग्यः, तदयमपरस्ते प्रसादः ।

---

अनभ्रा = अविद्यमानोऽभ्रो मेघो यस्यां तादृशी । मेघं विनैवेत्यर्थः । ( 'अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहक' इत्यमरः ) ।

अस्थिशेषान् = ( अस्थीन्येव शेषाण्यवशेषाणि येषां तान् ) अस्थिमात्रावशिष्टानित्यर्थः । समुपजातपश्चात्तापेन = सञ्जातानुतापेन । पक्षिपतिना = गरुडेन । देवलोकात् = स्वर्गात् । अमृतवृष्टिः = पीयूषवर्षणम् ।

नायकम्प्रति पीयूषवृष्टेः सार्थक्यं दर्शयति—सम्प्राप्ता इति । शङ्खचूडं सम्प्राप्ताः शङ्खचूडेन सङ्गताः तथा—स्फुटमणिकिरणैः व्यक्तफणस्थमणिप्रभैः अत एव भासुरैर्दीप्यमानैः उत्तमाङ्गैः ( उपलक्षिताः )। तथा—जिह्वाकोटिद्वयेन जिह्वाद्वयाग्रभागेन अमृतरसास्वादलोभात् सुधारसपानेच्छया क्षितिं पृथ्वीं लिहन्त आस्वादयन्तः । तथा—मलयगिरेर्मलयाचलस्य ( सम्बन्धिनीनां ) सरितां नदीनां वारिपूरा जलप्रवाहा इव आबद्धवेगा वेगवन्तः एते दृश्यमाना विषधरपतयो नागेन्द्रा वक्रैः क्रूरैः प्रस्थानमार्गैः गमनाध्वभिः सम्प्रति तोयराशिं समुद्रं विशन्ति गच्छन्ति । मृतोरगानां जीवनलाभपूर्वकसमुद्रप्रवेशात्मकाद्भुतपदार्थस्य प्रत्यक्षायमाणत्वाद् भाविकाऽलङ्कारः । शङ्खचूडपदे सहोक्तिः । इवशब्दसद्भावादुपमा चेति संसृष्टिरेतेषाम् । स्रग्धरा वृत्तम् ॥३६॥

त्वम् = महत्त्वविशिष्टः । जीवितदानमात्रस्यैव = प्रत्युज्जीवनात्मकानुग्रहस्यैव । योग्यः = अधिकारी । अपरः = अन्यः । प्रसादः = अनुग्रहः ।

हंसांसाहतहेमपङ्कजरजःसम्पर्कपङ्कोक्षितै-
रुत्पन्नैर्मम मानसादुपनतैस्तोयैर्महापावनैः ।
स्वेच्छानिर्मितरत्नकुम्भनिहितैरेषाऽभिषिच्य स्वयं
त्वां विद्याधरचक्रवर्तिनमहं प्रीत्या करोमि क्षणात् ॥३७॥

अपिच ।—

अग्रेसरीभवतु काञ्चनचक्ररत्न-
मेष द्विपश्च धवलैर्दशनैश्चतुर्भिः ।
श्यामो हरिर्मलयवत्यपि चेत्यमूनि
रत्नानि मे समवलोकय चक्रवर्त्तिन् ! ॥३८॥

अपिच—आलोक्यन्ताममी शारदशशाङ्कनिर्मलबालव्यजनहस्ता मणिमरीचिरचितेन्द्रचापभक्तयो भक्तिनमितपूर्वार्द्धकायाः प्रणमन्ति

---

अपरानुग्रहफलं दर्शयति गौरी—हंसेति । एषा साक्षाद्भवद्भिरिह दृश्यमानेत्यर्थः । अहम् ( गौरी ) । स्वयम् आत्मनैव निजकरेणैवेति तदाशयः । प्रीत्या प्रसन्नतया क्षणात् क्षणमात्रेण मम मानसात् मन्मन एव सरोवरविशेषस्तस्मादित्यर्थः उत्पन्नैर्जातैः । हंसांसैर्हंसस्कन्धैराहतानि ताडितानि यानि हेमपङ्कजानि स्वर्णकमलानि तेषां रजः सम्पर्कः परागसम्बन्ध एव पङ्कः कर्दमस्तेनोक्षितैः सिक्तैः, उपनतैर्मदीयेच्छाऽनुसारेण प्राप्तैः, स्वेच्छया निर्मिता ये रत्नकुम्भा रत्नघटास्तेषु निहितैः स्थापितैः, महापावनैरतिपवित्रैस्तोयैर्जलैस्त्वाम् अभिषिच्य विद्याधरचक्रवर्तिनं विद्याधरजातीनामधीश्वरं करोमि सम्पादयामि । आद्यचरणेऽनुप्रासः । तोयानामतिपावनत्वे हेतुभूतस्य देवीमानसोत्पन्नत्वस्य पदार्थत्वात्काव्यलिङ्गम् । मानसे मानसत्वारोपाद्रूपकम् । इत्यलङ्कारत्रयस्य संसृष्टिः । शार्दूलविक्रीडितम् ॥३९॥

अग्रेसरी भवत्विति । हे चक्रवर्तिन् ! मण्डलेश्वर ! काञ्चनचक्ररत्नं स्वर्णमयचक्रश्रेष्ठम् अग्रेसरी भवतु तवाग्रे तिष्ठतु । धवलैः स्वच्छैश्चतुर्भिः दशनैर्दन्तैः ( उपलक्षितः ) एष द्विप ऐरावतः । श्यामो हरिः कृष्णवर्णोऽश्वः । अपि च मलयवती राजलक्ष्मीरूपेत्यर्थः । अमूनि मे मम रत्नानि विलोकय पश्य । काञ्चनचक्रे रत्नत्वारोपाद्रूपकम् । तदनुजीवितोऽलौकिकसमृद्धिवर्णनादुदात्तालङ्कारश्च । वसन्ततिलकं नाम छन्दः ॥३८॥

आलोक्यन्ताम् = दृश्यन्ताम् । शारदशशाङ्कनिर्मलबालव्यजनहस्ता = शरच्चन्द्रस्वच्छचामरकरा । मणिमरीचिरचितेन्द्रचापभक्तयः=रत्नकिरणजनितशक्रधनूरचनाः ।

नमन्ति च मतङ्गहतकादयो विद्याधरपतयः। तदुच्यतां, किं ते भूयः प्रियमुपकरोमि ?

नायकः—अतः परमपि प्रियमस्ति ?—

त्रातोऽयं शङ्खचूडः पतगपतिभयाद्वैनतेयो विनीतः
तेन प्राग्भक्षिता ये विषधरपतयो जीवितास्तेऽपि सर्वे।
मत्प्राणाऽऽप्त्या च मुक्ता न गुरुभिरसवश्चक्रवर्त्तित्वमाप्तं
साक्षात् त्वं देवि! दृष्टा प्रियमपरमतः किं पुनः प्रार्थ्यसे यत् ?॥३९॥

तथाऽपीदमस्तु [ भरतवाक्यम् ]।—

वृष्टिं हृष्टशिखण्डिताण्डवकृते मुञ्चन्तु काले घनाः
कुर्वन्तु प्रतिरूढसन्ततहरिच्छस्योत्तरीयां क्षितिम्।
चिन्वानाः सुकृतानि वीतविपदो निर्मत्सरैर्मानसैः
मोदन्तां सततञ्च बान्धवसुहृद्गोष्ठीप्रमोदाः प्रजाः ॥४०॥

---

भक्तिनमितपूर्वार्द्धकायाः = भक्तिनम्रीकृतकायार्द्धपूर्वभागाः। प्रणमन्ति=चक्रवर्त्तित्वादिति भावः।

देव्यनुग्रहेण सकलेप्सितलाभादन्यदीप्सितं नास्तीति गौरीम्प्रत्याह नायकः—त्रात इति। अयं शङ्खचूडः पतगपतिभयाद् गरुडसाध्वसात् त्रातो रक्षितः। वैनतेयो गरुडो विनीतः शिक्षितः। तेन गरुडेन प्राग्भक्षिता पूर्वमशिता ये विषधरपतयो भुजगेन्द्राः ते सर्वेऽपि जीविताः पुनः सजीवीकृताः। मत्प्राणाप्त्या मदीयजीवनलाभेन, गुरुभिः पित्रादिभिश्च असवः प्राणा न मुक्तास्त्यक्ताः। चक्रवर्त्तित्वं विद्याधरमण्डलेश्वरत्वम् आप्तम् प्राप्तम्। हे देवि! मातः! त्वं साक्षात् प्रत्यक्षं दृष्टा विलोकिता ( मयेति शेषः )। अतः परं किं प्रियम् ( अस्तीति शेषः )। यद् ( वस्त्विति शेषः )। प्रार्थ्यसे याच्यसे ( मया त्वमिति शेषः )। अत्र वाक्यार्थहेतुकं काव्यलिङ्गम् ॥३९॥

भरतवाक्यद्वाराऽऽशीर्वचनमाह—घना मेघाः काले उपयुक्तसमये हृष्टशिखण्डिताण्डवकृते परितुष्टमयूरनर्तनाय वृष्टिं वर्षणं मुञ्चन्तु त्यजन्तु। तथा—क्षितिं पृथ्वीं प्रतिरूढं समुत्पन्नं सन्ततं निरन्तरं हरिद् हरिद्वर्णं यत् शस्यं धान्यादि तदेवोत्तरीयं शरीरावरणवस्त्ररूपं यस्यास्तथोक्तां कुर्वन्तु। तथा—वीतविपदो विगतक्लेशा निर्मत्सरैर्मात्सर्यरहितैर्मानसैः सुकृतानि सत्कार्याणि चिन्वाना अर्जयन्त्य,:

अपि च—

शिवमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः।
दोषाः प्रयान्तु नाशं सर्वत्र सुखी भवतु लोकः ॥४१॥

[ इति निष्क्रान्ताः सर्वे ]।

इति पञ्चमोऽङ्कः।

समाप्तं नाटकमिदम् ॥

---

तथा—बान्धवसुहृद्गोष्ठी प्रमोदाः बान्धवानां पित्रादीनां सुहृदां मित्राणां च गोष्ठीषु समाजेषु प्रमोदाः प्रकृष्टानन्दभाजश्च सत्यः सततं सर्वदा मोदन्तां संतुष्यन्तु। मुच-क्त-धातुवाच्यक्रियाद्वयस्य युगपदभिधानात्समुच्चयालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥४०॥

१४४ किञ्चिद्विशेषं प्रार्थयति नायको गौरीम्प्रति—शिवमिति। सर्वजगतां सर्वेषां चराऽचरात्मकानामित्यर्थः। शिवं कल्याणम् अस्तु भवतु। भूतगणाः सर्वे प्राणिनः परहितनिरताः पररक्षणोद्यता भवन्तु। दोषाः परानिष्टसम्पादनात्मका इत्यर्थः। नाशं विलयं प्रयान्तु गच्छन्तु। तथा—लोको जनः सर्वत्र भुवनचतुर्दशके सुखी भवतु।

इति मैथिलवंशोद्भवठक्कुरोपनामकश्रीकनकलालशर्म्मणा विरचितायां नागानन्दव्याख्यायां पीयूषवर्षिण्यां पञ्चमोऽङ्कः समाप्तः।

---

